# ॥ श्रीकामाक्षीसंक्षिप्तवर्णनम् ॥




( कामरूपदेशे कामाक्षीमूलपीठं प्रसिद्धमस्ति ॥ )

अथ 'श्रीकामाक्षीसंक्षिप्तवर्णनम्.' कालिकापुराणे श्रीभगवानुवाच—कामार्थमागता यस्मान्मया सार्द्धं महागिरौ । कामाख्या प्रोच्यते देवी नीलकूटे रहोगता । १ ॥ कामदा कामिनी कामा कान्ता कामाङ्गदायिनी । कामाङ्गनाशिनी यस्मात्कामाख्या तेन चोच्यते । २ ॥ एका समस्तजगतां प्रकृतिः सा यतस्ततः । ब्रह्मविष्णुशिवैर्देवैः स्तुता सा जगतां प्रसूः । ३ ॥ तत्र पूर्वो ब्रह्मशैलः श्वेत इत्युच्यते बुधैः । मद्रूपधारी सशैलस्तु नील इत्युच्यते तथा । ४ ॥ अजीर्णपत्रः सुच्छायो वृक्षस्तत्र तु संस्थितः । आम्रातकः कल्पवृक्षः कल्पवल्लीसमन्वितः । ५ ॥ पीठे तु सिद्धगङ्गाख्या स्वयं गङ्गा समुत्थिता । आम्रातकस्य निकटे मम प्रीतिविवृद्धये । ६ ॥ तत्रत्या पृथिवी सर्वा देवीरूपा स्मृता बुधैः । नातः परतरं स्थानं पूज्यमस्ति जगत्त्रये । ७ ॥ इति श्रीकामाक्षीसंक्षिप्तवर्णनम् ॥

(१) साम्प्रतं कामरूपदेशो 'मणिपूर' संस्थाननाम्ना प्रसिद्धः ॥

॥ श्रीः ॥

# ॥ अथ प्रस्तावनिका ॥

। प्रथमद्वितीयतृतीयचतुर्थावृत्तीनां प्रस्तावनिका ।

ये नाम केचिदिह नः प्रथयन्त्यवज्ञां जानन्तु ते किमपि तान् प्रति नैष यत्नः । उत्पत्स्यते हि मम कोपि समानधर्मा कालो ह्ययं निरवधिर्विपुला च पृथ्वी । १ ॥ सर्वथा व्यवहर्तव्ये कुतो ह्यवचनीयता । यथा स्त्रीणां तथा वाचां साधुत्वे दुर्जनो जनः । २ ॥ अङ्गीकृतं सुकृतिनः परिपालयन्ति विघ्नैः पुनः पुनरपि प्रतिहन्यमानाः । इति न्यायमनुसृत्य स्वशाखीयानां हितेच्छया तद्वत् यथाशक्ति आर्यधर्मविशेषप्रवृत्त्यर्थं मया—

२. श्रीशुक्लयजुर्वेदीयमाध्यन्दिनवाजसनेयाह्निकसूत्रावलिर्नामायं ग्रन्थोऽनेकग्रन्थेभ्यः सारमुद्धृत्य कृतः। तेच ग्रन्थाः—याज्ञवल्क्यशिक्षादिसूत्राणि, कात्यायनसूत्राणि, पारस्करगृह्यसूत्राणि, शुक्लयजुर्वेदसंहिता, नागोजीभट्टकृतमाह्निकम्, आयुर्वेदः, पद्मनाभप्रयोगः, आचारमयूखः, धर्मप्रवृत्तिः, श्रौतोल्लासः, स्मार्तोल्लासः, हलायुधकृतं ब्राह्मणसर्वस्वम्, बृहदारण्यकोपनिषत्, आचारार्कः, निर्णयसिन्धुः, मदनपारिजातः, संस्कारभास्करः, चतुर्विंशतिस्मृतयः, विश्वामित्रकल्पः, इत्यादयः। तत उषःकालादारभ्य रात्रौ शयनकालपर्यन्तं दिवसस्याष्टसु भागेषु यस्मिन्यस्मिन्भागे यद्यत्स्नानसन्ध्याद्यनुष्ठानं शास्त्रतः कर्तव्यत्वेन विहितं तत्र मया मूलग्रन्थं प्रमाणत्वेन गृहीत्वा झटिति बोधार्थं तदेव प्रयोगादिप्रदर्शनेन स्पष्टीकृतम् । तथा चाह्निकप्रकरणेऽनुक्तमप्यावश्यकत्वेन सङ्ग्रहणीयं स्त्रीणामाह्निकम्, प्रातःस्नानप्रयोगः, नवकण्डिकाश्राद्धसूत्रकम्, मृत्युञ्जयजपविधिः, हेमाद्रिकृतः स्नानसङ्कल्पः, उत्सर्जनोपाकरणप्रयोगः, सप्रमाणं यज्ञपात्रकरणम्, वाजसनेयब्राह्मणानां शान्तिसूक्तपाठः,

याज्ञवल्क्यचरितम्, अन्यदपि तत्र तत्रोपयुक्तं तत्तत्स्थले परिशिष्टप्रकरणेऽपि संगृहीतम्।

३. अस्यां चतुर्थावृत्तावपि दक्षिणद्वारनिर्णयनामकं प्रकरणं परिशिष्टे प्रदर्शितम्। किञ्च नित्यकर्मप्रतिपादकत्वेन तत्र संगृहीतम्। अस्यां चतुर्थावृत्तावपि पार्षदगणाः, संक्षिप्तदेवपूजाप्रयोगः, संक्षेपतो माध्याह्नसन्ध्याप्रयोगः, संक्षेपतो दिवाभोजनप्रयोगः, संक्षेपतः सायंसन्ध्याप्रयोगः, सायं पञ्चोपचारदेवपूजाप्रयोगः, भूतप्रेतव्याघ्रचौरादिभयदेहपीडादिनिवारणार्थं स्तोत्राणि तद्वदाऽत्मविद्याविचारोपयुक्तप्रकरणानीत्येतेषां सङ्ग्रहणं कृतम्।

४. अस्मिन्मित्रवर्यैः श्रीत्र्यम्बकक्षेत्रस्थकैलासवासिभिर्देवकुटे इत्युपनामककाकात्मजब्रह्मदेवशर्मभिः तथाच मुम्बापुरस्थमुद्गलोपाव्हैर्वामनात्मजैः पण्डितैरात्मारामशर्मभिस्तथा च मम सुहृद्वर्यैर्मुम्बापुरस्थवैद्योपनामकवासुदेवात्मजकेशव (केरोभट्ट) शर्मभिर्याः सोपयोगाः सविशेषाः सूचनाः कृतास्तासां बहुमानपुरस्सरमस्याः सूत्रावल्याश्चतुर्थावृत्तौ समावेशः कृतः। अपिच—

५. काशीक्षेत्रनिवासिना वे. सं. गान्धीत्युपनामधरविठ्ठलात्मजवैजनाथशर्मणा करवीरक्षेत्रनिवासिना वे. सम्पन्नेन पाठकोपाह्वेन ज्योतिर्विदात्मारामात्मजबालम्भट्टशर्मणेभिर्मम मित्रैः संशोधितेयं 'यजुर्वेदसंहिता' तदनुरोधेन मया पुनरपि प्रत्येकप्रयोगस्थमन्त्राणां सम्यग्रीत्या स्वरशोधनं च कृतम्।

६. अस्यां सूत्रावल्यां स्थूलाक्षरैः विन्यस्ता मन्त्रादयोऽवश्यं पठनीयाः। सूक्ष्माक्षरैस्तत्रतत्राङ्कितं तु मननीयं शास्त्रार्थजातमिति सुधीभिरूह्यम्। 'ꣳ', 'ꣳ,' 'य,' 'ष', एतादृशप्रकाराण्यक्षराणि सन्ति तेषां 'गु', 'गू' 'ज़', 'ख', इति यथासङ्ख्यमनुक्रमेणाक्षरोच्चारणं ज्ञेयम्॥

७. एवमस्याः सूत्रावल्याश्चतुर्थावृत्तिर्मया शुद्धीकृत्यान्यशाखीयविद्वद्द्विजजनानां स्वशाखीयजनानां च विनयपूर्वकं दृग्गोचर्यकारि। तंथाप्यस्याः शोधनसमयेऽनवधानाद् दृग्दोषाद्वा स्थलविशेषे क्वचिद्दोषा यदि दृक्पथमा-

पतेयुस्तदा सदयहृदयैर्नैसर्गिकगुणग्रहणसद्वृत्तैर्विद्वद्भिरयं ग्रन्थः संशोध्य सङ्ग्रहणीयः । चिरकालमाचारशीलानामिहामुत्र च सुखकारको भूयादिति चाशास्महे ॥

मुम्बापुर्याम्—
माघशुक्ले ११ दश्यां इन्दौ,
शके १८१७ मन्मथाब्दे.

पुरन्दरोपाह्वविठ्ठलात्मजो
वैद्यो नारायणशर्मा,
ग्रन्थकारः.

यदत्र स्खलितं किञ्चित्प्रमादेन भ्रमेण वा ।
तत्सर्वं शोधयन्त्वार्याः कस्य न स्खलितं मनः ॥



# अथ श्रीशुक्लयजुर्वेदीयमाध्यन्दिनवाजसनेयिना आह्निकसूत्रावल्याः अनुक्रमणिका ॥

विद्वज्जनानां अभिप्रायाः



## ॥ श्रीकामाक्षीकुलदेवतायै नमः ॥

---

### 'श्रीशुक्लयजुर्वेदीयमाध्यन्दिनवाजसनेयाह्निकसूत्रावली' बद्दल ग्रन्थकारास विद्वान-गृहस्थांकडून आलेले अभिप्राय.

यो माध्यन्दिननित्यकृत्यमुकुरः सूत्रावलीनामको
ग्रन्थः सङ्ग्रथितोऽङ्कितोऽर्पित इतः पूर्वं त्रिवारं मया ।
तं साग्रं सुविलोक्य भूसुरवरैः स्वीयाऽऽशया येऽर्पिता
मह्यं तानिह मुद्रयामि सुचिरं तेषां स्थितिः स्यादिति । १ ॥

१ त्वरितनिहतकंसं योगिहृद्याब्जहंसं यदुकुमुदसुचन्द्रं रक्षणे त्यक्ततन्द्रम् । श्रुतिजलनिधिसारं निर्गुणं निर्विकारं हृदय भज मुकुन्दं नित्यमानन्दकन्दम् । १ ॥ गोत्रे त्रिप्रवरे तु गौतममुनेर्माध्यन्दिनो **विट्ठलो** जातो यो विमले पुरन्दरशुभोपाह्वोऽन्नपूर्णापतिः । तस्यायं तनयो द्वितीय इह यो वैद्यस्तु **नारायणः** सन्नित्याह्निकमुज्ज्वलं वितनुते नानर्षिवाक्याश्रयात् । २ ॥ सखा सहायः शिवरामपुत्रोऽस्मिन् भास्करोपाह्वमयूरशास्त्री । पञ्चाननोपाह्वयरामकृष्णोऽत्रादात्स्वरान् भट्टमयूरसूनुः । ३ ॥ गौरीशङ्करतनयो नरोत्तमाऽऽख्योऽत्र गुर्जरः शुक्लः । कात्यायनसूत्राणां समीक्षणात्साह्यमाधत्त । ४ ॥ इह भास्करोपनामकबापूतनयश्च बालकृष्णाख्यः । गोरे इत्युपनामकनारायणतनयविठ्ठलः शास्त्री । ५ ॥ साह्यं शोधादौ मे कृतवन्ताविति परिश्रमेऽपि सति । न्यौन्यं चेदिह किञ्चित् क्षन्तव्यं तद्बुधैः स्वशाखीयैः । ६ ॥ शौचोपनामकसदाशिवदीक्षितेन सिद्धेश्वरस्य तनयेन वचःसमूहम् । सङ्गृह्य साह्यमिह मे रचितं तथैव न्यूनाधिका मम कृतिर्विबुधैर्विशोध्या । ७ ॥ बाब्रेकरेत्युपनामा यो जागन्नाथिः प्रभाकरः । निर्माणाऽवसरे ग्रन्थमिमं स श्रमतोऽलिखत् । ८ ॥ स्थूलाक्षरैर्वचनमन्त्रततिर्व्यलेखि कार्या स्वकण्ठभुवि सा त्वथ मध्यवर्णैः । सा दर्शिता खलु यथावसरं विधेया सूक्ष्माक्षरैस्तु लिखितं मननोपयोगि । ९ ॥ **कामाक्षी** कुलदेव्यमुष्य जननं मुम्बापुरे दृङ्नभोवस्विन्दुप्रमिते शके स्ववयसश्चत्वेन्विधसङ्ख्येऽब्दके । मासे भाद्रपदे सिते शनियुताऽष्टम्यां समारम्भसंग्रन्थं पूरितवानिमं किल सहाष्टम्यां सितायां गुरौ । १० ॥ **पञ्चनद्युपाह्व घनश्यामभट्टात्मजगोवर्धनशर्मा ( आशुकवि गट्टुलालजी. )**

---

२. श्रीमन्नारायणाख्यानमलगुणगणाधारभूतान् जनानां श्रेयःप्राप्तावजस्रं प्रकटितसुमतीन् विट्ठलानन्दहेतून् । मुम्बासौभाग्यचिन्हान्सकलनृपनतान् रावजीशास्त्रिवर्यो नित्यं नत्वातिहर्षाद्भवदभिमतये पत्रिकां प्रेषयामि । १ ॥ यथा—गोदावर्या दक्षिणे पुण्यतीरे पुण्यस्तम्भं क्षेत्रमास्तेऽतिरम्यम् । यस्मिन्विप्राः श्रौतिनः स्मार्तनिष्ठास्तत्रस्यासीत्पूर्व-

जानां निवासः । १ ॥ रत्नाकरप्रतीरे मुम्बानगरी महेन्द्रपुरतुल्या । सम्प्रति तस्यां वसतिर्यस्योपान्ते निरस्ततरखल्या । २ ॥ आयास्योथाङ्गिरसो गौतम इति ते विलोमतो यस्य । प्रवरा गौतमगोत्रे तस्मिन् प्रभवो हि यस्य कायस्य । ३ ॥ यन्माता पतिदेवता सुचरिता विख्यातकीर्तिः क्षितौ विप्राणामनिशान्नदाननिरता नाम्नाऽन्नपूर्णा स्वतः । यत्तातः सकलश्रुतिस्मृतिपुराणाचारनिष्ठैकभूर्विद्वान् **विठ्ठलनाम**धेयविदितो विप्राग्रगण्यो भुवि । ४ ॥ सोऽयं विठ्ठलनन्दनो मतिमतां **नारायणो**ऽग्रेसरः शाके बाणखनागभू ( १८०५ ) परिमिते वर्षे सुभानौ शुभे । श्रीमद्वाजसनेयकाह्निकमिदं सूत्रावलीसंज्ञितं सम्पूर्णं व्यतनोत्परोपकृतये योगेश्वरानुग्रहात् । ५ ॥ स विप्रवर्यो निजशाखितुष्ट्यै सूत्रावलिं संविरचय्य यत्नात् । ददौ द्विजेभ्यः कृपयातिहर्षात्तदुक्तकर्माचरणांशलब्ध्यै । ६ ॥ श्रीरामेण पुरा समुद्रतरणं कर्तुं स्वयं निर्मितः सेतुर्वानरवीरवर्यनिकरैः साचिव्यमालम्बता । कर्मान्धान् भवसागराद्बहुजनानुत्तारितुं निर्ममे सेतुं विठ्ठलनन्दनो दृढतरं सूत्रावलीनामकम् । ७ ॥ अयातयामे यजुषि प्रसिद्धाद्दशैषतो वाजसनेयिशाखाः । माध्यंन्दिनी मुख्यतमा हि तासां मूलं स्मृतं सर्वमुनीन्द्रमुख्यैः । ८ ॥ तच्छाखिनामाह्निककर्मदीपिका सूत्रावलिः सर्वनिबन्धसङ्ग्रहा । आम्नायमूला स्मृतिसारशाखिनी कल्पप्रवालाखिलकामदायिनी । ९ ॥ आसेतोरा हिमाद्रेरनवरतमुदे सज्जनानां भवित्री ह्या सूर्यादा च चन्द्राद्विजयतु जगति प्रौढपद्यप्रयोगा । सुप्त्यन्तं कर्म यस्यां सकलदिनगतं प्रातरादि प्रयुक्तं सूत्रालिः सा स्तवार्हा भवति कथमहो मादृशानां जडानाम् । १० ॥ नवगव्यूत्युत्तरतो गोदावर्या उदक्तटात्पुण्यात् । *औदुम्बरेमिति वित्तं क्षेत्रं वसतिर्हि यस्य बहुविज्ञम् । १ ॥ यद्गोत्रं वत्साख्यं पञ्चार्षेयैर्युतं तथा शाखा । माध्यन्दिनी विशुद्धा मूलं यजुषो ह्यनेकशाखस्य । २ ॥ यन्माता **रङ्गाख्या** नियताचारा पिता च **रघुनाथः** । गेहे बहवश्छात्रा यस्य सुशीलाः पठन्त्यहोरात्रम् । ३ ॥ सोऽहं पद्यप्रदीपैः सूत्रावलिभानुमञ्जसा भक्त्या । नीराजयामि धृष्टः सर्वं श्रद्धाकृतं हि सद्भवति । ४ ॥ धन्या सा जननी भवादृशसुतं याजीजनद्विश्रुतम् धन्योऽसौ जनको रमेशकृपया येन त्वया पुत्रवान् । धन्या सा वसुधा त्रिविष्टपसमा यस्यां भवान् संस्थितस्तं त्वां सर्वजनोपकारनिरतं किं वर्णयामोऽधुना ॥ १ ॥ आश्विन वद्य १३ शके १८०५ रविवार. **रावजी रघुनाथ शास्त्री पाध्ये.**

---

३. मुम्बासंस्थ पुरन्दरोपपद हे **नारायणाह्व** त्वया तुन्नेयं हृदयङ्गमाह्निकमहासूत्रावलिर्नूतना ॥ मामुद्दिश्य समागता च मम सान्निध्यं समालोच्य यां सन्तुष्टोऽस्म्यतिभट्टभानुरधिकं वावच्यते किं मया । १ ॥ **श्रीमन्नारायणा** यूयं धन्या भुवि यतो महान् । प्रयत्नोऽयं समुद्धर्तुं मज्जतां पङ्कसागरे । २ ॥ भुवि भूसुरोपकर्त्री निगमागमविहितधर्मसम्भर्त्री ॥ कलुषव्रजसंहर्त्री सूत्रालिरियं चिरञ्जीयात् । ३ ॥ **श्रीनारायण** धर्मपद्मतरणे मुम्बापुरे वासकृद्धर्मे वर्तयितुं सदोद्यतमतिः सूत्रावलीनामकम् ॥ ग्रन्थं वाजसनेयिविप्रसदने कृत्वा च नव्यं स्वयं यस्त्वं प्रेषितवानतस्त्वमधुना जातो द्वितीयो मनुः । ४॥

---

* उम्बरखेड पश्चिम–वऱ्हाडांत आहे । १ सूत्रम् । २ प्रसिद्धम् ।

शुक्लोपाभिधरामचन्द्रनिकटे सूत्रावलिः प्रेषिता तन्त्राम्नायपुराणवाक्यसहिताऽतः सप्रमाणा सदा ॥ श्रीनारायण धर्मपालक सतां मध्ये सदा वासकृत् नव्येयं द्विजधर्मपालनहितेच्छातस्त्वया कारिता ॥ ५ ॥ वैशाख वद्य १४ शके १८०४. **रामचन्द्र विश्वनाथ शुक्ल, गणदेवी.**



४. 'शुक्लयजुर्वेदीयमाध्यन्दिनवाजसनेयाह्निकसूत्रावलिः' कृपया मह्यमर्पिता साऽतिहर्षभरेण मया यज्ञमूर्तिरिव परमादरेण छत्रमिव स्वीकृताऽतः (श्लोक उपजाति वृत्तम्)— भवतामिमामुपकृतिं न विस्मरन् विगतान्तरोऽनुसवनं हविषा ॥ प्रजुहोमि विश्वभुजमन्वहं समादृतभूसुरो नतिकरो भवते । १ ॥ परश्च यत्तदस्मदनुरूपं कार्यं चेत्तदा कृपया योजनीयम् अलमतिविस्तरेण । सुज्ञेषु किमधिकलेखनाडम्बरेण ॥ यज्ञेश्वरेणाभिहितो नमस्कारो भवेद्धि वः ॥ प्रागजित्केन विभुना भवतामनुसेवने । २ ॥ संवत्सरैकगुणरन्ध्रधरामिते च पक्षे सिते शुचिभवेऽवनिजस्य वारे ॥ यज्ञेश्वरेण लिखितं नतिपत्रमेतत् यत्तत्क्षमध्वमसदर्थनपत्रमेंऽग । ३ ॥ **देव प्रागजी किका.**



५. **भवद्भिः 'श्रीशुक्लयजुर्वेदीयमाध्यन्दिनवाजसनेयाह्निकसूत्रावलि' नामको ग्रन्थः कृतः तेन सर्वेषां ब्रह्मवृन्दानामुपकारः कृतः । किं च येषां ब्रह्मवृन्दानां अनेकग्रन्थानां ज्ञानं एकसमयावच्छेदेन न भवेत्तज्ज्ञानं भवद्भिः अनेकग्रन्थानवलोक्य एकस्मिन् ग्रन्थे प्रकटीकृतं एतत् समीचीनं कृतम् ॥ सर्वान् ग्रन्थस्थान्विषयान् अवलोक्य मम ब्रह्मानन्दो बभूव ॥ (वडोदें) राजधान्यां भाद्रपद शुद्ध ५ मी शके १८०४.—**बाळकृष्ण शास्त्री वैद्य.**



६. ** 'युष्माभिः श्रीशुक्लयजुर्वेदीयमाध्यन्दिनवाजसनेयाह्निकसूत्रावली' ग्रन्थः कृतः तेन सर्वेषां ब्रह्मवृन्दानामुपरि उपकृतिः कृता । किञ्च येषां ब्रह्मवृन्दानां अनेकग्रन्थज्ञानं एकसमयावच्छेदेन न भवेत् तज्ज्ञानं युष्माभिः अनेकग्रन्थानवलोक्यैकस्मिन्ग्रन्थे प्रकटीकृतम् एतत्समीचीनं कृतम् वटोदर ( वडोदें ) राजधान्याम् माघ शुद्ध ९ म्यां शके १८०४—**वामन शास्त्री सङ्गमनेरकर.**



७. श्रीकातीयधरामरातिसुखदा स्वाचारनिष्ठाजनि यस्यां वैदिककर्मगूढहृदयं बालैरपि ज्ञायते । यामाश्रित्य सतः स्वकर्मनिरतान्मुक्तिः समालिङ्गते सेयं त्वत्कृतसूत्रपङ्क्तिरनिशं भूयात्सतां भूषणम् । १ ॥ पूर्वं क्षीरसरित्पतौ हि हरिणा सम्प्राप्य नानौषधीर्यत्नेनाम्बुलभेन निर्जरकृते सम्पादिता सा सुधा । यां पीत्वापि सुरा व्रजन्ति विलयं रात्र्यागमे ब्रह्मणो नैकान्तेन मृतिं निहन्ति न तनोत्येषा सतां सन्मुदम् । २ ॥ नानाशास्त्रनिबन्धसङ्ग्रहसुधासिन्धौ मनीषौषधीः क्षिप्त्वा विठ्ठलसूनुना हि मथितं सूत्रावलीपीयुषम् । यच्चेतोमलमाशु हन्ति भजतां ज्ञानं ददात्यात्मनः कैवल्यं च सतां तथा विषयिणो धर्मार्थकामान्सदा । ३ ॥ भो विद्वद्रसिका वचः शृणुत मे धार्यो भवद्भिर्हृदा श्रीनारा-

यणभूसुरेण रचिता सत्सूत्रमुक्तावलिः । यां दृष्ट्वा वशगेव मुक्तिरमणी कण्ठे स्वं ग्राहिणी युष्मान्संवृणुयाद्विहाय विबुधान्निःसूत्रमुक्तावलीम् । ४ ॥ भो नारायण वैद्य नाम भवता स्वीयं कृतार्थीकृतं यत्सूत्रावलिभेषजेन भवता कर्मान्ध्यरोगो हतः। विप्राणां निजकर्मकौशलदशी पुष्टिश्च सम्पादिता मन्ये त्वां निजशाखिशर्मभृतये जातं नु योगीश्वरम् । ५ ॥ मुम्बापुरीमण्डनविठ्ठलात्मज नारायणाशेषमहीसुरोत्तम । पुरन्दरोपाह्व महानुभाव भो किं वर्णनीया कृतिता तवाधुना । ६ ॥ येन त्वयैषाह्निकसूत्रमालिका माध्यन्दिनीयार्थमनल्पयत्नतः । विनिर्मिता यत्र चकासति स्फुटं नित्यानि कर्माण्यखिलार्थदान्यपि । ७ ॥ सत्कर्माणि विधातुमेव मनसो नास्ति प्रवृत्तिः क्षितौ कुत्राप्यस्ति च सा तथापि वयुनाभावो वलाद्धन्ति ताम् । एवं कारणयुग्मतः प्रतिदिनं नष्टं स्वकर्मावितुं विद्वंस्त्वद्रचिता भविष्यति कलौ मातेव सूत्रावलिः । ८ ॥ आसन्पूर्वमनेकशास्त्रनिपुणा विप्रा भविष्यन्त्यतो वर्तन्ते च तथापि कैश्चन महीलेखोपकारक्षमा। ईदृग्धर्मरहस्यसूक्ष्मपदवी यत्नेन नो निर्मिता धन्येयं कृतिता यया विरचिता सत्सूत्ररत्नावलिः । ९ ॥ आश्विन शुद्ध ११ शी शुक्रवार शके १८०५. **रावजी रघुनाथ शास्त्री पाध्ये, उम्बरखेड.**

८. **अधुना युष्माभिः 'वाजसनेयाह्निकसूत्रावलि' प्रवन्धः कृतः सोति समीचीनो विदुषां सर्वकार्यसाधकश्चेति अस्माकमपि सर्वं कार्यमस्मात्सेत्स्यतितराम् । आषाढशुक्लप्रतिपदाया एकोनविंशाधिकद्विचत्वारिंशत्संख्यके संवत्सरे आषाढ वदी १ सोमे. **पण्डित श्रीस्नेहिराम शर्म्मा.**

९. **भवतां स्वप्रज्ञापूर्वककृतस्वाचारविवृद्धये सूत्रावलिग्रन्थं सम्यग् दृष्ट्वा परमाल्हादो जातः । मिति भाद्रपद वद्य ७ मी गुरौ शके १८०६. **सदाशिव वैजनाथ शास्त्री.**

१०. **माध्यन्दिनीयाह्निकसूत्रपङ्क्तिः कृता भवद्भिर्बहुधोपकारिणी । दृष्टा मया सर्वबुधैस्तु सार्द्धं सा नित्यकर्मानुपथप्रदर्शिनी । १ ॥ मनोभूमौ जाता प्रकृतिचपलायां विधिवशात्कवेः संवर्धव्या प्रचुरगुणपुष्पप्रसविनी ॥ तथा संसेक्तव्या स्मरणसलिलेनानुदिवसं यथा नेयं म्लानिं व्रजति मृदिला स्नेहलतिका । २ ॥ शराभ्रवस्विन्दुमिते शाके शुभानुसंज्ञिते ॥ नभस्य ( श्रावणस्य ) शुक्लपूर्णायां ( शके १८०५ ) लेख्यं वै लिखितं बुधे ॥ १ ॥ **यादव जनार्दन शास्त्री लुमपाठकी, पुणताम्बें.**

११. स्वस्तिश्री वेदशास्त्रसम्पन्न राजमान्य राजश्री **नारायण विठ्ठल वैद्य पुरन्दरे** यांसी प्रति श्रीक्षेत्र काशी येथून श्रीब्रह्मामृतवर्षिणी सभेंतील विद्वन्मण्डळीचा नमस्कार. विशेष आपण माध्यन्दिनशाखेचा 'आन्हिकसूत्रावलिनामक' ग्रन्थ निर्माण केला, हें ऐकून येथील श्रीब्रह्मामृतवर्षिणी सभा यांतील विद्वान् माध्यन्दिनी वाजसनेयीशाखेची आम्ही मण्डळी फारच सन्तुष्ट झाली आणि ग्रन्थकारास धन्यवाद देऊं

लागली. हल्लीं एक पुस्तक 'महामोहविद्रावण' नावाचें आपल्याकडे रवाना करितों. हा नमस्कार. पुस्तक रवाना करण्याचा पत्ता. बनारस संस्कृत कालेज दर्शनशास्त्राध्यापक तथा श्रीब्रह्मामृतवर्षिणी सभासम्पादक पण्डित **राममिश्रशास्त्री मुक्काम काशी.** श्रावण कृष्ण ७ मी संवत् १९४० मंगळवार. (शके १८०६). शिक्का. ॐम् ब्रह्मामृतवर्षिणी सभा.



१२. श्रीविश्वेश्वरो विजयते—वेदशास्त्रसम्पन्न राजमान्यराजश्री शुक्लयजुर्वेदीयमाध्यन्दिनीयशाखाध्यायी ब्राह्मणोत्तमेषु पुण्यस्तम्भनिवासी पुरन्दरोपाह्वश्री**विठलात्मज-श्रीनारायणशर्मसु**-रामदुर्गनिवासी महर्षांय पुरोहितोपाव्हय पण्डित चुनीलालकृता नतयः समुल्लन्तु तराम् । शमुभयत्र वृत्तं—शेखावटी देशीयभाषया बोध्यम्—शुक्लयजुर्वेदीय माध्यन्दिनवाजसनेयान्हिकसूत्रावलि, नामक ग्रन्थ आपका बनाया हुया आपनै हमारेकु दिया सो ग्रन्थकुं देखकर हमारा चित्तमाह भोत हर्ष होया ग्रन्थ भउत उत्तम है भोत लोगुका उपकार है. संवत् १९४२ आषाढ वदी ११ बुधे. **रघुनाथ चूनीलाल शर्मा.**

## शिक्का.

१३. श्रीमत्परमहंसपरिव्राजकाचार्य श्रीमच्छंकराचार्य महाराजाधिराज अखण्डभूमण्डलाचार्य सद्गुरुज्योतिर्मठाधीश्वर षड्दर्शनस्थापनाचार्य श्रीनगरराजधानी श्रीमच्छङ्कराचार्य श्रीकेशवानन्दस्वामी मुक्काम. चतुर्मास्य. शुरतबन्दर.

परम शिष्योत्तम षट्पदश्रेण्याराधनतत्परचरणारविन्दमकरन्दमिलिन्दधर्मधुरन्धर ... इबन्दरमध्ये, वेदमूर्ति राजमान्य राजश्री नारायण विठ्ठल वैद्य पुरन्दरेषु नारा-...पूर्वक आशीर्वाद. जत अत्रे कुशलम्. तत्रास्तु. विशेष लखनेका के, आपना तरफथी आवेलुं पुस्तक वेदमूर्ति राजमान्य राजश्री पुरुषोत्तम यादव देवधर एओए आप्युं, ते अमोए वद्धुं वाच्युं; तेमानुं तत्त्व आपना श्रमनुं घणुं सार्थक थाय एवुं छे. बीजूं एवा गृहस्थो सर्वे ब्रह्मवृन्द उपयोगी ग्रन्थ करणारा माणसो आ सृष्टिमां घणा जुलवी छे. माटे आपना जेवा धर्मस्थापन करनारा पुरुषो आ वखतनी अन्दर थोडाज छे, आपनुं रचेलुं पुस्तक जोई अमारा आत्माने घणोज सन्तोष थयो छे, ने अमारो आपनाउपर आशीर्वाद छे के, आ पुस्तककरतां जोई धर्मसम्बन्धी ग्रन्थो आप प्रसिद्ध करशो, ने धर्मनुं उत्तेजन सारुं वधारशो, लखतन एज आशीर्वाद. संवत १९४० ना कारतक शुद्ध २ गरेउ. लखितन **छोटालाल शदाशङ्करना** नमस्कार.

१४. **वे. शा. सं. रा. रा. श्रीनारायण विठ्ठल वैद्य पुरन्दरे पुणतास्वेकर यांस.** ग्वालेरलष्कर राजाश्रित जगन्नाथ आबा ज्योतिर्वित्संज्ञकस्य कृतानेक साष्टांग नमस्कार. आपण आन्हिकसूत्रावलीनामग्रन्थरचना सङ्ग्रह केला हा पाहून परम सन्तोष झाला. **आपण केलेल्या ग्रन्थसंग्रहांत बराच उपयोगी विषयसंग्रह लिहिला आहे. ** ग्रन्थसंग्रह तर चांगला झाला. यांत विषयही बहुधा सर्व आहेत. * * आणि

आपण सर्व ग्रन्थाचे आधारानें हा संग्रह केला हें तर उत्तमच जालें. * * मुख्य हा ग्रन्थ बहुतसुन्दर सप्रमाण जाला आहे. * * कळावें हे विज्ञापना. मिति आषाढ शुद्ध १२ शी शके १८१६ ता० १४।७।९४ उत्तरं प्रेष्यताम् ॥ ज्योतिर्विद्जगन्नाथ आबा.

१५. **श्रीपुरन्दोपाव्हविठ्ठलात्मजवैद्य नारायणशर्मणा** यजुर्वेदीयब्राह्मणानामुपयोगी सरल भाषया '**आन्हिकसूत्रावलि**' नामा यो ग्रन्थो विरचितस्तस्यावलोकनेन मे महान्सन्तोषो जातः महामुनिवाक्यप्रदर्शनपूर्वमस्मिन्ग्रन्थे नित्यकर्म विधानं जनानां मार्गे यथाऽभिरुचि भवेत्तथा ग्रन्थकारेण यः प्रयत्नः कृतोऽस्ति तेन स महतीं प्रशंसामर्हति तस्योद्देशः सफलो भूयात् ॥ **नडियाद** कार्तिक शुक्ल १५ मा गुरुवासरे संवत् १९५२ शके १८१७ **धार्मिक शास्त्रि हरिशङ्करात्मज प्रभुशङ्कर.**

सन्त्यन्येऽस्मिन्वहवोभिप्रायास्ते च स्थलसङ्कोचान्नात्र संगृहीताः.

---

॥ श्रीः ॥

# श्रीशुक्लयजुर्वेदीयमाध्यन्दिनवाजसनेयिनां आह्निकसूत्रावलिः ।

॥ श्रीगणेशाय नमः ॥ ॐतत्सत् ॥ अथ श्रीशुक्लयजुर्वेदीयमाध्यन्दिनवाजसनेयब्राह्मणानां नित्याह्निकसूत्रावलिः प्रारभ्यते ॥ तत्रादौ 'मङ्गलाचरणम्'—नमामि देवं करुणाकरं तं विनायकं विघ्नगणं हरन्तम् । गौरीसुतं गौररुचिं गजास्यं वृन्दारकैर्वर्णितचारुलास्यम् ॥ १ ॥ शारदाम्भोजवदनां शारदां वन्दितां सुरैः । वन्दे च कामदां देवीं कामाक्षीं कुलदेवताम् ॥ २ ॥ नमस्कृत्य तातं निजं विठ्ठलं च प्रसूमन्नपूर्णां गुरुं याज्ञवल्क्यम् । तदुक्ताह्निकाचारसूत्रप्रमाणान्मया रच्यते स्वल्पसूत्रावलीयम् ॥ ३ ॥ भिन्नैर्भिन्नैर्मुनीनां वचनजलगणैः पूर्णमाचारसिन्धुं निर्मथ्याचारसारग्रहणमपि बुधैर्दुष्करं चेत्तथापि । निर्वाहार्थं प्रदीनं क्रियत इह न किं खे खगैः स्वात्मशक्त्या तद्वत्सूत्रावलीयं क्रियत इह मया वेद्यमेवं सुधीभिः ॥ ४ ॥

## ॥ अथ ब्रह्मकर्मविचारः ॥

१. 'ब्रह्मकायस्य लक्षणम्.' भगवान्धन्वन्तरिः—शौचमास्तिक्यमभ्यासो वेदेषु गुरुपूजनम् । प्रियातिथित्वमिज्या च ब्रह्मकायस्य लक्षणम् ॥

२. 'ब्राह्मणलक्षणम्.' आह्निककारिकासु—शान्ताः सन्तः सुशीलाश्च सर्वभूतहिते रताः । क्रोधं कर्तुं न जानन्ति एतद्ब्राह्मणलक्षणम् ॥ सन्ध्योपासनशीलश्च सौम्यचित्तो दृढव्रतः । समः परेषु च स्वेषु एतद्ब्राह्मणलक्षणम् ॥ एकाहारश्च सन्तुष्टः स्वल्पाशी स्वल्पमैथुनः । ऋतुकालाभिगामी च एतद्ब्राह्मणलक्षणम् ॥ परान्नं परवित्तं च पथि वा यदि वा गृहे । अदत्तं नैव गृह्णाति एतद्ब्राह्मणलक्षणम् ॥ सत्यं ब्रह्म तपो ब्रह्म ब्रह्म चेन्द्रियनिग्रहः । सर्वभूतदया ब्रह्म एतद्ब्राह्मणलक्षणम् ॥ वसिष्ठः—योगस्तपो दमो ज्ञानं सत्यं शौचं दया श्रुतम् । विद्या विज्ञानमास्तिक्यमेतद्ब्राह्मणलक्षणम् ॥

३. 'ब्राह्मणपालनम्.' महाभारते—सम्पतन्मोहजालेषु कदाचिदिह मानुषे । ब्राह्मण्यं लभते जन्तुस्तत्पुत्र परिपालय ॥

४. 'ब्राह्मणकर्म.' कात्यायनः—वेदे तथात्मज्ञाने च ब्राह्मणो यत्नवान्भवेत् । एष धर्मस्य सर्वस्य चतुर्वर्गस्य साधकः ॥ अङ्गिराः—अग्निहोत्रं तपः सत्यं वेदानां चैव पालनम् । आतिथ्यं वैश्वदेवश्च इष्टमित्यभिधीयते ॥

५. 'भारतवर्षे जन्मफलम्.' विष्णुपुराणे—अत्रापि भारतं श्रेष्ठं जम्बूद्वीपे महामुने । यतो हि कर्मभूरेषा ततोऽन्या भोगभूमयः ॥ कदाचिल्लभते जन्तुर्मानुष्यं पुण्यसञ्चयात् । गायन्ति देवाः किल गीतकानि धन्यास्तु ये भारतभूमिभागे । स्वर्गापवर्गस्य च हेतुभूते भवन्ति भूयः पुरुषाः सुरत्वात् ॥

६. 'ईश्वराराधने धर्मावश्यकता.' याज्ञवल्क्यः—पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः । वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश ॥ मनुः—वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम् । आचारश्चैव साधूनामात्मनस्तुष्टिरेव च ॥ व्यासः—ब्राह्मणक्षत्रियविशस्त्रयो वर्णा द्विजातयः । श्रुतिस्मृतिपुराणोक्तधर्मयोग्यास्तु नेतरे ॥ तस्मादहरहर्वेदं द्विजोऽधीयीत वाग्यतः । धर्मशास्त्रेतिहासादि सर्वेषां शक्तितः पठेत् ॥ मनुः—प्रजापतिरिदं शास्त्रं तपसैवासृजत्प्रभुः । तथैव वेदानृषयस्तपसा प्रतिपेदिरे ॥ ऋक्संहितां त्रिरभ्यस्य यजुषां वा समाहितः । साम्नां वा सरहस्यानां सर्वपापैः प्रमुच्यते ॥ श्रुतिस्मृत्युदितं धर्ममनुतिष्ठन् हि मानवः । इह कीर्तिमवाप्नोति प्रेत्य चानुत्तमां गतिम् ॥ श्रुतिर्वेदस्तु विज्ञेयो धर्मशास्त्रं तु वै स्मृतिः । ते सर्वार्थेष्वमीमांस्ये ताभ्यां धर्मो हि निर्ममे ॥ वेदः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः । एतच्चतुर्विधं प्राहुः साक्षाद्धर्मस्य लक्षणम् ॥ महाभारते—श्रुतिस्मृतिसमं पुण्यं पापनाशनमुत्तमम् । चिन्तयेद्ब्राह्मणो भक्त्या धर्मसंस्थापनाय च ॥ देशकाल उपायेन द्रव्यश्रद्धासमन्वितम् । पात्रे प्रदीयते यत्तत् सकलं धर्मलक्षणम् ॥ श्रुतिः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः । सम्यक् सङ्कल्पजः कामो धर्ममूलमिदं स्मृतम् ॥

७. 'ईश्वराराधनावश्यकता.' विश्वामित्रकल्पे याज्ञवल्क्यः—आत्मनो न सहायार्थे पिता माता च तिष्ठति । न पुत्रदारा न ज्ञातिर्धर्मस्तिष्ठति केवलम् ॥ अहिंसा सत्यमस्तेयं शौचमिन्द्रियनिग्रहः । दानं दया दमः क्षान्तिः सर्वेषां धर्मसाधनम् ॥ व्यासः—आलोड्य सर्वशास्त्राणि विचार्यैवं पुनः पुनः । इदमेकं सुनिष्पन्नं ध्येयो नारायणः सदा ॥ विष्णुशर्मा—आहारनिद्राभयमैथुनं च सामान्यमेतत्पशुभिर्नराणाम् । धर्मो हि तेषामधिको विशेषो धर्मेण हीनाः पशुभिः समानाः ॥

८. 'ब्राह्मणानां वेदाध्ययनावश्यकता.' याज्ञवल्क्यः—यज्ञानां तपसां चैव शुभानां चैव कर्मणाम् । वेद एव द्विजातीनां निःश्रेयसकरं परम् ॥ मधुना पायसेनैव स देवांस्तर्पयेद्द्विजः । पितॄन्मधुघृताभ्यां च ऋचोऽधीते हि योऽन्वहम् ॥ यजूंषि शक्तितोऽधीते योऽन्वहं स घृतामृतैः । प्रीणाति देवानाज्येन मधुना वा पितॄंस्तथा ॥ स तु सोमघृतैर्देवांस्तर्पयेद्योऽन्वहं पठेत् । सामानि तृप्तिं कुर्याच्च पितॄणां मधुसर्पिषा ॥ मेदसा तर्पयेद्देवानथर्वाङ्गिरसं पठन् । पितॄंश्च मधुसर्पिर्भ्यामन्वहं शक्तितो द्विजः ॥ व्यासः—श्रुतिः स्मृतिश्च विप्राणां नयने द्वे विनिर्मिते । एकेन विकलः काणो द्वाभ्यामन्धः प्रकीर्तितः ॥ अत्रिः—वेदं गृहीत्वा यः कश्चिच्छास्त्रं चैवावमन्यते । स सद्यः पशुतां याति सम्भवानेकविंशतिम् ॥ उक्तं च प्रतिषिद्धं च पुनः सम्भावितं तथा । साक्षेपं निरपेक्षं च ऋषिवाक्यमनेकधा ॥ वेदाः प्रमाणं स्मृतयः प्रमाणं धर्मार्थयुक्तं वचनं प्रमाणम् । एतत्त्रयं यत्र भवेत्प्रमाणं तद्वाक्ययुक्तं कुरु तत्प्रमाणम् ॥ ( तस्माद्ब्राह्मणेन वेदशास्त्राध्ययनमवश्यमेव कर्तव्यम् ) ॥

९. 'वेदाः' मनुः—त्वमेको ह्यस्य सर्वस्य विधानस्य स्वयम्भुवः । अचिन्त्यस्याप्रमेयस्य कार्यतत्त्वार्थवित्प्रभो ॥ चरणव्यूहे—तत्र यदुक्तं चातुर्वेद्यं चत्वारो वेदा विज्ञाता भवन्ति ॥ ऋग्वेदो यजुर्वेदः सामवेदोऽथर्वणवेदश्चेति ॥ तत्र ऋग्वेदस्यायुर्वेद उपवेदः अत्रिगोत्रं । स्वरूपं तु—पद्मपत्रायताक्षः सुविभक्तग्रीवः कुञ्चितकेशश्मश्रुः श्वेतवर्णः पञ्चवितस्तिमितः अस्य मधुच्छन्दा ऋषिः सोमो देवता गायत्री छन्दः ॥ यजुर्वेदस्य धनुर्वेद उपवेदः काश्यपगोत्रं । स्वरूपं तु—पिङ्गाक्षः कृशमध्यः स्थूलगलकपोलस्ताम्रवर्णः षट्प्रादेशदीर्घः अस्य परमेष्ठी ऋषिः इन्द्रो देवता त्रिष्टुप् छन्दः ॥ सामवेदस्य गान्धर्ववेद उपवेदः भारद्वाजगोत्रं । स्वरूपं तु—स्रग्वी शुचिः बृहच्छरीरः काञ्चननयनः आदित्यवर्णः षडरत्निमात्रः अस्य गौतम ऋषिः अग्निर्देवता जगती छन्दः ॥ अथर्वणवेदस्य शिल्पशास्त्राद्युपवेदः वैखानसगोत्रं । स्वरूपं तु—तीक्ष्णश्चण्डः कामरूपी विश्वात्मा नीलोत्पलवर्णः दशारत्निमात्रः अस्य दध्यङ्ङाथर्वणऋषिः आपो देवता अनुष्टुप् छन्दः ॥

१०. 'वेदयोषितः.'—ईतिर्धृतिः शिवा शक्तिश्चतस्रो वेदयोषितः । भवन्ति यज्ञकालेऽस्मिन्नीशानादि व्यवस्थिताः ॥

११. 'वेदाङ्गानि.'—शिक्षाकल्पव्याकरणनिरुक्तछन्दोज्योतींषि षड्वेदाङ्गानि ॥ छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते । ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते ॥ शिक्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम् ॥

१२. 'वेदादिसंख्या.'—लक्षं तु वेदाश्चत्वारो लक्षं भारतमेव च । लक्षं व्याकरणं प्रोक्तं चतुर्लक्षं तु ज्योतिषम् ॥ महाभारते—ब्रह्मन् वेदरहस्यं च यच्चान्यत्स्थापितं मया । साङ्गोपनिषदां चैव वेदानां विस्तरक्रिया ॥ इतिहासपुराणानामुन्मेषं निर्मितं च यत् । भूतं भव्यं भविष्यच्च त्रिविधं कालसंज्ञितम् ॥ तस्मात्—प्रयोगेष्वपि श्रुतिस्मृतिपुराणोक्तफलप्राप्त्यर्थमित्युक्तम् ॥ अस्यार्थः—विधिर्विधेयस्तर्कश्च वेदः । विधिर्नाम ब्राह्मणम् । विधेयो नाम मन्त्रः । तर्को नाम अर्थवादः । प्राशस्त्यनिन्दान्यतरलक्षणया विधिशेषभूतं वाक्यमर्थवादः ॥

१३. 'वेदप्रशंसा.' पाराशरस्मृतौ—न कश्चिद्वेदकर्ता स्याद्वेदस्मर्ता चतुर्मुखः । वेदो नारायणः साक्षात्स्वयम्भूरिति शुश्रुम ॥

१४. 'शुक्लयजुर्वेदान्तर्गतमाध्यन्दिनशाखाप्रशंसा.' यजुर्वेदकल्पतरौ—सन्मूलो यजुराख्यवेदविटपी जीयात्स माध्यन्दिनिः शाखा यत्र युगेन्दुकाण्डसहिता यत्रास्ति सा संहिता । यत्राश्रोऽब्धिलता विभान्ति शरशैलाङ्केन्दुभी ऋग्दलैः पँञ्चद्वीपुनभोङ्कवर्णमधुपैः खौम्यर्कगुञ्जुञ्जितैः ॥ देवीभागवते—अयातयामानि तु भानुगुप्तान्यन्यानि जातान्यतिनीरसानि । यजूंषि तेषामथ याज्ञवल्क्यो ह्ययातयामानि रवेरवाप ॥

## वाजसनेयसंहितामन्त्रसङ्ख्या.

| वर्गः | | वर्गः | | वर्गः | | वर्गः | | अध्यायः | | अध्यायः | | अध्यायः | | अध्यायः | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| | | | ६३८ | | १००० | | १६८१ | १ | ३१ | | ५१३ | | १२७२ | | १६७९ |
| अ | २९३ | ओ | ६ | न | ८० | श | ३५ | २ | ३४ | १२ | ११७ | २२ | ३४ | ३२ | १६ |
| आ | ८७ | क | ५१ | प | १४१ | ष | २ | ३ | ६३ | १३ | ५८ | २३ | ६५ | ३३ | ९७ |
| इ | ९६ | ख | १ | व | २३ | स | १८९ | ४ | ३७ | १४ | ३१ | २४ | ४० | ३४ | ५८ |
| ई | ७ | ग | १५ | भ | १९ | ह | ६३ | ५ | ४३ | १५ | ६५ | २५ | ४७ | ३५ | २२ |
| उ | ८९ | घ | ९ | म | ७३ | क्ष | ५ | ६ | ३७ | १६ | ६६ | २६ | २६ | ३६ | २४ |
| ऊ | ११ | च | १५ | य | १८३ | .. | ... | ७ | ४८ | १७ | ९९ | २७ | ४५ | ३७ | २ |
| .. | ... | ज | ९ | .. | ... | .. | ... | ८ | ६३ | १८ | ७७ | २८ | ४६ | ३८ | २८ |
| ऋ | १९ | त | ११६ | र | २३ | .. | ... | ९ | ४० | १९ | ९५ | २९ | ६० | ३९ | १३ |
| ए | ३५ | द | १२१ | ल | ५ | .. | ... | १० | ३४ | २० | ९० | ३० | २२ | ४० | १७ |
| ऐ | १ | ध | १९ | व | १३४ | .. | ... | ११ | ८३ | २१ | ६१ | ३१ | २२ | ... | ... |
| | ६३८ | | १००० | | १६८१ | | १९७५ | | ५१३ | | १२७२ | | १६७९ | | १९७५ |

उक्तं च—कलौ माध्यन्दिनी शाखा कलौ चण्डीविनायकाविति स्मृतिः ।

(१) काण्डानि १४ । (२) अध्यायाः ४० । (३) मन्त्राः १९७५ । (४) अक्षराणि ९०५२५ । (५) ह्रस्व ॅ, ॄ दीर्घ ॅ, ३ इत्याकाराण्यनुस्वारचिन्हानि १२३० ।

आद्य [illegible]

स्मृति : [illegible] अप्रमु [illegible]

| [illegible] | [illegible] | [illegible] | [illegible] | [illegible] |
|---|---|---|---|---|
| विष्णु | विष्णु | विष्णु | — | — |
| पराशर | पराशर | पराशर | — | — |
| दक्ष | दक्ष | दक्ष | — | — |
| संवर्त | संवर्त | संवर्त | — | व्यास |
| व्यास | व्यास | — | — | — |
| हारीत | हारीत | हारीत | — | — |
| शातातप | शातातप | शातातप | — | — |
| वशिष्ठ | वशिष्ठ | — | वशिष्ठ | — |
| यम | यम | यम | — | — |
| आपस्तंब | आपस्तंब | आपस्तंब | — | — |
| गौतम | गौतम | गौतम | — | — |
| शंख | शंख | शंख | — | — |
| लिखित | लिखित | लिखित | — | — |
| उशना | उशना | उशना | — | — |
| अत्रि | अत्रि | अत्रि | — | — |
| याज्ञवल्क्य | याज्ञवल्क्य = (योगीश्वर) | | — | — |
| देवल | — | — | देवल | — |
| भरद्वाज | — | — | भरद्वाज | — |
| शौनक | — | — | — | — |

१८

| | | | |
|---|---|---|---|
| मनु | मनु | — | — |
| बृहस्पति | बृहस्पति | — | — |
| अङ्गिरा | अंगिरा | — | — |
| कात्यायन | — | — | — |

२०

प्रचेता

१५. 'वाजिशाखिनः.' वायुपुराणे—शक्रसोमाग्निरुद्राश्च विश्वेदेवा-स्त्रिलोचनः । विधाता शङ्खपाणिश्च तथा सप्तर्षयोऽमलाः ॥ मृकुण्डकपिलव्यासयाज्ञवल्क्यपराशराः । वाल्मीकिर्नारदोऽगस्त्य इत्येते वाजिशाखिनः ॥

१६. 'शुक्लयजुर्वेदीयमाध्यन्दिनब्राह्मणप्रशंसा'. होलिर्भाष्ये—ऋग्वेदी च पितृस्थाने यजुर्वेदी पितामहः । त्रिवेदी प्रपितुः स्थाने विश्वेदेवा ह्यथर्ववित् ॥ वाजिविप्रविशेषेण श्राद्धकर्म निरन्तरम् । शुक्लाः प्रशस्ताः कृष्णास्तु यजुरुक्तनिषेधतः ॥ तस्मात्कव्यानि हव्यानि दातव्यानि द्विजातये । वाजिने दत्तमेकं तु तत्कोटिगुणितं भवेत् ॥

१७. 'अष्टादशविद्याः.' विष्णुपुराणे—अङ्गानि वेदाश्चत्वारो मीमांसान्यायविस्तरः । धर्मशास्त्रं पुराणं च विद्या ह्येताश्चतुर्दश ॥ आयुर्वेदो धनुर्वेदो गान्धर्वश्चेति ते त्रयः । अर्थशास्त्रं चतुर्थं तु विद्या ह्यष्टादशैव तु ॥

१८. 'अष्टादशस्मृतिकारिणः.' बृहन्मनुः—विष्णुः पराशरो दक्षः संवर्तव्यासहारिताः । शातातपो वसिष्ठश्च यमापस्तम्बगौतमाः ॥ देवलः शङ्खलिखितौ भरद्वाजोशनोऽत्रयः । शौनको याज्ञवल्क्यश्च दशाष्टौ स्मृतिकारिणः ॥ अन्यच्च—मनुर्बृहस्पतिर्दक्षो गौतमोऽथ यमोऽङ्गिराः । योगीश्वरः प्रचेताश्च शातातपपराशरौ ॥ संवर्तोशनसौ शङ्खलिखितावत्रिरेव च । विष्णवापस्तम्बहारीता धर्मशास्त्रप्रवर्तकाः ॥

१९. 'विंशतिस्मृतिकारिणः.' याज्ञवल्क्यः—मन्वत्रिविष्णुहारीतयाज्ञवल्क्योशनोङ्गिराः । यमापस्तम्बसंवर्ताः कात्यायनबृहस्पती ॥ पराशरो व्यासशङ्खौ लिखितो दक्षगौतमौ । शातातपो वसिष्ठश्च धर्मशास्त्रप्रयोजकाः ॥

२०. 'एकविंशतिस्मृतिकारिणः.' ग्रन्थांतरे—वसिष्ठो नारदश्चैव सुमन्तुश्च पितामहः । वसुः कृष्णाजिनिः सत्यव्रतो गार्ग्यश्च देवलः ॥ जमदग्निर्भरद्वाजः पुलस्त्यः पुलहः क्रतुः । आत्रेयश्छागलेयश्च मरीचिर्वत्स एव च ॥ पारस्कर, ऋष्यशृङ्गो बैजवापस्तथैव च । इत्येते स्मृतिकर्तार एकविंशतिरीरिताः ॥

२१. 'उपस्मृतिकाराः.' ग्रन्थान्तरे—जाबालिर्नाचिकेतश्च स्कन्दो लौगाक्षिकाश्यपौ । व्यासः सनत्कुमारश्च सुमन्तुश्च पितामहः ॥ व्याघ्रः कार्ष्णाजिनिश्चैव जातूकर्ण्यः कपिञ्जलः । बौधायनाश्च काणादो विश्वामित्रस्तथैव च ॥ पैठीनसिर्गोभिलश्च उपस्मृतिविधायकाः ॥

२२. 'अष्टादशपुराणानि.' वाचस्पतौ—ब्राह्मं पाद्मं वैष्णवं च शैवं भागवतं तथा । तथाऽन्यन्नारदीयं च मार्कण्डेयं च सप्तमम् ॥ आग्नेयमष्टमं प्रोक्तं भविष्यं नवमं तथा । दशमं ब्रह्मवैवर्तं लिङ्गमेकादशं तथा ॥ वाराहं

द्वादशं प्रोक्तं स्कान्दं चाऽत्र त्रयोदशम् । चतुर्दशं वामनं च कौर्मं पञ्चदशं तथा ॥ मात्स्यं च गारुडं चैव ब्रह्माण्डमष्टादशं तथा ॥

२३. 'अष्टादशोपपुराणानि.' कूर्मपुराणे—आद्यं सनत्कुमारोक्तं नारसिंहमतः परम् । तृतीयं नारदं प्रोक्तं कुमारेण तु भाषितम् ॥ चतुर्थं शिवधर्माख्यं साक्षान्नन्दीशभाषितम् । दुर्वाससोक्तमाश्चर्यं नारदोक्तमतः परम् ॥ कापिलं मानवं चैव तथैवोशनसेरितम् । ब्रह्माण्डं वारुणं चाथ कालिकाह्वयमेव च । माहेश्वरं तथा साम्बं सौरं सर्वार्थसञ्चयम् ॥ पराशरोक्तं प्रवरं तथा भागवतद्वयम् । इदमष्टादशं प्रोक्तं पुराणं कौर्मसंज्ञितम् ॥

२४. 'नित्यकर्मणि विशेषविचारः.' छान्दोग्योपनिषदि—यदेव विद्यया करोति श्रद्धया वीर्यवत्तरं भवति ॥ बुधः—न्यायागतेन द्रव्येण कर्माणि कुर्यादिति ॥ याज्ञवल्क्यः—योऽसौ विस्तरशः प्रोक्तः स्नानस्य विधिरुत्तमः । असामर्थ्यान्न कुर्याच्चेत्तत्रायं विधिरुच्यते ॥ स्नानमन्तर्जले चैव मार्जनाचमने तथा । जलाभिमन्त्रणं चैव तीर्थस्य परिकल्पनम् ॥ अघमर्षणसूक्तेन त्रिरावृत्तेन नित्यशः । स्नानाचरणमित्येतत्समुद्दिष्टं महात्मभिः ॥ यथाहनि तथा प्रातर्नित्यं स्नायादनातुरः । दन्तान् प्रक्षाल्य नद्यादौ गेहे[1] चेत्तदमन्त्रवत् ॥ कात्यायनः—अल्पत्वाद्धोमकालस्य बहुत्वात्स्नानकर्मणः । प्रातर्न तनुयात्स्नानं होमलोपो विगर्हितः ॥ उक्तं[2] च—अस्नात्वा स्वमलं भुङ्क्ते अजप्त्वा पूयशोणितम् । अजुह्वंश्च कृमीन्कीटानदद्श्च शकृत्तथा ॥ मनुः—नित्यं स्नात्वा शुचिः कुर्याद्देवर्षिपितृतर्पणम् । देवताभ्यर्चनं चैव नित्यहोमं तथैव च ॥ देवतानां गुरो राज्ञः स्नातकाचार्ययोस्तथा । नाक्रमेत्कामतश्छायां बभ्रुणो दीक्षितस्य च ॥ मैत्रप्रसाधनं स्नानं दन्तधावनमञ्जनम् । पूर्वाह्ण एव कुर्वीत देवतानां च पूजनम् ॥ दैवतान्यभिगच्छेत्तु धार्मिकांश्च द्विजोत्तमान् । ईश्वरं चैव रक्षार्थं गुरूनेव च पर्वसु ॥ गुरून्भृत्यांश्चोज्जिहीर्षन्नर्चिष्यन्देवतातिथीन् । सर्वतः प्रतिगृह्णीयान्न तु तृप्येत् स्वयं ततः ॥ नास्तिक्यं वेदनिन्दां च देवतानां च कुत्सनम् । द्वेषं दम्भं च मानं च क्रोधं तैक्ष्ण्यं च वर्जयेत् ॥ देवस्वं ब्राह्मणस्वं वा लोभेनोपहिनस्ति यः । स पापात्मा परे लोके गृध्रोच्छिष्टेन जीवति ॥ उद्धृत्य वामहस्तेन पानीयं न पिबेद्द्विज इति ॥ हारीतः—अनुष्ठितं तु यद्देवैर्मुनिभिर्यदनुष्ठितम् । नानुष्ठेयं मनु...

(१) गेहे चेत्तदमन्त्रवदित्यस्य वर्षासु वृष्ट्यतिशयजनितशीतभयेन हेमन्तशिशिरयोरत्यन्तशीतभयेन च यदा गृहाभ्यन्तरेऽवश्यकर्तव्यतया प्रातःस्नानं करोति तदा तेन मलप्रक्षालनरूपकममन्त्रकमेव स्नानं कार्यमित्यर्थः । (२) न तनुयाद्विस्तारविधिना न कुर्यादित्यर्थः । ... तु निरमेहोमादिनिमित्तत्वेन स्नानादेरतित्वरा नास्ति तदा तेनासङ्गवकालपर्यन्तं यथाविधि स्नानसन्ध्यादिकर्माणि कार्याणि ॥

र्व्येस्तत्तदुक्तं कर्म चाचरेत् ॥ **वराहपुराणे**—स्नानसन्ध्यातर्पणादि जपहोमसुरार्चनम् । उपवासवता कार्यं सायंसन्ध्याहुतिस्तथा ॥ **कर्मप्रदीपे**—पित्र्यमन्त्रानुद्रवणे आत्मालम्भे अवेक्षणे । अधोवायुसमुत्सर्गे प्रहासेऽनृतभाषणे ॥ मार्जारमूषकस्पर्शे आक्रुष्टे क्रोधसम्भवे । निमित्तेष्वेषु सर्वत्र कर्म कुर्वन्नपः स्पृशेत् ॥ तथा च तैलयन्त्रस्य शब्दो यावत्प्रवर्तते । तावत्कर्म न कर्तव्यं शूद्रान्त्यजगणस्य च ॥ भोजने हवने दाने उपहारे प्रतिग्रहे । सन्ध्यात्रयेऽम्बुपाने च पूर्वं पश्चाद्द्विराचमेत् ॥ **मण्डनः**—मुख्यकाले यदावश्यं कर्म कर्तुं न शक्यते । गौणकालेऽपि कर्तव्यं गौणोऽप्यत्रेदृशो भवेत् ॥ **याज्ञवल्क्यः**—देवर्त्विक्स्नातकाचार्यराज्ञां छायां परस्त्रियाः । नाक्रमेद्रक्तविण्मूत्रष्ठीवनोद्वर्तनादि वा ॥ देवतातिथिकार्यार्थं गुरुभृत्यार्थमेव च । सर्वतः प्रतिगृह्णीयादात्मवृत्त्यर्थमेव च ॥ **अग्निपुराणे**—सायं प्रातश्च यः सन्ध्यामुपास्ते शुद्धमानसः । जपन् हि पावनीं देवीं गायत्रीं वेदमातरम् ॥ यावन्तश्च पृथिव्यां हि चीर्णवेदव्रता द्विजाः । अचीर्णव्रतभेदा वा विकर्मपथमाश्रिताः ॥ तेषां हि पावनार्थाय गायत्री नित्यमेव हि ॥ **सन्ध्याकल्पे**—कुशहीना तु या सन्ध्या तिलहीनं तु तर्पणम् । दानं च दक्षिणाहीनं तत्सर्वं निष्फलं भवेत् ॥ सन्ध्या येन न विज्ञाता सन्ध्या नैवाप्युपासिता । जीवन्नेव भवेच्छूद्रो मृतः श्वा चाभिजायते ॥ न तिष्ठति तु यः पूर्वां नोपास्ते यस्तु पश्चिमाम् । स साधुभिर्बहिष्कार्यः सर्वस्माद्द्विजकर्मणः ॥ **भरद्वाजः**—सूतके मृतके वापि प्राणायाममम्नत्रकम् । तथा मार्जनमन्त्रांस्तु मनसोच्चार्य ..र्जयेत् ॥ गायत्रीं सम्यगुच्चार्य सूर्यायार्घ्यं निवेदयेत् । मार्जनं तु न वा ..र्भमुपस्थानं न चैव हि ॥ **उक्तं च**—तिलकं ब्रह्मसूत्रं च पाद्यमाचमनी..कम् । तिष्ठन्नेव सदा कुर्यात्सद्यः शूद्रो भवेद्द्विजः ॥ दीर्घकाष्ठे शिलापृष्ठे ..ष्कायां शकटे तटे । विवाहे बहुसम्पर्के स्पर्शदोषो न विद्यते ॥ **अङ्गिराः**—..ग्न्यगारे गवां गोष्ठे देवब्राह्मणसन्निधौ । आहारे जपकाले च पादुकानां विसर्जनं ॥ **नागदेवः**—दिवोदितानि कर्माणि प्रमादादकृतानि वै । शर्वर्याः प्रथमे ..मे तावत्कुर्याद्यथाक्रमम् ॥ राष्ट्रक्षोभे नृपक्षोभे रोगार्ते क्षयसूतके । सन्ध्यावन्दनविच्छित्तिर्न दोषाय कदाचन ॥ देवाग्निद्विजवैद्यादिकार्ये महति ..ा भवेत् । सन्ध्यालोपो न दोषोऽस्ति येन तत्पुण्यसाधनम् ॥ **ब्राह्मणस..स्वे हलायुधः**—शिरसोऽक्षरदैवत्यमाह्वानं च विसर्जनम् । ध्यानं जपं ..योगं च येषु क..षु यादृशम् ॥ ज्ञातव्यं ब्राह्मणैर्यत्नाद्ब्राह्मण्यं येन वै भवेत् । ..शूद्रपतितांश्चैव पाखण्डं च रजस्वलाम् । स्नानकाले न सम्भाषेज्जपहोमा..र्चिकेषु च ॥ **स्मृतिसङ्ग्रहे**—समयाचारिको धर्मो जातिदेशकुलोद्भवः । ग्रा-

माचाराः परिग्राह्याः सर्वत्रैव यथोदितम् । **याज्ञवल्क्यः**—देशकाल
पायेन द्रव्यं श्रद्धासमन्वितम् । पात्रे प्रदीयते यत्तत्सकलं धर्मलक्षणम् ।
**बृहस्पतिः**—अभक्ष्यपरिहारश्च संसर्गश्चाप्यनिन्दितैः । स्वधर्मे च व्यवस्था
शौचमेतत्प्रकीर्तितम् ॥ **गृह्यपरिशिष्टे**—बह्वल्पं वा स्वगृह्योक्तं यस्य या
त्प्रचोदितम् । तस्य तावति शास्त्रार्थे कृते सर्वः कृतो भवेत् ॥ यन्नाम्ना
स्वशाखायां पारक्यमविरोधि च । विद्वद्भिस्तदनुष्ठेयमग्निहोत्रादिकर्मवत् ।
**मनुः**—कृष्णसारस्तु चरति मृगो यत्र स्वभावतः । स ज्ञेयो यज्ञियो देशो
म्लेच्छदेशस्त्वतः परः ॥ **ब्राह्मे**—ब्रह्मण्याधाय कर्माणि निःसङ्गः कामव
र्जितः । प्रसन्नेनैव मनसा कुर्वाणो याति तत्पदम् ॥ **याज्ञवल्क्यः**—आर्षं
छन्दश्च दैवत्यं विनियोगं तथैव च । वेदितव्यं प्रयत्नेन ब्राह्मणेन विशेषतः ॥
अविदित्वा तु यः कुर्याद्याजनाध्यापनं जपम् । होममन्तर्जलादीनि तस्य
चाल्पफलं लभेत् ॥ यजुर्वेदस्य मन्त्राणां सम्यक्पाठस्य सिद्धये । प्रणवं प्राक्
प्रयुञ्जीत व्याहृतीस्तदनन्तरम् । सावित्रीं चानुपूर्व्येण ततो वेदं समारभेत् ॥
आत्मशाखामधीत्यादावन्यशाखामतः परम् । स्वशाखां यः परित्यज्य शाखा-
रण्डः स उच्यते ॥ **आश्वलायनः**—ऋषिदैवतछन्दांसि प्रणवं ब्रह्मय-
ज्ञके । मन्त्रादौ नोच्चरेच्छ्राद्धे यागकालेऽपि चैव हि ॥ **श्रावणीपद्धतिः**—
स्वरवर्णलयोपेतं मन्त्रस्थानक्रियान्वितम् । वेदमेवं पठेद्यस्तु स्वाध्यायफलम-
श्नुते ॥ **शौनकः**—ॐकारं व्याहृतीस्तिस्रो गायत्रीं त्रिपदां तथा । मन-
सैवमनुस्मृत्य वेदादिकमुपक्रमेत् ॥ **मनुः**—वेदोपाकरणे चैव स्वाध्याये
चैव नैत्यके ॥ नानुरोधोऽस्त्यनध्याये होममन्त्रेषु चैव हि ॥ नैत्यके नास्त्य-
नध्यायो ब्रह्मसत्रं हि तत्स्मृतम् ॥ **स्मृतिमहार्णवे**—अन्वाधाने कार्यर्षि
न्दौ यजुषां नैव कारयेत् ॥ **कात्यायनपरिभाषाखण्डे**—एकयुक्तांश्च
तसम्बुद्धौ यज्ञकर्मणि ॥ **प्रतिज्ञासूत्रे**—तानस्वराणि छन्दोवत्सूत्राणि
**पारस्करगृह्यसूत्रे हरिहरभाष्ये**—स्वाहां कुर्यान्न मन्त्रान्ते न चैव जुहुअ
द्धविः । स्वाहाकारेण हुत्वाग्नौ पश्चान्मन्त्रं समापयेत् ॥ **कृष्णभट्टीये**—
न च स्मरेदृषिच्छन्दौ श्राद्धे वैतानिके मखे । अग्निहोत्रे वैश्वदेवे विवाहास्म
विधौ तथा ॥ होमकाले न दृश्यन्ते प्रायश्छन्दर्षिदेवताः । शान्तिकादिषु
कर्मसु मन्त्रपाठजपादिषु ॥ होमे नैव प्रकर्तव्याः कदाचिदृषिदेवताः ॥ हो
लिभाष्ये—ॐकारसंज्ञं त्रिगुणं त्र्यक्षरं च त्रिदैवतम् । त्रिब्रह्मेति त्रि
स्थानं त्रिकल्पं त्रिप्रतिष्ठितम् ॥ **आपस्तम्बः**—तस्मादोमित्युदाहृत्य यज्ञ
दानतपःक्रियाः । प्रवर्तन्ते विधानोक्ताः सततं ब्रह्मवादिनाम् ॥ त्रिमात्रः
प्रयोक्तव्यः कर्मारम्भेषु सर्वशः । तिस्रः सार्धाश्च कर्तव्या मात्रास्तत्त्वार्थ

न्तकैः ॥ शौनकः—मन्त्रब्राह्मणयोर्वेदस्त्रिगुणो यत्र पठ्यते । यजुर्वेदः स विज्ञेयो ह्यन्ये शाखान्तराः स्मृताः ॥

२५. 'ऋषिच्छन्दादिः' छन्दोगब्राह्मणम्—यो हि वार्थोविदितार्षो यच्छन्दोब्राह्मणविनियोगो ब्राह्मणेन मन्त्रेण याजयति अध्यापयति स्थाणुं गच्छति गर्तं वा प्रतिपद्यते वा प्रमीयते पापीयान् भवति । यातयामान्यस्य छन्दांसि भवन्ति । अथ यो मन्त्रे वेद स सर्वमायुर्वेत्ति अयातयामान्यस्य छन्दांसि भवन्ति । तस्मान्मन्त्रे विद्यादिति ॥ व्यासः—अविदित्वा ऋषिं छन्दो दैवतं योगमेव च । योऽध्यापयेद्याजयेद्वा पापीयान् जायते तु सः ॥ 'मन्त्रर्षिः' योगियाज्ञवल्क्यः—येन यो ऋषिणा दृष्टो मन्त्रः सिद्धिश्च तेन वै । मन्त्रेण तस्य स प्रोक्त ऋषिभावस्तदात्मकः ॥ 'मन्त्रछन्दः'—छादनाच्छन्द उद्दिष्टं वाससी वाऽथवा कृते । आत्मा तु छादितो देवि मृत्योर्भीतैस्तु वै पुरा । आदित्यैर्वसुभी रुद्रैस्तेन छन्द इति स्मृतम् ॥ 'मन्त्रदेवताः'—यस्य यस्य च मन्त्रस्य प्रोद्दिष्टा या च देवता । तदाकारं भवेत्तस्य दैवतं देवतोच्यते ॥ 'मन्त्रविनियोगः'—पुरा कल्पे समुत्पन्ना मन्त्राः कर्मार्थमेव च । अनेनेदं तु कर्तव्यं विनियोगः स उच्यते ॥ निरुक्तं यत्तु मन्त्रस्य समुत्पत्तिः प्रयोजनम् । प्रतिष्ठानं स्तुतिश्चैव ब्राह्मणं चाभिधीयते ॥ एवं पञ्चविधं योगं जपकाले त्वनुसरेत् । होमे वान्तर्जले योगे स्वाध्याये याजने तथा ॥

२६. 'ॐकारपूर्वकत्वमुक्तम्' छन्दोगपरिशिष्टे—ॐकारपूर्वं हि योगोपासनं यानि नित्यानि पुण्यतमानि कर्माणि दानयज्ञतपःस्वाध्यायजपध्यानसन्ध्योपासनप्राणायामहोमदैवपैत्र्यमन्त्रोच्चारब्रह्मारम्भादीनि यच्चान्यत्किञ्चिच्छ्रेयस्तत्सर्वं प्रणवमुच्चार्य प्रवर्तयेत्समापयेत् ॥ स्वरितोदात्त एकाक्षर ॐकारो ऋग्वेदे । सर्वोदात्त एकाक्षर ॐकारो यजुर्वेदे । दीर्घोदात्त एकाक्षर ॐकारः साम्नि । संक्षिप्तोदात्त एकाक्षर ॐकारोऽथर्वणवेदे ॥ वाचस्पतौ तु—ॐकारस्य ब्रह्मविष्णुरुद्ररूपत्वमुक्तम् ॥ बौधायनः—अपि वा प्रणवमेव त्रिरन्तर्जले पठन्सर्वपापात् प्रमुच्यते सर्वपापात्पूतो भवति ॥

२७. 'ॐकारफलम्' योगियाज्ञवल्क्यः—माङ्गल्यं पावनं धर्म्यं सर्वकामप्रसाधनम् । ॐकारं परमं ब्रह्म सर्वमन्त्रेषु नायकम् ॥ यथा पर्णं पलाशस्य शङ्कुनैकेन धार्यते । तथा जगदिदं सर्वमोङ्कारेणैव धार्यते ॥ सिद्धानां च सर्वेषां वेदवेदान्तयोस्तथा । अन्येषामपि शास्त्राणां निष्ठार्थोङ्कार उच्यते ॥ आद्यं मन्त्राक्षरं ब्रह्म त्रयी यस्मिन् प्रतिष्ठिता । सर्वमन्त्रप्रयोगेषु ओमित्यादौ

प्रयुज्यते ॥ तेन सम्परिपूर्णानि यथोक्तानि भवन्ति हि । सर्वमन्त्राधियज्ञे ॐकारेण न संशयः । तत्तदोङ्कारयुक्तेन मन्त्रेण सफलं भवेत् ॥

२८. **'अथाशौचे कर्मत्यागविचारः.'** **कात्यायनः**—सूतके कर्म त्यागः सन्ध्यादीनां विधीयते । होमः श्रौते च कर्तव्यः शुष्कान्नेनाथ फलैः ॥ **जाबालिः**—जन्महानौ वितानस्य कर्मत्यागो विधीयते । शाला केवलो होमः कार्य एवान्यगोत्रजैः ॥ सन्ध्यां पञ्चमहायज्ञान्नैत्यकं स्मृतिक च । तन्मध्ये हापयेत्तेषां दशाहान्ते पुनः क्रियाः ॥ **मनुः**—उभयत्र द शाहानि कुलस्यान्नं न भुज्यते । दानं प्रतिग्रहो होमः स्वाध्यायश्च नि र्तते ॥ शुध्येद्विप्रो दशाहेन द्वादशाहेन भूमिपः । वैश्यः पञ्चदशाहेन श द्रो मासेन शुध्यति ॥ **यमः**—सूतके च कुलस्यान्नमभोज्यं मनुरब्रवीत् एकादशेऽह्नि कुर्यात्तु दानमध्ययनं तपः ॥ **पराशरः**—एकाहाद्ब्राह्मण शुध्येद्योऽग्निवेदसमन्वितः । त्र्यहात्केवलवेदज्ञो निर्गुणो दशभिर्दिनैः ॥ **आह्निककारिकासु**—देशान्तरे मृतं श्रुत्वा गोत्रिणं च स्वबान्धवम् स्वगोत्री शुध्यते सद्यो मातापित्रोर्दशाहकम् ॥ यदि गर्भविपातश्च श्रूयते मास सङ्ख्यया । यावन्मासस्थितो गर्भस्तावद्यामाश्च सूतकम् ॥ आचतुर्थाद्भवे स्रावः पातः पञ्चमषष्ठयोः । अत ऊर्ध्वं प्रसूतिः स्याद्दशाहं सूतकं भवेत् अजा गावो महिष्यश्च ब्राह्मणी च प्रसूतिका । दशरात्रेण शुध्यन्ति भू मिस्थं च नवोदकम् ॥ ग्राममध्ये मृतः कश्चिन्नरो नारी चतुष्पदः । न कुर्या दन्नपाकं च मृतं यावन्न नीयते ॥ अपां मध्ये गवां गोष्ठे विवाहे यज्ञमण्डपे राहोर्दर्शनकालस्य सूतकं न विधीयते ॥

२९. **'षोडशसंस्काराः.'** **संस्कारभास्करे**—गर्भाधानमतश्च पुंसवनं सीमन्तजाताभिधे नामाख्यं सह निष्क्रमेण च तथाऽन्नप्राशनं कर्म चूडाख्यं व्रतबन्धकोप्यथ चतुर्वेदव्रतानां पुरः केशान्तः सविसर्गकः परिणयः स्यात् षोडशी कर्मणाम् ॥

३०. **'नित्याचाराः.'** **याज्ञवल्क्यः**—श्रुतिः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः । सम्यक् सङ्कल्पजः कामो धर्ममूलमिदं स्मृतम् ॥ **वसिष्ठः**—आचारः परमो धर्मः सर्वेषामिति निश्चयः । हीनाचारःपरीतात्मा प्रेत्य चेह विनश्यति ॥ नैनं तपांसि न ब्रह्म नाग्निहोत्रं न दक्षिणा । हीनाचाराश्रितं भ्रष्टं तारयन्ति कथञ्चन ॥ तपोदानोपवासेषु व्रतेषु नियमेषु च । इज्याध्ययनधर्मेषु योऽनासक्तः स निष्क्रियः ॥ **पराशरः**—सन्ध्या स्नानं जपो होमः स्वाध्यायो देवतार्चनम् । वैश्वदेवाऽतिथेयश्च षट् कर्माणि दिने दिने ॥ **दक्षः**—आचारः प्रथमो धर्मः श्रुत्युक्तः स्मार्त एव च । तस्मादेतत्समायुक्तः

गृह्णीयादात्मनो द्विजः ॥ आचाराल्लभ्यते पूजा आचाराल्लभ्यते प्रजा । आचारादन्नमक्षय्यं तदाचारस्य लक्षणम् ॥ आचारात्प्राप्यते स्वर्ग आचारात्प्राप्यते सुखम् । आचारात्प्राप्यते मोक्ष आचारात्किं न लभ्यते ॥ तस्मात्—चतुर्णामपि वर्णानां आचारो धर्मपालनम् । आचारभ्रष्टदेहानां भवेद्धर्मः पराङ्मुखः ॥ दुराचारो हि पुरुषो लोके भवति निन्दितः । दुःखभोगी च सततं रोगी चाल्पायुषी भवेत् ॥ दक्षः—अनाश्रमी न तिष्ठेत दिनमेकमपि द्विजः । आश्रमेण विना तिष्ठन्प्रायश्चित्ती भवेद्द्विजः ॥ विष्णुपुराणे—यत्कृते दशभिर्वर्षैस्त्रेतायां हायनेन यत् । द्वापारे यत्तु मासेन अहोरात्रेण तत्कलौ ॥ तपसो ब्रह्मचर्यस्य जपादेश्च फलं द्विजाः । प्राप्नोति पुरुषस्तेन कलिमाप्नोति मानवः ॥ कपर्दिकायाम्—यत्रैविद्यात्मकं कर्म श्रौतं तदभिधीयते । श्रुतिस्मृत्यात्मकं कर्म स्मार्तं चैव तदुच्यते ॥ याजुर्वेद्यो मखेऽध्वर्युर्होता ऋक्शाखिकस्तथा । उद्गाता सामवेदी च श्रौतं कर्म त्रिधा स्मृतम् ॥

३१. 'सर्वकर्मसिद्ध्यर्थं सङ्कल्पावश्यकता.' यजुःसंहितायाम्—अग्ने व्रतपते व्रतं चरिष्यामि । इदमहमनृतात्सत्यमुपैमि सत्यं देवा अनृतं मनुष्या इति श्रुतेः ॥ बृहद्यमः—सङ्कल्पं च यथा कुर्यात्स्नानदानव्रतादिके । अन्यथा पुण्यकर्माणि निष्फलानि भवन्ति च ॥ मार्कण्डेयः—सङ्कल्पमूलः कामो वै यज्ञाः सङ्कल्पसम्भवाः । व्रतं नियमधर्मौ च सर्वे सङ्कल्पजाः स्मृताः ॥ ऋषिभट्टीये—सङ्कल्पश्चेन्मनसि मननं प्रोक्तरीत्याथ वाचा व्याहर्तव्यं तदनु च करेणाम्बुसेकस्त्रिधेति । वाङ्मात्रेण त्वरितकरणे केचिदूचन्ति चाम्बुक्षेपस्थानेऽञ्जलिमुपदिशन्त्यन्य एष्विष्ट आद्यः ॥

३२. 'समावर्तनोत्तरं ब्राह्मणस्य सदावर्तनम्.' पारस्करगृह्यसूत्रे—तस्य यमान्वक्ष्यामः । कामादितरः । नृत्यगीतवादित्राणि न कुर्यान्न गच्छेत् । कामं तु गीतं गायति चैव गीते वा रमत इति श्रुतेरपरम् । क्षेमे नक्तं ग्रामान्तरं न गच्छेन्न च धावेत् । उदपानावेक्षणवृक्षारोहणफलप्रपतनसन्धिसर्पणविवृतस्नानविषमलङ्घनशुष्कवदनसन्ध्यादित्यप्रेक्षणभैक्षणानि न कुर्यान्न ह वै स्नात्वा भिक्षेताप ह वै स्नात्वा भिक्षां जयतीति श्रुतेः । वर्षत्यप्रावृतो व्रजेदयं मे व्रजः पाप्मानमपहनदिति । अप्स्वात्मानं नावेक्षेत । अजातलोम्नीं विपुंसीं षण्ढश्च नोपहसेत् । गर्भिणीं विजन्येति ब्रूयात् । सकुलमिति नकुलम् । भगालमिति कपालम् । मणिधनुरितीन्द्रधनुः । गां धयन्तीं परस्मै नाचक्षीत । उर्वरायामनन्तर्हितायां भूमावुत्सर्पेस्तिष्ठन्न मूत्रपुरीषे कुर्यात् । स्वयं प्रशीर्णेन

काष्ठेन गुदं प्रमृजीत । विकृतं वासो नाच्छादयीत । दृढव्रतो वधत्र स्यात्सर्वतऽआत्मानङ्गोपायेत्सर्वेषां मित्रमिव॥२-७॥ तिस्रो रात्रीर्व्रतं चरेत् । अमांऽसाश्यमृण्मयपायी । स्त्रीशूद्रशवकृष्णशकुनिशुनां चादर्शनम् सम्भाषणं च तैः । शवशूद्रसूतकान्नानि च नाद्यात् । मूत्रपुरीषे ष्ठीवं चातपे न कुर्यात्सूर्याच्चात्मानं नान्तर्दधीत । तप्तेनोदकार्थान्कुर्वीत अवज्योत्य रात्रौ भोजनम् । सत्यवदनमेव वा । दीक्षितोऽप्यातपादी कुर्यात्प्रवर्ग्यवाँश्चेत् ॥ २-८ ॥

३३. 'नित्यकर्मविधौ संक्षेपेण कारिकाः.' वाचस्पतौ दक्षः— प्रातरुत्थाय कर्तव्यं यद्द्विजेन दिने दिने । तत्सर्वं सम्प्रवक्ष्यामि द्विजानामु कारकम् ॥ उदयास्तमयं यावन्न विप्रः क्षणिको भवेत् । नित्यनैमित्तिकैर्युक्तः काम्यैश्चान्यैरगर्हितैः ॥ यः स्वकर्म परित्यज्य यदन्यत्कुरुते द्विजः । अज्ञा नाद्यदि वा मोहात्स तेन पतितो भवेत् ॥ दिवसस्याद्यभागे तु कृत्यं तस्य पदिश्यते । द्वितीये च तृतीये च चतुर्थे पञ्चमे तथा ॥ षष्ठे च सप्तमे च अष्टमे च पृथक् पृथक् । विभागेष्वेषु यत्कर्म तत्प्रवक्ष्याम्यशेषत इति ॥

## ॥ प्रथमभागकृत्यानि ॥

३४. 'कारिकाः.' वाचस्पतौ दक्षः—उषः काले तु सम्प्राप्ते शौ कृत्वा यथार्थवत् । ततः स्नानं प्रकुर्वीत दन्तधावनपूर्वकम् ॥ सन्ध्यायां प्रभाते च मध्याह्ने च ततः पुनः । सन्ध्यां चोपासते यस्तु ब्राह्मणो हि शेषतः ॥ सन्ध्याकर्मावसाने तु स्वयं होमो विधीयते । स्वयं होमे फलं तदन्येन न जायते ॥ ऋत्विक् पुत्रो गुरुर्भ्राता भागिनेयोऽथ विट्पतिः एभिरेव हुतं यत्तु तद्धुतं स्वयमेव हि ॥ देवकार्यं ततः कृत्वा गुरु वीक्षणम् । देवकार्याणि पूर्वाह्णे मनुष्याणां च मध्यमे ॥ पितृणामपराह्णे कार्याण्येतानि यत्नतः । पौर्वाह्णिकं तु यत्कर्म यदि तत्सायमाचरेत् ॥ न त फलमाप्नोति वन्ध्यास्त्रीमैथुनाद्यथा । दिवसस्याद्यभागे तु सर्वमेतद्विधीयते ॥

३५. 'प्रातरुत्थानकालः.' मनुः—ब्राह्मे मुहूर्ते बुध्येत धर्मार्थौ नुचिन्तयेत् । कायक्लेशांश्च तन्मूलान्वेदतत्त्वार्थमेव च । (वेदतत्वार्थ ईश्वर

३६. 'ब्राह्ममुहूर्तः.' विष्णुपुराणे—रात्रेः पश्चिमयामस्य मुहूर्तो स्तृतीयकः । स ब्राह्म इति विज्ञेयो विहितः स प्रबोधने ॥ पञ्चपञ्च उ कालः सप्तपञ्चारुणोदयः । अष्टपञ्च भवेत्प्रातस्ततः सूर्योदयः स्मृतः ॥

(१) प्रथमादिभागास्त्वष्टधा विभक्तदिवसांशाः । ते च प्रत्येकं स्थूलमानेन पादोन तुर्घटिकात्मका ज्ञातव्याः ॥

न्वन्तरिः—धर्मार्थकामप्रीत्यर्थं सतां ग्रहणमुत्तमम् । प्राप्नुयात्स्वर्गवासं च नित्यमेव समाचरेत् ।

३७. 'प्रातरुत्थानाभावे दोषः.' रत्नावल्याम्—ब्राह्मे मुहूर्ते या निद्रा सा पुण्यक्षयकारिणी । तां करोति द्विजो मोहात्पादकृच्छ्रेण शुद्ध्यति ॥

३८. 'ईश्वरनामोच्चारणम्.' व्यासः—हे जिह्वे रससारज्ञे सर्वदा मधुरप्रिये । नारायणाख्यपीयूषं पिब जिह्वे निरन्तरम् ॥ त्रैलोक्यचैतन्यमयादिदेव श्रीनाथ विष्णो भवदाज्ञयैव । प्रातः समुत्थाय तव प्रियार्थं संसारयात्रामनुवर्तयिष्ये ॥ सुप्तः प्रबोधितो विष्णो हृषीकेशेन यत्त्वया । यद्यत्कारयसे कर्म तत्करोमि तवाज्ञया ॥ तस्मान्नारायण, रामकृष्ण, राधाकृष्ण, गौरीशङ्कर, विष्णो, गजानन, सच्चिदानन्द इत्यादि नामस्मरणं नित्यमेव कर्तव्यम् ॥

३९. 'शुचिर्भूतता.' कात्यायनः—उत्थाय नेत्रे प्रक्षाल्य शुचिर्भूत्वा समाहितः । परिजप्य च मन्त्रेण भक्षयेद्दन्तधावनम् ॥ अङ्गिराः—उत्थाय पश्चिमे रात्रे तत आचम्य चोदकम् । मुखशुद्ध्यर्थमादौ तु गण्डूषत्रितयं चरेत् ॥

४०. 'स्वकरतलाद्यवलोकनम्.' आचारप्रदीपे—कराग्रे वसते लक्ष्मीः करमध्ये सरस्वती । करमूले स्थितो ब्रह्मा प्रभाते करदर्शनम् ॥

४१. 'प्रातःकाले दर्शनीयपदार्थाः' आचारप्रदीपे नागदेवः—श्रोत्रियं सुभगां गां च अग्निमग्निचितिं तथा । प्रातरुत्थाय यः पश्येदापद्भ्यः स प्रमुच्यते ॥ अन्यच्च—भारद्वाजमयूराणां चाषस्य नकुलस्य च । प्रभाते दर्शनं श्रेष्ठं वामपृष्ठे विशेषतः ॥

४२. 'प्रातःकाले दर्शनायोग्याः पदार्थाः.' नागदेवः—पापिष्ठं भंगं चान्धं नग्नमुत्कृत्तनासिकम् । प्रातरुत्थाय यः पश्येत्तत्कलेरुपलक्षणम् ॥ भल्लातकं कर्षफलं काकमार्जारमूषकान् । क्लीबं च गर्दभं चैव न पश्येत्प्रातरेव हि ॥

४३. 'भूमिस्पर्शनम्.' मदनपारिजाते—समुद्रवसने देवि पर्वतस्तनमण्डिते । विष्णुपत्नि नमस्तुभ्यं पादस्पर्शं क्षमस्व मे ॥

४४. 'प्रातरुत्थानानन्तरं नद्यादौ जलग्रहणप्रकारः.' व्यासः—सरित्सरःसु वापीषु गर्तप्रस्रवणादिषु । स्नायात्प्रथममुद्धृत्य पञ्च पिण्डांस्तु वारिणा ॥ नागदेवः—अभावे कूपवापीनामनपाये पयोभृताम् । रजोदुष्टेऽपि पयसि उपभोगो न दुष्यति ॥ तस्मात्प्रथममुद्धृत्य जलं भूम्यां परित्यजेत् ॥

४५. 'विण्मूत्रोत्सर्गविधिः.' पारस्करगृह्यसूत्रे—तिष्ठन्न मूत्रपुरीषे कुर्यात् । स्वयं प्रशीर्णेन काष्ठेन गुदं प्रमृजीत । विकृतं वासो नाच्छादयीत ॥२।७।१५॥ मूत्रपुरीषे ष्ठीवनं चातपे न कुर्यात् ॥२।८।५॥

४६. 'शौचावश्यकता.' दक्षः—शौचे यत्नः सदा कार्यः शौचमूलो यतो द्विजः । शौचाचारविहीनस्य समस्ता निष्फलाः क्रियाः ॥ व्याघ्रपादः—शौचं तु द्विविधं प्रोक्तं बाह्यमाभ्यन्तरं तथा । मृज्जलाभ्यां स्मृतं बाह्यं भावशुद्धं तथान्तरम् ॥ वृद्धपराशरः—कृत्वाथ शौचं प्रक्षाल्य हस्तौ पादौ च मृज्जलैः । निबद्धशिखाकच्छस्तु द्विज आचमनं चरेत् ॥ औशनः—अकृत्वा पादयोः शौचमाचान्तोऽप्यशुचिर्भवेत् । सोपानत्को जलस्थो वा नोष्णीषी वाचमेद्बुधः ॥

४७. 'शौचस्थलम्.' अङ्गिराः—अयज्ञियैरनार्द्रैश्च तृणैः संछाद्य मेदिनीम् । कुर्यान्मूत्रपुरीषे तु शुचौ देशे समाहितः ॥ बौधायनः—देशं कालं तथात्मानं द्रव्यं द्रव्यप्रयोजनम् । उपपत्तिमवस्थां च ज्ञात्वा शौचं विधीयते ॥ दश हस्तान्परित्यज्य मूत्रं कुर्याज्जलाशये । दश हस्तान्पुरीषार्थे तीर्थे नद्यां चतुर्गुणम् ॥ अवकृष्य च विण्मूत्रं काष्ठलोष्टतृणादिना उदस्तवासा उत्तिष्ठेद्दृढं विधृतमेहनः ॥ धाराशौचं न कुर्वीत शौचशुद्धिमभीप्सता । चुलकैरेव कर्तव्यं हस्तशुद्धिविधानतः ॥ तीर्थे शौचं न कुर्वीत कुर्वीतोद्धृतवारिणा ॥

४८. 'शौचे उक्ता दिशः.' पराशरः—ततः प्रातः समुत्थाय कुर्याद्विण्मूत्रमेव च । नैर्ऋत्यामिषुविक्षेपादतीत्याभ्यधिकं भुवः ॥ यमः—प्रत्यङ्मुखस्तु पूर्वाह्णेऽपराह्णे प्राङ्मुखस्तथा । उदङ्मुखस्तु मध्याह्ने निशायां दक्षिणामुखः ॥ मनुः—छायायामन्धकारे च रात्रावहनि वा द्विजः । यथासुखं मुखं कुर्यात्प्राणबाधाभयेषु च ॥ (रात्रौ गृहेऽपि यथासुखं मुखं कुर्यात्) औशनः—शौचे च सुखमासीनः प्राङ्मुखो वाप्युदङ्मुखः । शिरः प्रावृत्य कर्णे वा मुक्तकच्छशिखोऽपि वा ॥

४९. 'शौचे उपवीतधारणप्रकारः.' अमरे—उपवीतं ब्रह्मसूत्रं प्रोद्धृते दक्षिणे करे । प्राचीनावीतमन्यस्मिन्निवीतं कण्ठलम्बितम् ॥ आह्निककारिकासु—मूत्रे तु दक्षिणे कर्णे पुरीषे वामकर्णके । उपवीतं सदा धार्यं मैथुने तूपवीतिवत् ॥ अङ्गिराः—कृत्वा यज्ञोपवीतं तु पृष्ठतः कण्ठलम्बितम् । विण्मूत्रे तु गृही कुर्याद्वामकर्णे समाहितः ॥ सायणीये—मलमूत्रं त्यजेद्विप्रो विस्मृत्यैवोपवीतधृक् । उपवीतं तदुत्सृज्य धार्यमन्यन्नवं तदा ॥ बौधायनः—सदोपवीतिना भाव्यं सदा बद्धशिखेन च । विशिखो

व्युपवीतश्च यत्करोति न तत्कृतम् ॥ हेमाद्रौ भरद्वाजः—दक्षिणं बाहुमुद्धृत्य वामस्कन्धे निवेशितम् । यज्ञोपवीतमित्युक्तं देवकार्येषु शस्यते ॥

५०. 'शौचे जलपात्रग्रहणविचारः.' सायणीये—गृहीत्वा जलपात्रं तु विण्मूत्रं कुरुते यदि । तज्जलं मूत्रसदृशमतश्चान्द्रायणं चरेत् ॥ (शौचोत्तरमिति शेषः) ॥

५१. 'शौचे मृत्तिकाग्रहणम्.' यमः—आहरेन्मृत्तिकां विप्रः कुलालात्सिकतां तथा । विप्रे तु शुक्ला ग्राह्योक्ता रक्ता क्षात्रे विधीयते ॥ हरिद्वर्णा वैश्ये तु शूद्रे कृष्णा प्रकीर्तिता ॥ भृगुः—यस्मिन् देशे तु यत्तोयं या च यत्रैव मृत्तिका । सैव तत्र प्रशस्ता स्यात् तया शौचं विधीयते ॥

५२. 'शौचे मृत्तिकालेपनम्.' याज्ञवल्क्यः—गृहीतशिश्नश्चोत्थाय मृद्भिरभ्युद्धृतैर्जलैः । गन्धलेपक्षयकरं शौचं कुर्यादतन्द्रितः ॥

५३. 'शौचे मृत्तिकाप्रमाणम्.' भृगुः—द्वे लिङ्गे मृत्तिके देये गुदे पञ्च करे दश । उभयोः सप्त दातव्या विट्शौचे मृत्तिकाः स्मृताः ॥ एकं शौचं गृहस्थस्य द्विगुणं ब्रह्मचारिणः ॥ वानप्रस्थस्य त्रिगुणं यतीनां च चतुर्गुणम् । यद्दिवा विहितं शौचं तदर्धं निशि कीर्तितम् । तदर्धमातुरे प्रोक्तमातुरस्यार्धमध्वनि ॥ शौनकः—आर्द्राऽमलकमात्रास्तु मूत्रशौचे हि मृत्तिका ॥ शातातपः—आर्द्रामलकमात्रास्तु ग्रासा इन्दुव्रते स्थिताः । तथैवाहुतयः सर्वाः शौचे देयास्तु मृत्तिकाः ॥ अन्तर्जलाद्देवगृहाद्वल्मीकान्मूषकगृहात् । कृतशौचस्थलाच्चैव न ग्राह्याः पञ्च मृत्तिकाः ॥ आदित्यपुराणे—स्त्रीशूद्रयोरर्धमानं शौचं प्रोक्तं मनीषिभिः । दिवा शौचस्य निश्यर्धं [illegible] पादो विधीयते ॥ आर्तः कुर्याद्यथाशक्तिः शक्तः कुर्याद्यथोदितम् ॥ [illegible]दकायाम्—पादतले तिस्रो मृत्तिका गुल्फयोश्चतस्र इति ॥ अरण्ये [illegible]ले रात्रौ चौरव्याकुलिते पथि ॥ कृत्वा मूत्रपुरीषं च द्रव्यहस्तेन शु[illegible]त । गङ्गातोयेन कृत्स्नाया मृदो भारैश्च गोमयैः । आमृतेराचरन् शौचं [illegible]वदुष्टो न शुध्यति ॥

५४. 'लिङ्गगुदप्रक्षालनम्.' आश्वलायनः—लिङ्गशौचं पुरा कृत्वा [illegible]दशौचं ततः परम् ॥ देवलः—धर्मविद्दक्षिणं हस्तमधःशौचे न योज[illegible] । तथा च वामहस्तेन नाभेरूर्ध्वं न शोधयेत् ॥

५५. 'पाणिपादप्रक्षालनम्.' नागदेवः—एकैकया मृदा पादौ [illegible]तौ प्रक्षाल्य यत्नतः । निबद्धशिखकच्छस्तु द्विज आचमनं चरेत् ॥

५६. 'गण्डूषादिविधिः.' नागदेवः—मूत्रे पुरीषे भुक्त्यन्ते रेतःप्र-

स्रवणे तथा । चतुरष्ट द्विषट् द्व्यष्ट गण्डूषैः शुद्धिमाप्नुयात् ॥ अन्तर्जा
शुचौ देशे उपविष्ट उदङ्मुखः । प्राग्वा ब्राह्मेण तीर्थेन द्विजो नित्यमु
स्पृशेत् ॥ आश्वलायनः—कुर्याद्द्वादश गण्डूषान् पुरीषोत्सर्जने ततः
मूत्रोत्सर्गे च चतुरो भोजनान्ते तु षोडश ॥ भक्ष्यभोज्यावसाने तु गण्
षाष्टकमाचरेत् ॥ प्रयोगपारिजाते—पुरतः सर्वदेवाश्च दक्षिणे पितर
था । ऋषयः पृष्ठतः सर्वे वामे गण्डूषमाचरेत् ॥

५७. 'कच्छविचारः.' सङ्ग्रहे—वामे पृष्ठे तथा नाभौ कच्छत्रय
दाहृतम् । त्रिभिः कच्छैः परिज्ञेयो विप्रो यः स शुचिर्भवेत् ॥ ग्रन्थान्तरे—
आदौ कच्छस्ततो नीवी नाभिमध्ये च वाससी । नीवी दक्षिणतः स्था
एतत् त्रिकच्छलक्षणम् ॥ कच्छेन सहितो विप्रो मूत्रोत्सर्गं करोति चेत्
अज्ञानाज्ज्ञानतो वापि पादकृच्छ्रेण शुध्यति ॥ गुह्यं प्रक्षाल्य सलिलैर्मूत्रो
त्सर्गादनन्तरम् । गण्डूषत्रितयं कृत्वा तेन शुद्धो भवेद्द्विजः ॥ मुक्तकच्छ
यो विप्रो धरण्यां पादतश्चरेत् । पदे पदे सुरापानं प्रायश्चित्तं न विद्यते

५८. 'मौनधारणम्.' हारीतः—उच्चारे मैथुने चैव प्रस्रावे दन्त
धावने । श्राद्धे भोजनकाले च षट्सु मौनं समाचरेत् ॥ अङ्गिराः—
न्ध्ययोरुभयोर्जाप्ये भोजने दन्तधावने । पितृकार्ये च दैवे च तथा मूत्र
रीषयोः ॥ गुरूणां सन्निधौ दाने योगे चैव विशेषतः । एतेषु मौनमाति
न्स्वर्गं प्राप्नोति मानवः ॥

५९. 'मुखमार्जनविधिः.' पारस्करगृह्यसूत्रे—दन्तधावनमन्त्रः
औदुम्बरेण दन्तान्धावेत । अन्नाद्याय व्यूहध्वꣳ सोमो राजाऽयमाग
मत् । स मे मुखं प्रमार्क्ष्यते यशसा च भगेन चेति ॥२।६।१७
हरिहरभाष्ये—औदुम्बरेण द्वादशाङ्गुलसंमितेन कनिष्ठिकाग्र
स्थूलेनोदुम्बरकाष्ठेन अन्नाद्यायव्यूहध्वमितिमंत्रेण दन्तान्धावयेत्

६०. 'दन्तधावनावश्यकता.' अत्रिः—मुखे पर्युषिते नित्यं
त्यप्रयतो नरः । दन्तधावनमुद्दिष्टं जिह्वोल्लेखनिका तथा ॥

६१. 'दन्तधावने वनस्पतिप्रार्थना.' विश्वामित्रकल्पे—आयु
यशो वर्चः प्रजाः पशून् वसूनि च । ब्रह्म प्रज्ञां च मेधां च त्वं नो दे
वनस्पते ॥

६२. 'दन्तधावने उक्तकाष्ठानि.' नागदेवः—करञ्जोदुम्बरौ च
कदम्बो लोध्रचम्पकौ । बदरीति द्रुमाश्चैते प्रोक्ता दन्तप्रधावने ॥ वाचस्
तिः—अथो मुखविशुद्ध्यर्थं गृह्णीयाद्दन्तधावनम् । आचान्तोऽप्यशुचिर्यस्
दकृत्वा दन्तधावनम् ॥ आम्राम्रातकधात्रीजमङ्कोटखदिरोद्भवम् । शम्या

मार्गखर्जूरीशेलुश्रीपर्णिपीलुजम् ॥ राजादनं च नारङ्गं कषायं कटुकण्टकम् । क्षीरवृक्षोद्भवं वापि प्रशस्तं दन्तधावने ॥ जिह्वोल्लेखनिकां वापि कुर्याच्चापाकृतिं शुभाम् । ततः कुर्यात्प्रयत्नेन शुद्ध्यर्थं दन्तधावनम् ॥ 'उक्तदन्तधावनकाष्ठे गुणाः.' नृसिंहपुराणे—तिन्तिणिर्वेणुपृष्ठं च आम्रनिम्बौ तथैव च । सर्जे धैर्यं वटे दीप्तिः करञ्जे विजयो रणे ॥ प्लक्षजे चार्थसम्पत्तिर्बदर्यां मधुरः स्वरः । खादिरे चैव सौभाग्यं बिल्वे तु विपुलं धनम् ॥ उदुम्बरे च वाक्सिद्धिर्बन्धूके च दृढा मतिः । सैभ्रे च कीर्तिः सौभाग्यं पालाशे सिद्धिरुत्तमा ॥ कदम्बे सकला लक्ष्मीराम्र आरोग्यमेव च । अपामार्गे स्मृतिर्मेधा प्रज्ञा वाणी वपुर्धृतिः ॥ आयुः शीलं यशो लक्ष्मीः सौभाग्यं चोपजायते । अर्केण हन्ति रोगांस्तु बीजपूरेण तु व्यथाम् ॥ दाडिमे सिन्दुवारे च उटजे कुटजे तथा । जाती च करमर्दी च दुःस्वप्नं नाशयेदिति ॥ ककुभेन तथायुष्मान्भवेत्पलितवर्जितः । तस्माच्छुष्कं तदार्द्रं वा भक्षयेद्दन्तधावनम् ॥

६३. 'दन्तधावनविधिः.' धन्वन्तरिः—तत्रादौ दन्तपवनं द्वादशाङ्गुलमायतम् । कनिष्ठिकापरीणाहमृज्वग्रन्थिकमव्रणम् ॥ अयुग्मग्रन्थि यच्चापि प्रत्यग्रं शस्तभूमिजम् । अवेक्ष्यर्तुं च दोषं च रसं वीर्यं च योजयेत् ॥ कषायं मधुरं तिक्तं कटुकं प्रातरुत्थितः । निम्बश्च तिक्तके श्रेष्ठः कषाये खदिरस्तथा ॥ मधूको मधुरे श्रेष्ठः करञ्जः कटुके तथा । क्षौद्रव्योषत्रिवर्गोक्तं सतैलं सैन्धवेन च ॥ चूर्णेन तेजोवत्याश्च दन्तान्नित्यं विशोधयेत् । एकैकं घर्षयेद्दन्तं मृदुना कूर्चकेन च ॥ दन्तशोधनचूर्णेन दन्तमांसान्यबाधयन् । जिह्वानिर्लेखनं रौप्यं सौवर्णं वार्क्षमेव च ॥ तन्मलापहरं शस्तं मृदु श्लक्ष्णं दशाङ्गुलम् । मुखवैरस्यदौर्गन्ध्यशोफजाड्यहरं [illegible]म् ॥ दन्तदार्ढ्यकरं रुच्यं स्नेहगण्डूषधारणम् । क्षीरवृक्षकषायैर्वा क्षीरेण [illegible]त्रैमिश्रितैः ॥ भिल्लोदककषायेण तथैवामलकस्य वा । प्रक्षालयेन्मुखं स्वस्थः शीतोदकेन वा ॥

६४. 'दन्तधावनकाष्ठाभावे.' आचारार्के—तिन्तिण्यादिविहितवृक्षोद्भवेन चूर्णीकृताग्रेण प्रक्षालितेन शुष्केणार्द्रेण वा दन्तधावनं कुर्यात् ॥ [illegible]गदेवः—अभावे दन्तकाष्ठस्य प्रतिषिद्धदिने तथा । अपां द्वादशगण्डूषैर्विदध्याद्दन्तधावनम् ॥ यद्वा तृणपर्णोदकैरङ्गुल्या वा दन्तान्धावयेत् ॥

६५. 'वर्ज्यदन्तधावनकाष्ठानि.' गर्गः—कुशं काशं पलाशं च [illegible]शुपं यस्तु भक्षयेत् । तावद्भवति चाण्डालो यावद्गङ्गां न पश्यति ॥ [illegible]र्धशुष्कं त्वचाहीनं यत्नेन परिवर्जयेत् । पतितं चातिरिक्तं च कीटविद्धं

तथैव च ॥ नागदेवः—नाङ्गुलीभिश्च मृद्भिश्च पर्णैर्लोष्टैश्च भस्मना । न यसैश्च तथा लोहैः सदा दन्तान् मृजेद्द्विजः ॥

६६. 'दन्तधावनकाष्ठप्रमाणम्.' नागदेवः—दशाङ्गुलं तु विप्राणां क्षत्रियाणां नवाङ्गुलम् । अष्टाङ्गुलं तु वैश्यानां शूद्राणां सप्तसंमितम् ॥ गर्गः—चतुरङ्गुलमात्रं तु नारीणां नात्र संशयः ॥ विष्णुस्मृतिः—कनी... ग्रसमस्थौल्यं सकूर्चं द्वादशाङ्गुलम् । प्रातर्भूत्वा च यतवाग्भक्षयेद्दन्तधावनम् ॥

६७. 'दन्तधावनकाष्ठवर्जनकालः.' व्यासः—प्रतिपद्दर्शषष्ठी नवम्यां रविवासरे । दन्तानां काष्ठसंयोगो दहत्यासप्तमं कुलम् ॥ आ... चार्यः—अष्टम्योश्च चतुर्दश्योः पञ्चदश्यां त्रिजन्मसु । व्यतीपाते संक्रान्त्यां दन्तकाष्ठं न भक्षयेत् ॥

६८. 'दन्तधावने दिग्विशेषः.' विष्णुः—प्राङ्मुखस्य धृतिः सौख्यं शरीरारोग्यमेव च । दक्षिणेन तथा कष्टं पश्चिमेन पराजयः ॥ उत्तरे गवां नाशः स्त्रीणां परिजनस्य च । पूर्वोत्तरे तु दिग्भागे सर्वान्कामानवाप्नुयात् ॥

६९. 'दन्तघर्षणान्ते गण्डूषविधिः.' शौनकः—पश्चाद्द्वादशगण्डूषैर्विदध्याद्दन्तधावनम् । स्मृत्वोङ्कारं च गायत्रीं बध्नीयाद्वै शिखां ततः ॥

७०. 'मुखप्रक्षालनानन्तरं देहशुद्धिः.' व्यासः—अपवित्रः पवित्रो वा सर्वावस्थां गतोऽपि वा । यः स्मरेत्पुण्डरीकाक्षं स बाह्याभ्यन्तरः शुचिः ॥ अनेन प्रकारेणाद्भिः शरीरं मार्जयेत् ॥

७१. 'मुखप्रक्षालनानन्तरं सूर्यप्रार्थना.'—आदित्यस्य नमस्कारं ये कुर्वन्ति दिने दिने । जन्मान्तरसहस्रेषु दारिद्र्यं नोपजायते ॥

७२. 'मुखप्रक्षालनानन्तरं तुलसीप्रार्थना.'—महाप्रसादजननी सर्वसौभाग्यवर्धिनी । आधिव्याधिहरा नित्यं तुलसी त्वं नमोऽस्तु ते ॥

७३. 'मुखप्रक्षालनानन्तरं गोप्रार्थना.'—गावो मे अग्रतः सन्तु गावो मे सन्तु पृष्ठतः । गावो मे हृदये सन्तु गवां मध्ये वसाम्यहम् ॥

७४. 'प्रातःस्मरणे नारायणस्तुतिः.' आचारमयूखे व्यासः—प्रातः स्मरामि भवभीतिमहार्तिशान्त्यै नारायणं गरुडवाहनमब्जनाभम् । ग्राहाभिभूतवरवारणमुक्तिहेतुं चक्रायुधं तरुणवारिजपत्रनेत्रम् ॥ प्रातर्नमामि मनसा वचसा च मूर्ध्ना पादारविन्दयुगुलं परमस्य पुंसः । नारायणस्य न... कार्णवतारणस्य पारायणप्रवणविप्रपरायणस्य ॥ प्रातर्भजामि भजतामभयङ्करं तं प्राक्सर्वजन्मकृतपापभयापहत्यै । यो ग्राहवक्त्रपतिताङ्घ्रिगजेन्द्रघोरशो...

कप्रणाशनकरो धृतशङ्खचक्रः ॥ श्लोकत्रयमिदं पुण्यं प्रातः प्रातः पठेन्नरः । लोकत्रयगुरुस्तस्मै दद्यादात्मपदं हरिः ॥

७५. 'गणेशस्तुतिः.' सद्धर्मचिन्तामणौ—प्रातः स्मरामि गणनाथमनाथबन्धुं सिन्दूरपूर्णपरिशोभितगण्डयुग्मम्।उद्दण्डविघ्नपरिखण्डनचण्डदण्डमाखण्डलादिसुरनायकवृन्दवन्द्यम् ॥ प्रातर्नमामि चतुराननवन्द्यमानमिच्छानुकूलमखिलं च वरं ददानम् । तं तुन्दिलं द्विरसनाधिपयज्ञसूत्रं पुत्रं विलासचतुरं शिवयोः शिवाय ॥ प्रातर्भजाम्यभयदं खलु भक्तशोकदावानलं गणविभुं वरकुञ्जरास्यम् । अज्ञानकाननविनाशनहव्यवाहमुत्साहवर्धनमहं सुतमीश्वरस्य ॥ श्लोकत्रयमिदं पुण्यं सदा साम्राज्यदायकम् । प्रातरुत्थाय सततं यः पठेत्प्रयतः पुमान् ॥

७६. 'सूर्यस्तुतिः.' सद्धर्मचिन्तामणौ—प्रातः स्मरामि खलु तत्सवितुर्वरेण्यं रूपं हि मण्डलमृचोऽथ तनुर्यजूंषि । सामानि यस्य किरणाः प्रभवादिहेतुं ब्रह्माहरात्मकमलक्ष्यमचिन्त्यरूपम् ॥ प्रातर्नमामि तरणिं तनुवाङ्मनोभिर्ब्रह्मेन्द्रपूर्वकसुरैर्नुतमर्चितं च । वृष्टिप्रमोचनविनिग्रहहेतुभूतं त्रैलोक्यपालनपरं त्रिगुणात्मकं च ॥ प्रातर्भजामि सवितारमनन्तशक्तिं पापौघशत्रुभयरोगहरं परं च । तं सर्वलोककलनात्मककालमूर्तिं गोकण्ठबन्धनविमोचनमादिदेवम् ॥ श्लोकत्रयमिदं भानोः प्रातः प्रातः पठेत्तु यः । स सर्वव्याधिनिर्मुक्तः परं सुखमवाप्नुयात् ॥

७७. 'देवीस्तुतिः.' सद्धर्मचिन्तामणौ—प्रातः स्मरामि शरदिन्दुकरोज्ज्वलाभां सद्रत्नवन्मकरकुण्डलहारभूषाम् । दिव्यायुधोर्जितसुनीलसहस्रहस्तां रक्तोत्पलाभचरणां भवतीं परेशाम् ॥ प्रातर्नमामि महिषासुरचण्डमुण्डशुम्भासुरप्रमुखदैत्यविनाशदक्षाम् । ब्रह्मेन्द्ररुद्रमुनिमोहनशीललीलां चण्डीं समस्तसुरमूर्तिमनेकरूपाम् ॥ प्रातर्भजामि भजतामभिलाषदात्रीं धात्रीं समस्तजगतां दुरितापहन्त्रीम् । संसारबन्धनविमोचनहेतुभूतां मायां परां समधिगम्य परस्य विष्णोः ॥ श्लोकत्रयमिदं देव्याश्चण्डिकायाः पठेन्नरः । सर्वान्कामानवाप्नोति विष्णुलोके महीयते ॥

७८. 'शिवस्तुतिः.' सद्धर्मचिन्तामणौ—प्रातः स्मरामि भवभीतिहरं सुरेशं गङ्गाधरं वृषभवाहनमम्बिकेशम् । खट्वाङ्गशूलवरदाभयहस्तमीशं संसाररोगहरमौषधमद्वितीयम् ॥ प्रातर्नमामि गिरिशं गिरिजार्धदेहं सर्गस्थितिप्रलयकारणमादिदेवम् । विश्वेश्वरं विजितविश्वमनोभिरामं संसाररोगहरमौषधमद्वितीयम् ॥ प्रातर्भजामि शिवमेकमनन्तमाद्यं वेदान्तवेद्यमखिलं पुरुषं महान्तम् । नामादिभेदरहितं षडभावशून्यं संसाररोगहरमौषधमद्वि-

तीयम् । प्रातः समुत्थाय शिवं विचिन्त्य श्लोकत्रयं येऽनुदिनं पठन्ति । ते दुःखजातं बहुजन्मसञ्चितं हित्वा पदं यान्ति तदेव शम्भोः ॥

७९. 'रामस्तुतिः' आह्निककर्मप्रकाशे—प्रातः स्मरामि रघुनाथमुखारविन्दं मन्दस्मितं मधुरभाषि विशालभालम् । कर्णावलम्बिचलकुण्डलशोभिगण्डं कर्णान्तदीर्घनयनं नयनाभिरामम् ॥ प्रातर्भजामि रघुनाथकरारविन्दं रक्षोगणाय भयदं वरदं निजेभ्यः । यद्राजसंसदि विभज्य महेशचापं सीताकरग्रहणमङ्गलमाप सद्यः ॥ प्रातर्नमामि रघुनाथपदारविन्दं वज्राङ्कुशादिशुभरेखि सुखावहं मे । योगीन्द्रमानसमधुव्रतसेव्यमानं शापापहं सपदि गौतमधर्मपत्न्याः ॥ प्रातर्वदामि वचसा रघुनाथनाम वाग्दोषहारि सकलं शमलं निहन्ति । यत्पार्वती स्वपतिना सह भोक्तुकामा प्रीत्या सहस्रहरिनाम समं जजाप ॥ प्रातः श्रये श्रुतिनुतां रघुनाथमूर्तिं नीलाम्बुदोत्पलसितेतररत्ननीलाम् । आमुक्तमौक्तिकविशेषविभूषणाढ्यां ध्येयां समस्तमुनिभिर्जनमुक्तिहेतुम् ॥ यः श्लोकपञ्चकमिदं प्रयतः पठेद्धि नित्यं प्रभातसमये पुरुषः प्रबुद्धः । श्रीरामकिङ्करजनेषु स एव मुख्यो भूत्वा प्रयाति हरिलोकमनन्यलभ्यम् ॥

८०. 'ग्रहस्तुतिर्वामनपुराणे.'—ब्रह्मा मुरारिस्त्रिपुरान्तकारी भानुः शशी भूमिसुतो बुधश्च । गुरुश्च शुक्रः शनिराहुकेतवः कुर्वन्तु सर्वे मम सुप्रभातम् ॥

८१. 'ऋषिस्तुतिः'—भृगुर्वसिष्ठः क्रतुरङ्गिराश्च मनुः पुलस्त्यः पुलहश्च गौतमः । रैभ्यो मरीचिश्च्यवनश्च दक्षः कुर्वन्तु सर्वे मम सुप्रभातम् ॥ सनत्कुमारः सनकः सनन्दनः सनातनोऽप्यासुरिपिङ्गलौ च । सप्त स्वराः सप्त रसातलानि कुर्वन्तु सर्वे मम सुप्रभातम् ॥ सप्तार्णवाः सप्त कुलाचलाश्च सप्तर्षयो द्वीपवनानि सप्त । भूरादिकृत्वा भुवनानि सप्त कुर्वन्तु सर्वे मम सुप्रभातम् ॥ पृथ्वी सगन्धा सरसास्तथापः स्पर्शी च वायुर्ज्वलितं च तेजः । नभः सशब्दं महता सहैव कुर्वन्तु सर्वे मम सुप्रभातम् ॥ इत्थं प्रभाते परं पवित्रं पठेत्स्मरेद्वा शृणुयाच्च तद्वत् । दुःस्वप्नणाशस्त्विह सुप्रभातं भवेच्च नित्यं भगवत्प्रसादात् ॥

८२. 'पुण्यश्लोकजनस्तुतिः.' आचारमयूखे—पुण्यश्लोको नलो राजा पुण्यश्लोको युधिष्ठिरः । पुण्यश्लोका च वैदेही पुण्यश्लोको जनार्दनः ॥ अश्वत्थामा बलिर्व्यासो हनूमांश्च विभीषणः । कृपः परशुरामश्च सप्तैते चिरजीविनः ॥ सप्तैतान् संस्मरेन्नित्यं मार्कण्डेयमथाष्टमम् । जीवेद्वर्षशतं सोऽपि सर्वव्याधिविवर्जितः ॥ अहल्या द्रौपदी सीता तारा मन्दोदरी तथा ।

पञ्चकं ना स्मरेन्नित्यं महापातकनाशनम् ॥ अविमुक्तचरणयुगलं दक्षिणमूर्तेश्च कुक्कुटचतुष्कम्। स्मरणमपि वाराणस्या निहन्ति दुःस्वप्नमपशकुनं च॥

८३. 'अनेकदेवतास्तुतिफलम्.' पद्मपुराणे—उमा उषा च वैदेही रमा गङ्गेति पञ्चकम्। प्रातरेव पठेन्नित्यं सौभाग्यं वर्धते सदा ॥ सोमनाथो वैजनाथो धन्वन्तरिरथाश्विनौ। पञ्चैतान्यः स्मरेन्नित्यं व्याधिस्तस्य न बाधते ॥ कपिला कालियोऽनन्तो वासुकी तक्षकस्तथा। पञ्चैतान्स्मरतो नित्यं विषबाधा न बाधते ॥ हरं हरिं हरिश्चन्द्रं हनूमन्तं हलायुधम्। पञ्चकं वै स्मरेन्नित्यं घोरसङ्कटनाशनम् ॥ रामं स्कन्दं हनूमन्तं वैनतेयं वृकोदरम्। पञ्चैतान्संस्मरेन्नित्यं भवबाधा विनश्यति ॥ आदित्यश्च उपेन्द्रश्च चक्रपाणिर्महेश्वरः। दण्डपाणिः प्रतापी स्यात्क्षुद्बाधा च न बाधते ॥ वसुर्वरुणसोमौ च सरस्वती च सागरः। पञ्चैतान्संस्मरेद्यत्र तृषा तत्र न बाधते ॥ सनत्कुमारदेवर्षिशुकभीष्मप्लवङ्गमाः। पञ्चैतान् स्मरतो नित्यं कामस्तस्य न बाधते ॥ रामलक्ष्मणौ सीता च सुग्रीवो हनुमान् कपिः। पञ्चैतान्स्मरतो नित्यं महाबाधा प्रमुच्यते ॥ कर्कोटकस्य नागस्य दमयन्त्या नलस्य च। ऋतुपर्णस्य राजर्षेः कीर्तनं कलिनाशनम् ॥ कार्तवीर्यार्जुनो नाम राजा बाहुसहस्रवान्। तस्य स्मरणमात्रेण गतं नष्टं च लभ्यते ॥ प्रह्लादनारदपराशरपुण्डरीकव्यासाम्बरीषशुकशौनकभीष्मदाल्भ्यान्। रुक्माङ्गदार्जुनवसिष्ठविभीषणादीन्पुण्यानिमान्परमभागवतान् नमामि ॥ धर्मो विवर्धति युधिष्ठिरकीर्तनेन पापं प्रणश्यति वृकोदरकीर्तनेन। शत्रुर्विनश्यति धनञ्जयकीर्तनेन माद्रीसुतौ कथयतां न भवन्ति रोगाः ॥ काश्यां वै भैरवो देवः संसारभयनाशनः। अनेकजन्मजं पापं स्मरणेन विनश्यति ॥ वाराणस्यां पूर्वभागे व्यासो नारायणः स्वयम्। तस्य स्मरणमात्रेण अज्ञानी ज्ञानवान्भवेत् ॥ वाराणस्यां परे भागे भीमचण्डी महासती। तस्याः स्मरणमात्रेण जयी भव सर्वदा ॥ वाराणस्यामुत्तरे तु सुमन्तुर्नाम वै द्विजः। तस्य स्मरणमात्रेण निर्धनो धनवान्भवेत् ॥ वाराणस्यां दक्षिणे तु कुक्कुटो नाम द्विजः। तस्य स्मरणमात्रेण दुःस्वप्नः सुखदो भवेत् ॥ विश्वेशं माधवं ढुण्ढिं दण्डपाणिं च भैरवम्। वन्दे काशीं गुहां गङ्गां भवानीं मणिकर्णिकाम् ॥

८४. 'स्नानात्पूर्वं भक्षणयोग्याः पदार्थाः.' चतुर्विंशतिमते—इक्षुरापः फलं मूलं पयस्ताम्बूलमौषधम्। भक्षयित्वापि कर्तव्याः स्नानदानादिकाः क्रियाः ॥ ( आरोग्याभाव एवायं विधिः। आरोग्ये सति तु स्नानसन्ध्यादिकं कृत्वैवेक्ष्वादिभक्षणं कार्यम् ) ॥

८५. 'स्नानम्.' कात्यायनपरिशिष्टसूत्रे—अथातो नित्यस्ना नद्यादौ मृद्गोमयकुशतिलसुमनसऽआहृत्योदकान्तं गत्वा शुचौ दे स्थाप्य प्रक्षाल्य पाणिपादं कुशोपग्रहो बद्धशिखी यज्ञोपवीत्या म्योरुꣳ हीति तोयमामन्त्र्यावर्त्तयेद्येते शतमिति सुमित्रिया नऽइ पोञ्जलिनादाय दुर्मित्रियाऽइति द्वेष्यं प्रति निषिञ्चेत् कटिम्बस्तू रू जङ्घे चरणौ करौ मृदा त्रिस्त्रिः प्रक्षाल्याचम्य मनस्योदकमाल दङ्गानि मृदेदंविष्णुरिति सूर्याभिमुखो निमज्जेदापोऽअस्मानि स्नात्वोदिदाभ्यऽइत्युन्मज्य निमज्योन्मज्याचम्य गोमयेन वि म्पेन्मानस्तोकऽ इति । ततोऽभिषिञ्चेदिमं मे वरुणेति चतसृभिर्म प्रऽउदुत्तमं मुञ्चन्त्वेवभृथेत्यन्ते चैतन्निमज्योन्मज्याचम्य दर्भैः पा येदापोहिष्ठेति तिसृभिरिदमापो हविष्मतीर्देवीरापऽइति द्वाभ्या पोदेवा द्रुपदादिव शन्नो देवीरपाꣳ रसमपोदेवीः पुनन्तु मेति न भिश्चित्पतिर्मेत्योङ्कारेण व्याहृतिभिर्गायत्र्या चादावन्ते चान्तर्जलेऽ घमर्षणं त्रिरावर्तयेद्द्रुपदादिवायज्ञैरिति वा त्र्यृचं प्राणायामं सशिरसमोमिति वा विष्णोर्वा स्मरणम् ॥

८६. 'स्नानकालः.' हेमाद्रौ—अरुणकिरणयुक्तां प्राचीं दिशम लोक्य स्नायादिति ॥ याज्ञवल्यः—प्रातःस्नानं प्रशंसन्ति दृष्टादृष्ट हि तत् । सर्वमर्हति शुद्धात्मा प्रातःस्नायी जपादिकम् ॥ अत्यन्तमलि कायो नवछिद्रसमन्वितः । स्रवत्येव दिवारात्रौ प्रातःस्नानं विशोधनम् दक्षः—प्रातःस्नानं चरित्वाथ शुद्धे तीर्थे विशेषतः । प्रातःस्नानाद्यतः शु ध्येत्कायोऽयं मलिनः सदा ॥ नोपसर्पन्ति वै दुष्टाः प्रातःस्नायिजनं क चित् । दृष्टादृष्टफलं तस्मात् प्रातःस्नानं समाचरेत् ॥ आह्निककारिकासु— घटिकाद्वयावशिष्टायां रात्र्यां गच्छेज्जलाशये । तिलगन्धाक्षतापुष्पैर्दर्भै सहितः शुचिः ॥ प्रातर्मध्याह्नयोः स्नानं वानप्रस्थगृहस्थयोः । यतेस्त्रिष प्रोक्तं सकृत्तु ब्रह्मचारिणः ॥ प्रातःस्नानं सनक्षत्रं सन्ध्या न त्रसंयुता । होमः प्रागुदयाद्भानोर्गायत्र्यास्तु ततो जपः ॥ कात्यायनः— यथाहनि तथा प्रातर्नित्यं स्नायादनातुरः । दन्तान् प्रक्षाल्य नद्यादौ गृ च तदमन्त्रवत् ॥

८७. 'प्रातःस्नानफलम्.' याज्ञवल्क्यः—गुणा दश स्नानपर साधो रूपं च तेजश्च बलं च शौचम् । आयुष्यमारोग्यमलोलुपत्वं दुःस्वप्ना नाशश्च यशश्च मेधा ॥ नागदेवः—अगम्यागमनाच्चैव पापेभ्यश्च परि हात् । रहस्यचरितात्पापान्मुच्यते स्नानयोगतः ॥

८८. 'प्रातःस्नानाभावे दोषः.' याज्ञवल्क्यः—अस्नात्वा नाचरेत्कर्म जपहोमादिकं तथा । लालास्वेदसमाकीर्णः शयनादुत्थितः पुमान् ॥ स्रिद्यन्ते हि सुषुप्तस्य इन्द्रियाणि स्रवन्ति च । अङ्गानि समतां यान्ति चोत्तमान्यधमैः सह ॥ नागदेवः—अस्नातस्य क्रियाः सर्वा भवन्ति निष्फला यतः । प्रातः समाचरेत्स्नानं तच्च नित्यमुपस्थितम् । अस्नातस्तु पुमान्नार्हो जपहोमादिकर्मसु । प्रातः स्नानं तदर्थं तु नित्यस्नानं प्रकीर्तितम् ॥ योगियाज्ञवल्क्यः—स्नानमूलाः क्रियाः सर्वाः स्मृतिश्रुत्युदिता नृणाम् । तस्मात्स्नानं निषेवेत श्रीपुष्ट्याऽरोग्यवर्धनम् ॥

८९. 'स्नानार्थे उक्तं जलम्.' मरीचिः—भूमिष्ठमुद्धृतं वापि शीतमुष्णमथापि वा । गाङ्गं पयः पुनात्येव पापमामरणात्कृतम् ॥ यमः—आप एव सदा पूतास्तासां वह्निर्विशोधकः । तस्मात्सर्वेषु कालेषु उष्णाम्भः पावनं स्मृतम् ॥ नित्यं नैमित्तिकं चैव क्रियाङ्गं मलकर्षणम् । तीर्थाभावे तु कर्तव्यमुष्णोदकपरोदकैः ॥ गार्ग्यः—कुर्यान्नैमित्तिकं स्नानं शीताद्भिः काम्यमेव च । नित्यं याद्दच्छिकं चैव यथारुचि समाचरेत् ॥ नागदेवः—सरित्सु देवखातेषु तीर्थेषु च नदीषु च । क्रियास्नानं समुद्दिष्टं स्नानं तत्रामलाः क्रियाः ॥ वाप्यां कूपे तडागे वा नद्यां वा चोष्णवारिणा । प्रातःस्नानं सदा कुर्यादुष्णेनैव सदातुरः ॥

९०. 'उष्णोदकस्नाननिषेधः.' वृद्धमनुः—सङ्क्रान्त्यां रविवारे च सप्तम्यां राहुदर्शने । आरोग्ये पुत्रमित्रार्थे न स्नायादुष्णवारिणा ॥ मृते जन्मनि सङ्क्रान्तौ श्राद्धे जन्मदिने तथा । अस्पृष्टस्पर्शने चैव न स्नायादुष्णवारिणा ॥

९१. 'स्नानभेदाः.' नागदेवः—असामर्थ्याच्छरीरस्य देशकालाद्य-[illegible]आ । मन्त्रस्नानादिकाः सप्त केचिदिच्छन्ति सूरयः ॥ स्नानं तु द्विविधं [illegible] मुख्यगौणप्रभेदतः । चतुर्विधं तत्र मुख्यं गौणं वै षड्विधं भवेत् ॥ [illegible]वपितृकः स्नायाद्व्यस्तदक्षिणतःकचः । प्रमीतपितृकः स्नायात्सव्यभाग-[illegible]ा पुमान् ॥ (क्वचित्स्थले मुसलस्नानमप्युक्तम्) तच्चैवम्—निरुद्धकर्ण-[illegible]स्तु मुसलस्नानमाचरेत् । उभे सन्ध्ये च स्नातव्यं ब्राह्मणैश्च गृहा-[illegible]तैः ॥ तिसृष्वपि हि सन्ध्यासु स्नातव्यं तु तपस्विभिः ॥

९२. 'प्रत्यक्षस्नानाभावे गौणस्नानानि.' योगियाज्ञवल्क्यः—[illegible]ं भौमं तथाऽग्नेय्यं वायव्यं दिव्यमेव च । वारुणं मानसं चैव सप्त [illegible]ान्यनुक्रमात् ॥ आपोहिष्ठादिभि 'र्मान्त्रं' मृदालम्भं च 'पार्थिवम्' ॥ [illegible]ग्नेय्यं' भस्मना स्नानं 'वायव्यं' गोरजः स्मृतम् ॥ यत्तु सातपवर्षेण

स्नानं त'द्दिव्य' मुच्यते । 'वारुणं' चावगाहं तु 'मानसं' ह्यात्मचिन्
नम् ॥ लघुव्याससंहितायाम्—आर्द्रेण वाससा चाङ्गमार्जनं 'कापि
स्मृतम् । अप्राशस्त्ये समुत्पन्ने स्नानमेव समाचरेत् ॥ 'ब्राह्म्यं' तु
र्जनं मन्त्रैः कुशैः सोदकबिन्दुभिः । 'यौगिकं' स्नानमाख्यातं योगे
विष्णुचिन्तनम् ॥ जाबालिः—अशिरस्कं भवेत्स्नानं स्नानाशक्तौ तु
र्मिणाम् । आर्द्रेण वाससा वापि मार्जनं दैहिकं विदुः ॥ ज्वराभिभूता या न
रजसा च परिप्लुता । कथं तस्या भवेच्छौचं शुद्धिः स्यात्केन कर्मणा
चतुर्थेऽहनि सम्प्राप्ते स्पृशेदन्या तु तां स्त्रियम् । सा सचैलाऽवगाह्य
स्नात्वा स्नात्वा पुनः स्पृशेत् ॥ दशद्वादशकृत्वो वा आचमेच्च पुनः पुन
अन्ते च वाससां त्यागस्तथा शुद्धा भवेत्तु सा ॥

९३. 'स्नानादौ निषिद्धजलम्.' धन्वन्तरिः—तृणपर्णोत्कर
कलुषं विषसंयुतम् । योऽवगाहेत वर्षासु पिबेद्वापि नवं जलम् ॥ स बाह्
भ्यन्तरान्रोगान् प्राप्नुयात्क्षिप्रमेव हि ॥ वाचस्पतौ—स्नानमाचमनं द
देवतापितृतर्पणम् । शूद्रोदकैर्न कुर्वीत तथा मेघाद्विनिःसृतैः ॥ मास
श्रावणादि सर्वा नद्यो रजस्वलाः । तासु स्नानादिकं वर्ज्यं वर्जयित्वा स
पगाम् ॥ यदि विप्रः प्रमादेन शूद्रतोयं पिबेत्स्वयम् । उपोष्य बिल
ह्मानां पलाशस्य कुशस्य च ॥ एतेषामुदकं पीत्वा तेन शुद्धिमवाप्नुया
यमः—अन्त्यजैः खानिताः कूपास्तडागानि तथैव च । एषु स्नात्वा
पीत्वा च पञ्चगव्येन शुद्ध्यति ॥ वृद्धशातातपः—अन्त्यजैः खानिते
सेतौ वाप्यादिके तथा । तत्र स्नात्वा च पीत्वा च प्रायश्चित्तं न विद्यते
( एतद्वचनद्वयमापदनापद्विषयकमिति वाचस्पतौ स्पष्टीकृतम् ) ॥ का
यनः—यच्च द्वयं श्रावणादि सर्वा नद्यो रजस्वलाः । तासु स्नानं न
र्वीत वर्जयित्वा समुद्रगाः ॥ धनुःसहस्राण्यष्टौ तु गतिर्यासां न वि
न ता नदीः शब्दवहा गर्तान्ताः परिकीर्तिताः ॥ उपाकर्मणि चोत्सर्गे प्रेत
तथैव च । चन्द्रसूर्यग्रहे चैव रजोदोषो न विद्यते ॥

९४. 'स्नानार्थे उक्तदिशः.' विष्णुः—स्रोतसोऽभिमुखं स्नाय
दीषु प्रवहज्जले । स्थावरे च तडागे च रवेरभिमुखं सदा ॥ स्रोतसोऽभि
मज्जेद्यत्रापः प्रवहन्ति वै । स्थावरेषु च सर्वेषु आदित्याभिमुखस्तथा ॥
गृहमुखः कूपे तडागे सूर्यसन्निधौ । प्रातः संक्षेपतः स्नानं शौचार्थे तु
दिष्यते ॥ रेणुः—तडागादिषु तोयेषु प्रत्यर्कं स्नानमाचरेत् । (नद्या
प्रवाहाभिमुखो वा स्नानमाचरेत् ॥ नद्यां स्रवत्सु च स्नायात्प्रतिस्रोतः

आह्निक पृ० १०१

प्रचेताः "जलमध्ये तु यः कश्चिद्
जातिर्मानि कुर्वतः ॥ निष्पीडयति वस्त्रं
स्नानं तस्य वृथा भवेत् ॥"

जाबालिः "वस्त्रं चतुर्गुणीकृत्य
निष्पीड्य सलिलं तथा ॥ वामप्रकोष्ठे
निक्षिप्य स्नानं... च द्विराचमेत् ॥
वस्त्रं त्रिगुणितं यस्तु निष्पीडयति
मन्दधीः ॥ वृथास्नानं भवेत्तस्य स्नात
स्य इत्याद्यविनी ॥ निष्पीडितं
धौतवस्त्रं यदा स्कन्धे विनिक्षिपेत् ॥
तदासुरं भवेत्कर्म पुनः स्नानं विधीयते ॥"

स्मृत्यन्तरे — "वस्त्रं चतुर्गुणीकृत्य
पीडयेच्च जलाद्बहिः ॥ वामप्रकोष्ठे
निक्षिप्य द्विराचम्य शुचिर्भवेत् ॥
अन्यत्र निक्षिपेद्यस्तु पितृहा चापि
जायते ॥" (निर्णयसिन्धु...)

द्विजः । या याः समुद्रगा नद्यस्तासु स्नानं तु संमुखम् । सर्वेषां शाखिनामेवं विना वाजसनेयिनः ॥

९५. 'गृहे स्नानादिविचारः.' बौधायनः—गृहस्नाने न तु प्रोक्तं मार्जनं तर्पणादिकम् । नान्तराचमनं प्रोक्तं पश्चादाचम्य शुध्यति ॥ आह्निककारिकासु—पादौ प्रक्षालयेत्पूर्वं मुखं यज्ञोपवीतकम् । द्विराचम्य कराभ्यां तु दर्भान्धृत्वा शिखां स्पृशेत् ॥ द्वौ कुशौ दक्षिणे हस्ते त्रयः सव्ये तथासने । पादमूले शिखायां च एकैकं धारयेत्कुशम् ॥ प्राणायामत्रयं कृत्वा कालज्ञानं ततः स्मरेत् ॥

९६. 'स्नानकाले नारायणस्मरणम्.' लघुव्याससंहितायाम्—आपो नारायणोद्भूताः स्नाने वास्यायनं पुनः । तस्मान्नारायणं देवं स्नानकाले स्मरेद्बुधः ॥

९७. 'सङ्कल्पावश्यकता.' बृहद्यमः—सङ्कल्पश्च यथा कुर्यात्स्नानदानव्रतादिके ॥

९८. 'स्नाने आसनम्.' कालिकापुराणे—तोये शिलामयं कुर्यादासनं कौशमेव वा ॥

९९. 'स्नाने जलादिविचारः.'—अभावे देवखातानां सरितां सरसां तथा । उद्धृत्य चतुरः पिण्डान् पारके स्नानमाचरेत् ॥ ( पारके इत्यनुदृष्टजले ) चतुर्हस्तसमायुक्तं समन्ताच्चतुरस्रकम् । प्रकल्प्यावाहयेद्गङ्गाभिर्मन्त्रैर्विचक्षणः ॥ हस्ताभ्यामञ्जलिं कृत्वाऽनामिकामूलपर्वणोः । अङ्गुष्ठौ निक्षिपेत्सेयं मुद्रा चावाहनी स्मृता ॥ विष्णोः पादप्रसूताऽसि वैष्णवी विष्णुदेवता । त्राहि नस्त्वेनसस्तस्मादाजन्ममरणान्तिकात् ॥ पश्चाद्गङ्गादितीर्थानि प्रार्थयेच्च समन्ततः ॥

१००. 'शिरःस्नानम्.' मार्कण्डेयपुराणे—शिरःस्नानं च कुर्वीत दैवं पित्र्यमथापि वा ॥

१०१. 'आर्द्रवस्त्रनिष्पीडनम्.' वृद्धमनुः—निष्पीड्य स्नानवस्त्रं तु पश्चात्सन्ध्यां समाचरेत् । अन्यथा कुरुते यस्तु स्नानं तस्याफलं भवेत् ॥ योगपारिजाते—स्नानं कृत्वार्द्रवस्त्रं तु ऊर्ध्वमुत्तारयेद्द्विजः । आर्द्रवस्त्राच्चेत्पुनः स्नानेन शुध्यति ॥

---

१ एतेन वाजसनेयिनां समुद्रगामिनीषु नदीषु प्रवाहाभिमुखस्नाननिषेधेन तैः प्रत्यक्सङ्गमवतीष्वपि गङ्गागोदादिनदीषु सूर्याभिमुखं स्नानं कर्तव्यम् । समुद्रगौ इत्युक्तगङ्गादिनदीसङ्गमपर्यन्तं प्रवाहनामादिधारकासु यमुनाभीमातुङ्गभद्रादिषु तु स्वतः-मिलायोगात्प्रवाहाभिमुखमेव स्नानं कर्तव्यमिति प्रतिभाति ।

१०२. 'आकण्ठस्नानम्.' कात्यायनत्रिकण्डिकासूत्रे हरिहरभा ष्ये—जटिलस्य शिरोरोगिणश्चाकण्ठमज्जनं स्नानम् । सभर्तृकयो षितां च ग्रहणादिनिमित्तं गङ्गादितीर्थेषु संक्रान्त्यादिपर्वनिमि च फलप्रदम् । नद्यादिष्वपि सशिरस्कमेव । नित्यमेव स्त्रीशूद्रा सर्वत्र तूष्णीं स्नानम् ॥

१०३. 'मङ्गलस्नानम्.' ग्रन्थान्तरे—सर्वौषधी कृष्णतिला गन्धक मलकैस्तथा । सुगन्धिना चम्पकादि तैलं युक्तं सचूर्णकैः ॥ उद्वर्त्याङ्गा चूर्णं तत् मङ्गलस्नानमाचरेत् । एवं स्नानं प्रकुर्वीत ब्राह्मणैः सह निश्चितम्

१०४. 'तीर्थभेदाः.' 'मानसतीर्थानि' याज्ञवल्क्यः—अन्तर्जा शुचौ देशे उपविष्ट उदङ्मुखः । प्राग्वा ब्राह्मेण तीर्थेन द्विजो नित्यमु स्पृशेत् ॥ वाचस्पतावगस्तिः—सत्यं तीर्थं क्षमा तीर्थं तीर्थमिन्द्रियनि ग्रहः । सर्वभूतदया तीर्थं सर्वत्रार्जवमेव च ॥ दानं तीर्थं दमस्तीर्थं सन्तो षस्तीर्थमुच्यते । ब्रह्मचर्यं परं तीर्थं तीर्थं च प्रियवादिता ॥ ज्ञानं ती धृतिस्तीर्थं पुण्यं तीर्थमुदाहृतम् । तीर्थानामपि तत्तीर्थं विशुद्धिर्मनस परा । एतत्ते कथितं देवि मानसं तीर्थलक्षणम् ॥ 'शारीरतीर्थानि'- यस्य हस्तौ च पादौ च मनश्चैव सुसंयतम् । विद्या तपश्च कीर्तिश्च तीर्थफलमश्नुते । मनो विशुद्धं पुरुषस्य तीर्थं वाचां यमस्त्विन्द्रियनिग्र स्तपः । एतानि तीर्थानि शरीरजानि स्वर्गस्य मार्गं प्रतिबोधयन्ति 'भौमतीर्थानि'—प्रथमं पुष्करं तीर्थं नैमिषारण्यमेव च । प्रयागं च वक्ष्यामि धर्मारण्यं तृतीयकम् । एवमादीनि तीर्थानि स्नानकार्ये निबोधत परं च—चित्तमन्तर्गतं दुष्टं तीर्थस्नानान्न शुद्ध्यति । शतशोऽथ जलै सुराभाण्डमिवाशुचि ॥ अमरः—अङ्गुल्यग्रे तीर्थं 'दैवं' स्वल्पाङ्गुल्योर्मू 'कायम्' । मध्येऽङ्गुष्ठाङ्गुल्योः 'पित्र्यं' मूले त्वङ्गुष्ठस्य 'ब्राह्मम्' ॥ या ज्ञवल्क्यः—कनिष्ठदेशिन्यङ्गुष्ठमूल्यान्यग्रकरस्य च । प्रजापतिपितृब्रह्मदेव तीर्थान्यनुक्रमात् ॥ आह्निककारिकासु—ब्राह्मणो ब्रह्मतीर्थेन दृष्टिपूता भिराचमेत् । कण्ठगाभिर्नृपः शुद्ध्येन्नाभिगाभिस्तथोरुजः ॥ स्त्रियाश्च शू संस्पर्शे मन्त्रेणापि विशुद्ध्यति ॥ औशनः—हृद्गाभिः पूयते विप्रः क गाभिर्नृपः शुचिः । प्राशिताभिस्तथा वै स्त्री शूद्रैः संस्पर्शनं तथा ॥

१०५. 'स्नाने उक्ततीर्थानि.' अग्निपुराणे—नदीदेवनिखातेषु त गेषु सरस्सु च । स्नानं समाचरेन्नित्यं गर्तप्रस्रवणेषु च । निपानादु तं पुण्यं ततः प्रस्रवणोदकम् । ततोऽपि सारसं पुण्यं ततो नादेयमुच्यते तीर्थतोयं ततः पुण्यं गङ्गातोयं ततोऽधिकम् ॥ वाचस्पतौ—ब्राह्म

जङ्गमं तीर्थं निर्मलं सार्वकामिकम् । येषां वाक्योदकेनैव शुद्धयन्ति मलिना जनाः ॥ किञ्च पराशरः—ब्रह्मा विष्णुश्च रुद्रश्च सोमः सूर्योऽनिलस्तथा । ते सर्वे ह्यपि तिष्ठन्ति कर्णे विप्रस्य दक्षिणे ॥

१०६. 'गृहे प्रातःस्नानसङ्कल्पः.' प्रथमतः सूर्याभिमुखः स्यात् शिलासनेस्थितो दारुजासनेस्थितो वा आदौ हस्तपादौ प्रक्षाल्य गण्डूषत्रयं कुर्यात् । पश्चात् अञ्जलावुदकं गृहीत्वा स्नानसङ्कल्पं कुर्यात् । यथा—विष्णुर्विष्णुर्विष्णुः श्रीमद्भगवतो महापुरुषस्य विष्णोराज्ञया प्रवर्तमानस्य अद्य ब्रह्मणः द्वितीये परार्द्धे श्रीश्वेतवाराहकल्पे वैवस्वतमन्वन्तरे अष्टाविंशतितमे कलियुगे कलिप्रथमचरणे भारतवर्षे (भारतखण्डे) जम्बुद्वीपे रामक्षेत्रे परशुरामाश्रमे दण्डकारण्यदेशे श्रीगोदावर्याः पश्चिमदिग्भागे श्रीमल्लवणाब्धेरुत्तरे तीरे श्रीशालिवाहनशाके बौद्धावतारे अस्मिन्वर्तमाने अमुकनामसंवत्सरे अमुकायने अमुकर्तौ अमुकमासे अमुकपक्षे अमुकवासरे अमुकतिथौ मम आत्मनः श्रुतिस्मृतिपुराणोक्तफलप्राप्त्यर्थं मम इह जन्मनि कायिकवाचिकमानसिकसांसर्गिकज्ञाताज्ञातस्पर्शास्पर्शासनभोजनशयनगमनादिकृतकर्मदोषनिरासद्वारा त्रिविधतापोपशमनार्थं श्रीपरमेश्वरप्रीत्यर्थं शीतोदकेन उष्णोदकेन वा (अमुकतीर्थे गृहे तडागतटे वा) प्रातःस्नानमहं करिष्ये ॥ (इति सङ्कल्प्य पश्चात् तीर्थादिनामोच्चारपूर्वकं स्नायात्) ॥ 'तीर्थप्रार्थना'—आपो नारायणोद्भूताः स्नाने वास्यायनं पुनः । तस्मान्नारायणं देवं स्नानकाले स्मराम्यहम् ॥ त्वं राजा सर्वतीर्थानां त्वमेव जगतः पिता । याचितं देहि मे तीर्थं सर्वपापैः प्रमुच्यते ॥ नमामि गङ्गे तव पादपङ्कजं सुरासुरैर्वन्दितदिव्यरूपम् । भुक्तिं च मुक्तिं च ददासि नित्यं भावानुसारेण सदा नराणाम् ॥ पुष्कराद्यानि तीर्थानि गङ्गाद्याः सरितस्तथा । आगच्छन्तु पवित्राणि स्नानकाले सदा मम ॥ गङ्गे च यमुने चैव गोदावरि सरस्वति । नर्मदे सिन्धो कावेरि जलेऽस्मिन् सन्निधिं कुरु ॥ नन्दिनी नलिनी सीता मालती च मलापहा । विष्णुपादाब्जसम्भूता गङ्गा त्रिपथगामिनी ॥ भागीरथी भोगवती जाह्नवी त्रिदशेश्वरी । द्वादशैतानि नामानि यत्र यत्र जलाशये ॥ स्नानोद्यतः पठेद्यत्र तत्र तत्रैव निवसाम्यहम् । एतान्मन्त्रान्पठित्वान्ते सर्वाङ्गस्नानमाचरेत् ॥ एवं स्नायात् शरीरं प्रमृज्य गृहे प्रविशेत् )

१०७. 'अथ नद्यादौ नित्यस्नानप्रयोगः.'—शुचिर्भूतः कर्ता शुभ्रां

यथादेशसम्भवां वा मृदमार्द्रं गोमयं कुशान् तिलाक्षतान् सुरभीणि पु-
ष्पाणि भस्म चादाय तीर्थतटे गच्छेत् । तदनन्तरं सूर्याभिमुखस्तीर्थं
प्रार्थयेत् । 'तीर्थप्रार्थना'—नमामि गङ्गे तव पादपङ्कजं सुरासुरै-
र्वन्दितदिव्यरूपम् । भुक्तिं च मुक्तिं च ददासि नित्यं भावानुसारे-
ण सदा नराणाम् ॥ या गतिर्योगयुक्तानां मुनीनामूर्ध्वरेतसाम् ।
गतिः सर्वजन्तूनां गौतमीतीरवासिनाम् ॥ पुष्कराद्यानि तीर्थानि
गङ्गाद्याः सरितस्तथा । आगच्छन्तु पवित्राणि स्नानकाले स-
मम ॥ त्वं राजा सर्वतीर्थानां त्वमेव जगतः पिता । याचितं दे-
मे तीर्थं सर्वपापैः प्रमुच्यते ॥ अपामधिपतिस्त्वं च तीर्थेषु वसति-
स्तव । वरुणाय नमस्तुभ्यं स्नानानुज्ञां प्रयच्छ मे ॥ अधिष्ठात्र्यः
तीर्थानां तीर्थेषु विचरन्ति याः । देवतास्ताः प्रयच्छन्तु स्नाना-
मम सर्वदा ॥ गङ्गे च यमुने चैव गोदावरि सरस्वति । नर्मदे
सिन्धो कावेरि जलेऽस्मिन् सन्निधिं कुरु ॥ इति सम्प्रार्थ्य ह-
पादौ प्रक्षाल्याचम्य 'सङ्कल्पः'—अद्य पूर्वोच्चरित एवंगुणविशेषण-
शिष्टायां शुभपुण्यतिथौ मम आत्मनः श्रुतिस्मृतिपुराणोक्तफल-
प्त्यर्थं मम इह जन्मनि जन्मान्तरे वा कायिकवाचिकमानसिक-
सर्गिकज्ञाताज्ञातस्पर्शास्पर्शभुक्ताभुक्तपीतापीतादिसकलपातकनिरा-
पूर्वकमासनभोजनशयनगमनादिष्वनृतभाषणादिदोषनिरासद्वारा
परमेश्वरप्रीत्यर्थममुकतीर्थे स्नानमहं करिष्ये ॥ इति सङ्कल्प्य
पश्चात्—'तीर्थाभिमन्त्रणम्'—* * * ॐ उरुꣳ हि रा-
ज्ञा वरुणश्चकार सूर्याय पन्थामन्वेतवा ऽउ । अपदे प-
दा प्रतिधातवे करुतापवक्ता हृदयाविधश्चित् । नमो
वरुणायाभिष्ठितो वरुणस्य पाशः । १ २३/८ ॥ इति मन्त्रेण
क्षाञ्जलिहस्तेन तोयमभिमन्त्रयेत् ॥ 'जलावर्तनम्'—ॐ ये ते
वरुण ये सहस्रं यज्ञियाः पाशा वितता महान्तः । तेभिर्नो अद्य
वितोत विष्णुर्विश्वे मुञ्चन्तु मरुतः स्वर्काः । २(सूत्रोक्तः/पा० गृ०) ॥

(१) केचित्तु प्रायश्चित्ते श्रावण्यादिनैमित्तिकस्नाने हेमाद्रिप्रोक्तं महासङ्कल्पं कुर्व-
तीर्थस्नानादावन्यतः कारयन्ति च । स सङ्कल्पः परिशिष्टप्रकरणे द्रष्टव्यः ।
(२) विष्णुस्मृतिः-ब्रह्मा विष्णुश्च रुद्रश्च सर्वमोमिति चोच्यते । सम्पन्नेऽसु-
याने नम्यते च मुमुक्षुभिः ॥ (३) इति मन्त्रेण जलं दक्षिणहस्ताङ्गुलिभिर्दक्षिण-
त्रिवारमावर्तयेत् ( भ्रामयेत् ) ॥ (४) इति मन्त्रेणाञ्जलिस्थमुदकं स्वशत्रून्मनसा
चिन्त्य तन्नाशार्थं स्ववामभागे तीर्थतटे क्षिपेत् ॥

र्णाञ्जलिनापोग्रहणम्'—* * ॥ ॐ सुमित्रिया नऽआपऽओषधयः सन्तु * * । ३ २२/६ ॥ ( इति मन्त्रेण जलाञ्जलिं गृह्णीयात् )॥ 'तीर्थतटे जलप्रक्षेपणम्'—* * ॐ दुर्म्मित्रियास्तस्मै सन्तु योऽस्मान्द्वेष्टि यञ्च वयन्द्विष्मः । ४ २२/६ ॥ मृत्तिकालेपनम्—ॐ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूढमस्य पा ᳪ सुरे स्वाहा । ५ १५/५ ॥ (अश्वक्रान्ते रथक्रान्ते विष्णुक्रान्ते वसुन्धरे । उद्धृतासि वराहेण कृष्णेन शतबाहुना ॥ मृत्तिके ब्रह्मपूतासि काश्यपेनाभिवन्दिता । त्वया हतेन पापेन गच्छामि परमां गतिम् ॥ मृत्तिके हर मे पापं यन्मया दुष्कृतं कृतम् ) । ( इति सम्प्रार्थ्य । नाभिमात्रं तीर्थजलं प्रविश्य सूर्याभिमुखं स्थित्वा स्नायात् । ) तत्र मन्त्रः—ॐ आपोऽअस्मान्मातरः शुन्धयन्तु घृतेन नो घृतप्वः पुनन्तु । विश्वᳪ हि रिप्रम्प्रवहन्ति देवीः * * । ६ २/४ ॥ इति मन्त्रेण निमज्य पुनः— ॐ उदिदाभ्यः शुचिरापूतऽएमि * । ७ २/४ ( इति मन्त्रेण द्वितीयवारं निमज्य )॥ ( पुनस्तूष्णीं निमज्योन्मज्याचमेत् ) ॥ 'गोमयलेपनम्'—( अग्रमग्रचरन्तीनामोषधीनां वनेवने । तासां वृषभपत्नीनां पवित्रं कायशोधनम् ॥ तन्मे रोगांश्च शोकांश्च पापं मे हर गोमय ) । ( इति मन्त्रेण गोमयमभिमन्त्र्य ) ॥ ॐ मा नस्तोके । तनये मा नऽआयुषि मा नो गोषु मा नोऽअश्वेषु रीरिषः । मा नो वीरान्रुद्र भामिनो वधीर्हविष्मन्तः सदमि त्वा हवामहे । ८ १६/१६ ॥ 'भस्मलेपनम्.' (क्षेपकम्)—( जलमिति भस्म । स्थलमिति भस्म । व्योमेति

---

(१) मृत्तिकामादाय तस्याः त्रिभागान्कृत्वा प्रथमभागं वामहस्ते गृहीत्वा तेन ...ः कटिप्रदेशमनुलेपयेत् । हस्तं प्रक्षाल्य ॥ (२) पुनस्तेनैव हस्तेन द्वितीयभागेन ...न ऊरू जङ्घे चरणौ करौ च प्रत्येकं तूष्णीं त्रिस्त्रिरनुलिप्य पुनर्हस्तं प्रक्षाल्याचम्य ...दकं नमस्कुर्यात् ॥ ( ३ ) इति मन्त्रेण तृतीयभागेन दक्षिणहस्तेन ललाटादिना... र्यन्तानि गात्राण्युपलिप्य हस्तं प्रक्षाल्याचम्य तीर्थोदकं नमस्कुर्यात् ॥ ( ४ ) इति ...ण सोदकं गोमयं सूर्याय दर्शयित्वा तेन त्रिवारमङ्गानि ललाटादिपादतलपर्यन्तानि ...पनवदनुलिप्य क्षालयेत् ॥

भस्म । सर्वꣳ ह वा इदं भस्म । मन एतानि चक्षूꣳषि भस्मानीति)।
ॐ प्रसद्य भस्मना योनिमपश्च पृथिवीमग्ने । सꣳ
सृज्य मातृभिष्ट्वं ज्योतिष्मान्पुनरा सदः । ९ $\frac{३८}{१२}$ ।
( इति क्षेपकम् ) ॥ 'मार्जनम्'—ॐ इमम्मे व्वरुण श्रुधीहवम
द्द्या च मृडय । त्वामवस्युरा चके । १० $\frac{१}{२१}$ ॥ तत्त्वा । यामि
ब्रह्मणा व्वन्दमानस्तदाशास्ते यजमानो हविर्ब्भिः ।
अहेडमानो व्वरुणेहबोद्ध्युरुशꣳस मान आयुः प्रमो
षीः । ११ $\frac{२}{२१}$ ॥ त्वन्नो ऽअग्ने व्वरुणस्य व्विद्वान्देवस्य हे
डो ऽअवयासिसीष्ठाः । यजिष्ठो व्वह्नितमः शोशुचानो
व्विश्वा द्वेषाꣳसि प्रमुमुग्ध्यस्मत् । १२ $\frac{३}{२१}$ ॥ सत्त्वन्नो
अग्ने वमो भवोतीनेदिष्ठो ऽअस्या ऽउषसो व्युष्टौ । अ
यक्ष्वनो व्वरुणꣳ रराणो व्वीहि मृडीकꣳ सुहवो न ऽएधि
१३ $\frac{४}{२१}$ ॥ मापोमौषधीर्हिꣳसीर्द्धाम्नोधाम्नो राजँस्त
व्वरुण नो मुञ्च । यदाहुरघ्न्या ऽइति व्वरुणेति शपाम
ततो व्वरुण नो मुञ्च । १४ $\frac{२२}{६}$ ॥ उदुत्तमं व्वरुणपा
शमस्मदवाधमं व्वि मध्यमꣳ श्रथाय । अथा व्व
मादित्यव्रते तवानागसो ऽअदितये स्याम । १५ $\frac{१२}{१२}$
मुञ्चन्तु मा । शपथ्यादथो व्वरुण्यादुत । अथो यमस्य प
ड्वीशात्सर्व्वस्माद्देव किल्बिषात् । १६ $\frac{९०}{१२}$ ॥ अवभृ
निचुम्पुण । निचेरुरसि निचुम्पुणः । अवदेवैर्देवकृतमेन
यासिषमव मर्त्यैर्म्मर्त्यकृतम्पुरुराव्णो देव रिषस्पाहि
१७ $\frac{४८}{३}$ ॥ ( इति मन्त्रैः सर्वाङ्गानि मार्जयित्वा । पश्चात्तूष्णीं स्नात्वा
म्य) 'पुनर्दर्भैर्मार्जनम्'—ॐ आपोहि । ष्ठा मयोभुवस्तान

(१) इति मन्त्रेण ललाटाद्यङ्गेषु भस्मलेपनं कृत्वा ॥ (२) तत्र सजलेन कुशत्र
नाभिदक्षिणपार्श्वमारभ्य शिरोपरि नीत्वा नाभिवामपार्श्वपर्यन्तं प्रदक्षिणमात्मानं पावयेत्

ऊर्जे दधातन । महे रणाय चक्षसे । १८ $\frac{५०}{११}$ ॥ यो वः ।
शिवतमो रसस्तस्य भाजयतेह नः । उशतीरिव मातरः
। १९ $\frac{५१}{११}$ ॥ तस्मा ऽअरङ्गमाम वो यस्य क्षयाय जिन्वथ ।
आपो जनयथा च नः ॥ २० $\frac{५२}{११}$ ॥ इदमापः प्रवहतावद्यञ्च
मलञ्च यत् । यच्चाभिदुद्रोहानृतं यच्च शेपे ऽअभीरुणम् ।
आपो मा तस्मादेनसः पवमानश्च मुञ्चतु । २१ $\frac{१७}{६}$ ॥
हविष्मतीरिमा ऽआपो हविष्मान् ॥ ऽआविवासति ।
हविष्मान्देवो ऽअध्वरो हविष्मान् ॥ ऽअस्तु सूर्यः ।
२२ $\frac{२३}{६}$ ॥ देवीरापो ऽअपान्नपाद्यो व ऽऊर्मिर्हविष्य ऽइ-
न्द्रियावान्मदिन्तमः । तन्देवेभ्यो देवत्रा दत्त शुक्रपेभ्यो
येषाम्भागस्थ स्वाहा । २३ $\frac{२७}{६}$ ॥ कार्षिरसि समुद्रस्य
त्वाक्षित्या ऽउन्नयामि । समापो ऽअद्भिरग्मत समोष-
धीभिरोषधीः । २४ $\frac{२८}{६}$ ॥ अपो देवा मधुमतीरगृभ्ण-
न्नूर्जस्वती राजस्वश्चितानाः । याभिर्मित्रावरुणावभ्य-
षिञ्चन्याभिरिन्द्रमनयन्नत्यरातीः । २५ $\frac{१}{१०}$ ॥ द्रुपदादिव
मुमुचानः स्विन्नः स्नातो मलादिव । पूतम्पवित्रेणेवाज्य-
मापः शुन्धन्तु मैनसः । २६ $\frac{२०}{२०}$ ॥ शन्नो देवीरभिष्टय ऽ
आपो भवन्तु पीतये । शं योरभिस्रवन्तु नः । २७ $\frac{१२}{३६}$ ॥
अपा रसमुद्वयस सूर्ये सन्तः समाहितम् । अपा रस-
स्य यो रसस्तं वो गृह्णाम्युत्तममुपयामगृहीतोसीन्द्राय
त्वा जुष्टं गृह्णाम्येष ते योनिरिन्द्राय त्वा जुष्टतमम् ।
२८ $\frac{३}{६}$ ॥ अपो देवीरुपसृज मधुमतीरयक्ष्माय प्रजा-
भ्यः । तासामास्थानादुज्जिहतामोषधयः सुपिप्पलाः ।
२९ $\frac{३८}{११}$ ॥ पुनन्तु मा पितरः सोम्यासः पुनन्तु मा पि-
तामहाः पुनन्तु प्रपितामहाः । पवित्रेण शतायुषा* ।

३०$\frac{३७}{१९}$ ॥*॥पुनन्तु मा पितामहाः पुनन्तु प्रपितामहाः
पवित्रेण शतायुषा विश्वमायुर्व्यश्नवै । ३१$\frac{३७}{१९}$ ॥ अग्न
ऽआयूꣳषि । पवसऽआसुवोर्जमिषं च नः । आरेबाध
स्व दुच्छुनाम् । ३२$\frac{३८}{१९}$ ॥ पुनन्तु मा । देवजनाः पुनन्
मनसा धियः । पुनन्तु विश्वा भूतानि जातवेदः पुनी
मा । ३३$\frac{३९}{१९}$ ॥ पवित्रेण पुनीहि । मा शुक्रेण देव दी
द्यत् । अग्ने क्रत्वा क्रतूꣳ ॥ ऽरनु । ३४$\frac{४०}{१९}$ ॥ यत्ते पवि
त्रमर्चिष्यग्ने विततमन्तरा । ब्रह्म तेन पुनातु मा । ३
$\frac{४१}{१९}$ ॥ पवमानः सोऽअद्य नः पवित्रेण विचर्षणिः । यः
पोता स पुनातु मा । ३६$\frac{४२}{१९}$ ॥ उभाभ्यां देव । सवि
तः पवित्रेण सवेन च । माम्पुनीहि विश्वतः । ३७$\frac{४३}{१९}$
वैश्वदेवी पुनती । देव्यागाद्यस्यामिमा बह्व्यस्तन्वो वी
तपृष्ठाः । तया मदन्तः सधमादेषु वयꣳ स्याम पतयो र
यीणाम् । ३८$\frac{४४}{१९}$॥( इति मन्त्रैर्मार्जयित्वा पश्चादुदकं स्पृशेत् ॥
ततः— ॐ चित्पतिर्म्मा पुनातु*देवो मा सविता पु
नात्वच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः । तस्य
पवित्रपते पवित्रपूतस्य यत्कामः पुने तच्छकेयम् । ३९
वाक्पतिर्म्मा*पुनात्वच्छिद्रेण पवित्रेण सूर्यस्य रश्मि
भिः । तस्य० । ४०$\frac{५}{४}$ ॥ $\overset{३}{*}$ देवो मा सविता पुनात्व
च्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः । तस्य०
४१ $\frac{५}{४}$ ॥ ततः— ॐ पुनातु—इमम्मे व० । ४२ $\frac{१}{२१}$
इति मन्त्रेण ॐ भूः पुनातु—तत्त्वा या०— ४३$\frac{२}{२१}$ (इ
मन्त्रेण ) ॐ भुवः पुनातु—त्वन्नोऽअ०—४४$\frac{३}{२१}$ ॥ (इ

---

(१) इति मन्त्रेण नाभेरूर्ध्वं मार्जयेत् ॥ (२) इति मन्त्रेण नाभेरधो मार्जयेत् । (३
इति मन्त्रेण सर्वाङ्गे मार्जयेत् ॥

मन्त्रेण ) ॐ स्वः पुनातु—सत्त्वन्नोऽअ० । ४५ ४/२१ ॥ (इति मन्त्रेण ) ॐ महः पुनातु—मापो मौषं० । ४६ २२/६ ॥ (इति मन्त्रेण) ॐ जनः पुनातु—उदुत्तमम्० । ४७ १२/१२ ॥ (इति मन्त्रेण) ॐ तपः पुनातु—मुञ्चन्तु मा० । ४८ ९०/१२ ॥ (इति मन्त्रेण) ॐ सत्यं पुनातु—अवभृथ नि० । ४९ ४८/३ ॥ ( इति मन्त्रेण ॐ तत्सवितुर्व० । ५० ३५/३ ॥ सर्वं पुनातु ॥ ( इति कुशैर्मार्जयित्वा ) ॥ 'अपा[1]मार्गेण मार्जनम्—' ( क्षेपकम् ) ॐ अपाघमपकिल्बिषमपकृत्यामपोरपः । अपामार्ग्ग त्वमस्मदपदुःष्वप्न्यꣳसुव । ५१ ११/३५ ॥ ( इति मन्त्रेणापामार्गैस्त्रिभिर्मार्जयेत् ) ॥ ततः—'दूर्वा[1]ङ्कुरेण मार्जनम्'—ॐ काण्डात्काण्डात्प्ररोहन्ती । परुषः परुषस्परि । एवानो दूर्वे प्रतनु सहस्रेण शतेन च । ५२ २०/१३ ॥ ( इति क्षेपकम् ) ( इति मन्त्रेण दूर्वाभिस्त्रिभिर्मार्जयेत् ) ॥ 'अघमर्षणम्'—ततो वक्ष्यमाणषट्पक्षाणामन्यतमेनान्तर्जले मग्नोऽनुच्छ्वसन्नघमर्षणं कुर्यात् । तद्यथा—ॐ द्रुपदादिं० । ५३ २०/२० ॥ (इति वा त्रिः पठेत् ) ॥ आयङ्गौः पृश्निरक्रमीदसदन्मातरम्पुरः । पितरञ्च प्रयन्त्स्वः । ५४ ६/३ ॥ ( इति वा त्रिः पठेत् ) ॥ 'सशिरसं प्राणायामं' वा त्रिः पठेत् ॥ यथा—ॐ भूः ॐ भुवः ॐ स्वः ॐ महः ॐ जनः ॐ तपः ॐ सत्यम् ॐ तत्सवितु० स्वरोम् । ५४ ३५/३ ॥ ( इति सप्तव्याहृतिपूर्विकां सशिरस्कां गायत्रीं वा त्रिः पठेत् ॥ ॐ इति वा त्रिः पठेत् ) 'विष्णुध्यानम्'—(यद्वा परमात्मानं विष्णुं शेषशायिनं सायुधं सश्रीकमेकाग्रमनसा ध्यायेत् ) ॥ एवं स्नानं कृतं स्यात् ॥ 'स्नानाङ्गतर्पणम्'—[2]ब्रह्मादयो देवास्तृप्यन्ताम् । ॐ भूर्देवास्तृ० । ॐ भुवर्देवास्तृ० । ॐ स्वर्देवास्तृ० । ॐ भूर्भुवःस्वर्देवास्तृ० । [3]ॐ सनकादि-

(१) अपामार्गैस्तथा दूर्वाभिर्मार्जनं श्रावण्यादिनैमित्तिकस्नाने कुर्यान्न तु नित्यस्नाने ॥ (२) प्रथमे देवतर्पणे पूर्वाभिमुखः सन्कुशत्रयं गृहीत्वा तदग्रैः सव्येन देवतीर्थेनोङ्कारपूर्वकं [illegible]भ्य एकैकमञ्जलिं दद्यात् ॥ (३) द्वितीये ऋष्यादितर्पणे उदगग्रान् दर्भान्धृत्वा तदग्रै[illegible]तीर्या प्रजापतितीर्थेनोङ्कारपूर्वकमृषिभ्यो द्वौ द्वावञ्जली देयौ ॥

द्वैपायनादयो ऋषयस्तृप्यन्ताम् । ॐ भूर्ऋषयस्तृ० । ॐ भुवर्ऋ
यस्तृ० । ॐ स्वर्ऋषयस्तृ० । ॐ भूर्भुवःस्वर्ऋषयस्तृ० ॥ ॐ क
वाडनलादयः पितरस्तृप्यन्ताम् । ॐ भूःपितरस्तृ० । ॐ भुवः
तरस्तृ० । ॐ स्वःपितरस्तृ० । ॐ भूर्भुवःस्वःपितरस्तृ० ॥ (
'आचम्य' सव्येन यक्ष्मतर्पणं कुर्यात् । ) 'यक्ष्मतर्पणम्'—यन्मया
षितं तोयं शारीरमलसम्भवात् । तस्य पापस्य शुद्ध्यर्थं यक्ष्म
तिलोदकम् ॥ ( इति मन्त्रेण तीर्थतटे तिलमिश्रं जलाञ्जलिं निक्षिपेत्
पश्चात् ' लतादिकेषु शिखोदकत्यागः—लतागुल्मेषु वृक्षेषु पि
ये व्यवस्थिताः । ते सर्वे तृप्तिमायान्तु मयोत्सृष्टैः शिखोदकैः ॥(
मन्त्रेण स्वदक्षिणभागे शिखाग्रं निष्पीडयेत् । ततो धौते वाससी परि
भस्मादि धारयेत् ततो गृहे व्रजेत् ।) इति नद्यादौ नित्यःस्नानप्रयोग

१०८. अथ 'प्रातःस्मरणसूक्तम्.' हरिः—ॐ प्प्रातरग्नि
स्प्रातरिन्द्रꣳ हवामहे प्प्रातर्म्मित्रावरुणा प्प्रातरश्वि
ना । प्प्रातर्ब्भगम्पूषणम्ब्रह्मणस्प्पतिम्प्रातः ऽसोमसुत
रुद्रꣳहुवेम । १ $\frac{३४}{३४}$ ॥ प्प्रातर्ज्जितम्भगमुग्ग्रꣳहुवेम वयम्
त्रमदितेर्य्यो व्विधर्त्ता । आद्ध्रश्चिद्यम्मन्न्यमानस्तुरश्चि
जा चिद्यम्भगम्भक्षीत्याह । २ $\frac{३५}{३४}$ ॥भगप्प्रणेतर्ब्भग स
राधो भगे मान्धियमुदवाददन्नः । भगप्प्रनो ज
गोभिरश्वैर्ब्भगप्प्रनृभिर्न्नृवन्तः स्याम । ३ $\frac{३६}{३४}$ ॥ उते
नीम्भगवन्तꣳस्यामोतप्प्रपित्त्वऽउत मद्ध्येऽअन्नाम् ।
तोदिता मघवन्त्सूर्य्यस्य व्वयन्देवानाꣳसुमतौ स्याम
४ $\frac{३७}{३४}$ ॥ भगऽएव । भगवा २ँ ॥ ऽअस्तु देवास्तेन व्व
म्भगवन्तꣳस्याम । तन्त्वा भग सर्व्वऽइज्जोहवीति स
भगपुरऽएता भवे ह । ५ $\frac{३८}{३४}$ ॥ समध्वरायोषसो नम
दधिक्क्रावेव शुचये पदाय । अर्व्वाचीनं व्वसुविदम्भग

(१) तृतीये पितृतर्पणे भुग्नान्दक्षिणाग्रमूलान् दर्भान्धृत्वापसव्येन पितृतीर्थेनोङ्कार
पितृभ्यस्त्रींस्त्रीनञ्जलीन्दद्यात् ॥

त्रिक चक्र – (नित्यकृत्यार्णवे १५२/९)

याज्ञवल्क्यः – वामकुक्षौ च ना
भौ च पृष्ठे चैव यथाक्रमम् त्रिकं

नग्न – (नित्य कृत्यार्णव १९८।४)

भृगुः – विकच्छोऽनुत्तरीयश्च
नग्नश्चावस्त्र एव च। श्रौतं स्मार्तं
तथा कर्म न नग्नश्चिन्तयेदपि॥
नग्नः स्यान्मलवद्वासाः नग्नः कौ
पीनकेवलः॥ नग्नो द्विगुणवस्त्रः
स्यान्नग्नो दग्धपटस्तथा॥ न
ग्नश्च स्यूतवस्त्रः स्यान्नग्नो ग्रथि
तवस्त्रकः॥ नग्नश्च बहुवस्त्रः
स्यान्नग्नः कौपीनकेवलः॥
काषायवस्त्रः ...

रथमिवाश्वा वाजिनऽआवहन्तु । ६।३९।३४ ॥ अश्वावती-गोमतीर्नऽउषासो वीरवतीःसदमुच्छन्तु भद्राः । घृत-न्दुहाना विश्वतःप्रपीता यूयं पात स्वस्तिभिः सदा नः । ७।४१।४ ॥ इति प्रातःस्मरणसूक्तम् ॥

१०९. 'वस्त्रधारणम्.' पारस्करगृह्यसूत्रे मन्त्रः—परिधास्यै यशोधास्यै दीर्घायुत्वाय जरदष्टिरस्मि ॥ शतं च जीवामि शरदः पुरूची रायस्पोषमभिसंव्ययिष्ये ॥ अहतं वासो धौतं वामौत्रेण आच्छादयीत परिधास्य इति ॥ हरिहरभाष्ये—अहतं नवं सदशं पवित्रं वास आच्छादयीत परिदध्यात् । तदलाभे अमौत्रेण अरजकेण धौतं क्षालितं परिधास्य इत्यादिना अभिसंव्ययिष्य इत्यन्तेन मन्त्रेण ॥

११०. 'स्नानानन्तरं वस्त्रपरिधानम्.' नागदेवः—स्नात्वैवं वाससी धौते अक्लिन्ने परिधापयेत् । प्रक्षाल्य चरणद्वन्द्वं हस्तौ प्रक्षालयेत्ततः । अभावे धौतवस्त्रस्य पट्टक्षौमादिकानि च । कुतपं योगपट्टं वा विवासा येन न भवेत् ॥ याज्ञवल्क्यः—वामकुक्षौ च नाभौ च पृष्ठे चैव यथाक्रमम् । कच्छेन समायुक्तो द्विजोऽसौ मुनिरुच्यते ॥

१११. 'उक्तवस्त्रधारणम्.' मनुः—ब्राह्मणस्य सितं वस्त्रं माञ्जिष्ठं क्षितेः स्मृतम् । पीतं वैश्यस्य शूद्रस्य नीलं मलवदिष्यते ॥ देवलः—यं धौतेन कर्तव्याः क्रियाधर्मा विपश्चिता । न तु नेजकधौतेन नाहतेन कर्हिचित् ॥ याज्ञवल्क्यः—अष्टहस्तं नवं श्वेतं सदशं नान्यधारितम् । हतं तद्विजानीयात्सर्वकर्मसु पावनम् ॥ यन्त्रनिर्मुक्तं प्रक्षालितमप्यहतमिह ॥ सत्यातपः—अहतं यन्त्रनिर्मुक्तमुक्तं वासः स्वयम्भुवा । शस्तं स्थलिकेष्वेतत्तावत्कालं प्रकीर्तितम् ॥

११२. 'वर्ज्यवस्त्राणि.' दक्षः—ईषद्धौतं स्त्रिया धौतं शूद्रधौतं तथैव प्रसारितं यमदिशि गर्हितं सर्वकर्मसु ॥ आपस्तम्बः—आर्द्रवासा न कुर्याज्जपहोमपरिग्रहान् । सर्वं तद्राक्षसं विन्द्यात्कर्मजातं च यत्कृतम् ॥ यज्जले शुष्कवस्त्रेण स्थले चैवार्द्रवाससा । जपो होमस्तथा दानं तन्निष्फलं भवेत् ॥ न स्यूतेन न दग्धेन पारक्येण विशेषतः । मूषकोत्कीर्णजीर्णेन कर्म कुर्याद्विचक्षणः ॥ आह्निककारिकासु—आर्द्रवासा कुर्यात्तर्पणाचमनं जपम् । शुष्कवासाः स्थले कुर्यात्तर्पणाचमनं जपम् ॥ [इत]रङ्गविराजितं गतदशं कोशोद्भवं वासितं नीलीरङ्गसमन्वितं च समलं

नैवायतं चास्ति यत्। दग्धं चैव च दण्डितं च बहुधा युद्धादिकैश्चि
तद्वर्ज्यं खलु देवपूजनविधौ वस्त्रं कुसुम्भारुणम् ॥

११३. 'धौतवस्त्रप्रसारणम्.' शातातपः—प्रागग्रमुदगग्रं वा वासः प्रसारयेत्। दक्षिणाग्रं पश्चिमाग्रं पुनः प्रक्षालनं भवेत् ॥

११४. 'उपवस्त्रपरिधानाऽवश्यकता.' विष्णुपुराणे—होमदे वेनाद्यासु क्रियासु पठने तथा। नैकवस्त्रः प्रवर्तेत द्विजो नाचमने ज व्याघ्रपादः—नैकवस्त्रो द्विजः कुर्याद्भोजनं च सुरार्चनम् ॥ आह्नि कारिकासु—एकवस्त्रं विनापात्रं सव्ययज्ञोपवीतकम्। प्रत्यक्षं तु शौचं कुर्वञ्छूद्रत्वमाप्नुयात् ॥

११५. 'उपवस्त्रधारणमन्त्रः' पारस्करः—यशसा मा द्यावापृथि यशसेन्द्राबृहस्पती। यशो भगश्च मा विदद्यशो मा प्रतिपद्यताम् हरिहरभाष्ये—अथोत्तरीयं यशसा मेति अथोत्तरीयपरिधानानन्तरं त शमेवोत्तरीयं वासो यशसा मेत्यादिना यशो मा प्रतिपद्यतामित्यन्तेन च्छादयीतेति गतेनाख्यातेन सम्बन्धः। एकं चेत्पूर्वस्योत्तरवर्गेण प्रच्छ दयीत ॥

११६. 'उपवस्त्राभावे प्रतिनिधिः' स्मृत्यन्तरे—यज्ञोपवीते धार्ये श्रौते स्मार्ते च कर्मणि। तृतीयमुत्तरीयार्थं वस्त्राभावे चतुर्थकम् परशुरामनिबन्धे तु—उपवस्त्रं यदा न स्यात्तदा चत्वारि धारयेत्। स्नातसन्ध्यादिकर्मसमये उपवस्त्रमवश्यमेव धार्यम् ॥

११७. "वस्त्रादिशुद्धिः." योगीश्वरः—निष्पीड्य स्नानवस्त्रं आचम्य विधिना ततः। देवानामर्चनं कुर्याद्ब्रह्मादीनामनन्तरम् ॥ आह्नि कारिकासु—गृहस्नानं यदा कुर्याद्वस्त्रमूर्ध्वं परित्यजेत्। अधोग्रेण च ष्पीड्य पराशरवचो यथा ॥ स्नानं कृत्वार्द्रवस्त्रं चऊर्ध्वमुत्तारयेद्विजः। आर्द्रव मधः क्षिप्त्वा पुनःस्नानेन शुध्यति ॥ मनुः—काकस्पृष्टानि वस्त्राणि प्रो तानि शुचीनि हि। प्रोक्षणाद्भूमिशुद्धिः स्याद्वाससामपि सर्वदा ॥ योगी प्रोक्षणेनैव शुद्धिः स्याद्दुकूले नैव कम्बले। प्रक्षालनेन वस्त्रस्य सम्पर्के स रजे ॥ नीली पट्टे जलं तक्रे गावश्चाण्डालमन्दिरे। पञ्चगव्येन भिक्षा वित्राणि दिने दिने। द्रव्यस्यान्तर्गता नीली न दूष्यति कदाचन। क पट्टसूत्रे च नीलीदोषो न विद्यते ॥ धौमिः—अद्भिस्तु प्रोक्षणं शौचं ब धान्यवाससाम्। प्रक्षालनेन स्वल्पानामद्भिः शौचं विधीयते। वीर्य शवस्पर्शं स्पृष्टं मूत्रपुरीषयोः। रजस्वलादिसंस्पृष्टमाविकं तु सदा शु याज्ञवल्क्यः—त्रपुसीसकताम्राणां क्षीराम्लोदकवारिभिः। भस्मभिः का

लोहानां शुद्धिः प्लावो द्रवस्य तु ॥ अन्यस्तु—घृतस्य नवनीतस्य आढकादिप्रमाणस्य श्वकाकादिदुःस्पर्शे प्रत्यक्षस्पर्शयुक्तं तद्धृतनवनीतादिकं त्यक्त्वान्यद्भाण्डे प्रक्षिप्याग्नौ प्रताप्य वस्त्रेण परिशोध्य गायत्र्याभिमन्त्रितजलाभ्युक्षणाच्छुद्ध्यति। एवं तक्रतैलक्षीरदध्नां द्रोणप्रमाणानां काकाद्युपहतौ शुद्धिं कुर्यात् ॥ सर्वत्र वसुधा पूता यत्र लेपो न विद्यते। यत्र लेपो भवेत्तत्र पुनर्लेपेन शुद्ध्यति। पञ्चगव्यं पिवेद्विप्रो बिभृयाच्छिरसा नृपः। वैश्यस्याभ्युक्षणं प्रोक्तं शूद्रस्य तु निरीक्षणम् ॥ अतीव तृषितो विप्रस्तोयं शूद्रस्य चेत्पिबेत्। उपवासेन चैकेन पञ्चगव्येन शुद्ध्यति ॥

११८. 'सन्ध्योपासनम्.' कात्यायनपरिशिष्टसूत्रे—उत्तीर्य धौते वाससी परिधाय मृदोरू करौ प्रक्षाल्याचम्य। त्रिरायम्यासून् रूपाण्यम्बुमिश्राण्यूर्ध्वं क्षिप्त्वोर्ध्ववाहुः सूर्यमुदीक्षन्नुद्वयमुदुत्त्यं चित्रं चक्षुरितिगायत्र्या च यथाशक्तिः ॥ पारस्करगृह्यसूत्रे–वाक्प्राणचक्षुःश्रोत्रंयशोबलमिति त्र्यायुषाणि करोति ॥

११९. 'सन्ध्याफलम्.' अत्रिः—सन्ध्यामुपासते ये तु सततं संसितव्रताः। विधूतपापास्ते यान्ति ब्रह्मलोकं सनातनम् ॥ याज्ञवल्क्यः—यावन्तोऽस्यां पृथिव्यां हि विकर्मस्थास्तु वै द्विजाः। तेषां वै पावनार्थाय सन्ध्या सृष्टा स्वयम्भुवा ॥ निशायां वा दिवा वापि यदज्ञानकृतं भवेत्। त्रिकालसन्ध्याकरणात्तत्सर्वं हि प्रणश्यति ॥

१२०. 'सन्ध्याऽभावे दोषः.' मरीचिः—सन्ध्या येन न विज्ञाता सन्ध्या येनानुपासिता। जीवमानो भवेच्छूद्रो मृतः श्वा चाऽभिजायते ॥ [illegible]—सन्ध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु। यदन्यत्कुरुते कर्म न तस्य फलभाग्भवेत् ॥

१२१. 'सन्ध्याव्याख्या.' नागदेवः—अहोरात्रस्य यः सन्धिः सूर्यनक्षत्रवर्जितः। सा तु सन्ध्या समाख्याता मुनिभिस्तत्त्वदर्शिभिः ॥

१२२ 'सन्ध्याकालः' नागदेवः—सूर्योदयात्पूर्वं द्वे घटिके सन्ध्याकालः ॥ अग्निस्मृतौ—सन्ध्याकालः प्रागुदयाद्विप्रस्य द्विमुहूर्तकः। [illegible]स्य तदर्धं स्यात्तदर्धं स्याद्विशोऽप्युत ॥ धर्मसारे—उत्तमा तारकोपेता मध्यमा लुप्ततारका। अधमा सूर्यसहिता प्रातःसध्या त्रिधा मता ॥

१२३. 'त्रिकालसन्ध्यानामानि.' व्यासः—'गायत्री' नाम पूर्वाह्णे 'सावित्री' मध्यमे दिने। 'सरस्वती' च सायाह्ने एवं सन्ध्या त्रिधा स्मृता ॥

१२४. 'प्रातःसन्ध्यावर्णनम्.' बृहत्पाराशरः—पूर्वसन्ध्या तु गा-

यत्री ब्राह्मणी हंसवाहना । रक्तपद्मारुणा देवी रक्तपद्मासनस्थिता ॥ र भरणभासाङ्गा रक्तमाल्याम्बरा तथा । अक्षमाला स्रुवाधारा चारुहस्ताऽ र्चिता ॥ प्रागादित्योदयाद्विद्वान्मुहूर्ते वैधवे सति । उत्थायोपासयेत्स यावत्स्यादर्कदर्शनम् ॥ विश्वमातः सुराभ्यर्च्ये पुण्ये गायत्रि वैधसि । आ ह्याम्युपास्त्यर्थं एह्येनोऽस्ति पुनीहि माम् ॥

१२५. 'माध्याह्नसन्ध्यावर्णनम्.' बृहत्पाराशरः—सन्ध्या मा ह्निकी श्वेता सावित्रीरुद्रदेवता । वृषेन्द्रवाहना देवी बालत्रिशिखधारि श्वेताम्बरधरा श्वेता नानाभरणभूषिता । श्वेतस्रगक्षमालापि कृतानु शङ्करा ॥ जलाधारा धरा धात्री धरेन्द्राङ्गभवाभवा । स्वभाविभातमू सुरौघनुतपद्वया ॥ मातर्भवानि विश्वेशि विश्वविश्वजनार्चिते । शुभे वरेण्याहि आहूते हि पुनीहि माम् ॥

१२६. 'सायंसन्ध्यावर्णनम्.' बृहत्पाराशरः—सन्ध्या साय कृष्णा विष्णुदेवा सरस्वती । खर्गगा कृष्णवस्त्रा तु शङ्खचक्रगदाध कृष्णभ्रूभूषणैर्युक्ता सर्वज्ञानमया वरा । सर्ववाग्देवता सर्वा ब्राह्म्यादिव स्थिता ॥ वीणाक्षमालिका चारुहस्ता सितवरानना । चतुर्दशजनाम कल्याणी शुभकृत् सदा । मातर्वाग्देवते देवि वरेण्ये च वरप्रदे । स द्रुणस्तुत्ये आहूते हि पुनीहि माम् ॥

१२७. 'सन्ध्यावर्णाः.' व्यासः—गायत्री तु भवेद्रक्ता सा शुक्लवर्णिका । सरस्वती तथा कृष्णा उपास्या वर्णभेदतः ॥ तत्रै गायत्री ब्रह्मरूपा तु सावित्री रुद्ररूपिणी । सरस्वती विष्णुरूपा उ वर्णभेदतः ॥

१२८. 'सन्ध्यागोत्राणि.' ग्रन्थान्तरे—गायत्री तु साङ्ख्य यनसगोत्रम् ॥ सावित्री तु कात्यायनगोत्रम् ॥ तथा सरस्व बाहुल्यगोत्रम् ॥

१२९. 'सन्ध्योपयोगिजलपात्राणि.' प्रयोगपारिजाते— च्युतेन तोयेन सन्ध्योपास्तिर्विगर्हिता । नद्यां तीर्थे ह्रदे वापि मृन्मयेपि वा ॥ औदुम्बरे च सौवर्णे राजते दारुसम्भवे । कृ वामहस्ते वा सन्ध्योपास्तिं समाचरेत् ॥ मरीचिः—गोकर्णाकृति ताम्रं रौप्यं च हाटकम् । जलं तत्र विनिक्षिप्य सन्ध्योपासनमाच आह्निककारिकासु—कांस्येनायसपात्रेण त्रपुसीसकपित्तलैः । आ शतकृत्वोऽपि न कदाचन शुध्यति ॥

१३०. 'सन्ध्यादिजपस्थलम्.' वाचस्पतौ ईश्वरः—गृहे

समः प्रोक्तो गोष्ठे शतगुणः स्मृतः । आरामे च तथाऽरण्ये सहस्रगुण उच्यते । अयुतः पर्वते पुण्ये नद्यां लक्षगुणस्तु सः । कोटिर्देवालये प्राहुरनन्तः शिवसन्निधौ ॥ याज्ञवल्क्यः—शतेन गायत्र्या स्नायात् शतमन्तर्जले जपेत् । आपः शतेन पीत्वा तु सर्वपापैः प्रमुच्यते ॥ शारदायाम्—पुण्यक्षेत्रं नदीतीरं गुहापर्वतमस्तकम् । तीर्थप्रदेशाः सिन्धूनां सङ्गमः पावनं सरः ॥ उद्यानानि विविक्तानि बिल्वमूलं तटं गिरेः । देवाद्यायतनं कूलं समुद्रस्य निजं गृहम् ॥ शातातपः—अनृतं मद्यगन्धं च दिवामैथुनमेव च । पुनाति वृषलस्थानं बहिःसन्ध्या ह्युपासिता ॥

१३१. 'कालातिक्रमणे सन्ध्योपासनम्.' मदनपारिजाते—कालातिक्रमणे चैव चतुर्थार्घ्यं प्रदापयेत् ॥

१३२. 'उक्तासनानि.' 'व्यासः—कौशेयं कम्बलं चैव अजिनं पट्टमेव च । दारुजं तालपत्रं वा आसनं परिकल्पयेत् ॥

१३३. 'आसनगुणाः'—कृष्णाजिने ज्ञानसिद्धिर्मोक्षश्रीर्व्याघ्रचर्मणि । वंशाजिने व्याधिनाशः कम्बले दुःखमोचनम् ॥ अभिचारे नीलवर्णं रक्तं वश्यादिकर्मणि । शान्तिके कम्बलः प्रोक्तः सर्वेष्टं चित्रकम्बलम् । वंशासने तु दारिद्र्यं पाषाणे व्याधिसम्भवः । धरण्यां दुःखसम्भूतिर्दौर्भाग्यं छिद्रिदारुजे । तृणे धनयशोहानिः पल्लवे चित्तविभ्रमः ॥

१३४. 'आसनपरिमाणम्.' कालीपुराणे—चतुर्विंशत्यङ्गुलैस्तु दीर्घं काष्ठासनं मतम् । षोडशाङ्गुलविस्तीर्णमुत्सेधे चतुरङ्गुलम् ॥ पञ्चाङ्गुलं क्ुर्यात्तु नोच्छ्रितं चात्र कारयेत् । वास्त्रं द्विहस्तान्नो दीर्घं सार्द्धहस्तान्न तम् ॥ त्र्यङ्गुलं तु तथोच्छ्रायं पूजाकर्मणि संश्रयेत् । सर्वेषां तैजसानां आसनं श्रेष्ठमुच्यते ॥

१३५ 'वर्ज्यासनम्.' देवीभागवते—आयसं वर्जयित्वा तु कांस्यकमेव च ॥

१३६. 'पादुकाधारणनिषेधः.' आङ्गिराः—अग्न्यागारे गवां गोष्ठे ब्राह्मणसन्निधौ । आहारे जपकाले च पादुकानां विसर्जनम् ॥

१३७. 'प्रौढपादासनम्.' आचारमयूखे—दानमाचमनं होमं भोजनं देवतार्चनम् । प्रौढपादेन कुर्वीत स्वाध्यायं पितृतर्पणम् ॥ आह्निककारिकासु—आसनारूढपादस्तु जानुनोर्वाथ जङ्घयोः । कृतावसक्थिको यः प्रौढपादः स उच्यते ॥

---

[समा]दादिषडासनानि नौपाधिकानि किंतु शरीरावयवसंकोचविकसनभेदेन शरीर[गत]तः ज्ञेयानि ।

१३८. 'स्वस्तिकासनम्.' कालीपुराणे—सव्यमाकुञ्चितं दक्षिणजङ्घोर्वन्तरे दक्षिणं च सव्यजङ्घोर्वन्तरे निक्षिपेदिति ॥

१३९. 'पद्मासनम्'—पद्मासनमिदं प्रोक्तं योगिनां हृदयङ्गमम् । जानूर्वोरन्तरे सम्यक् कृत्वा पादतले उभे ॥ वाचस्पतौ—ऊरुमूले वाम पुनस्तु दक्षिणं पदम् । वामोरौ स्थापयित्वा तु पद्मासनमिति स्मृतम् । देवीभागवते—पद्मासनं स्वस्तिकं च भद्रं वज्रासनं तथा । वीरासनं प्रोक्तं क्रमादासनपञ्चकम् ॥ ऊर्वोरुपरि विन्यस्य सम्यक्पादतले शु अङ्गुष्ठौ च निबध्नीयाद्धस्ताभ्यां व्युत्क्रमात्ततः ॥

१४०. 'स्वस्तिकासनम्.' देवीभावगते—ऋजुकायो विशे स्वस्तिकं तत्प्रचक्षते ॥

१४१. 'भद्रासनम्.' देवीभागवते—सीवन्याः पार्श्वयोर्न्यस्य गुल्फ सुनिश्चितम् ॥ वृषणाधः पादपार्ष्णिः पाणिभ्यां परिबन्धयेत् । भद्रासनं प्रोक्तं योगिभिः परिपूजितम् ॥

१४२. 'वज्रासनम्.' देवीभागवते—ऊर्वोः पादौ क्रमान्न्यस्य जा प्रत्यङ्मुखाङ्गुली । करौ विदध्यादाख्यातं वज्रासनमनुत्तमम् ॥

१४३. 'वीरासनम्.' देवीभागवते—एकं पादमधः कृत्वा विन्य तथोत्तरे । ऋजुकायो विशेद्योगी वीरासनमितीरितम् ॥

१४४. 'सन्ध्योपासने दिग्विचारः.' लघुव्याससंहितायाम् प्राङ्मुखः प्रयतो विप्रः सन्ध्योपासनमाचरेत् ॥ आसीनः प्राङ्मुखो जपं कुर्याद्यथाविधि ॥ परिभाषाकर्मप्रदीपे—यत्रोपदिश्यते कर्म न तूच्यते । दक्षिणस्तत्र विज्ञेयः कर्मणां पारगः करः ॥ यत्र दि न स्याज्जपहोमादिकर्मसु । तिस्रस्तत्र दिशः प्रोक्ता ऐन्द्री सौ जिता ॥ गौतमः—रात्रावुदङ्मुखः कुर्याद्दैवं कार्यं सदैव हि । शिव सदाप्येवं शुचिः कुर्यादुदङ्मुखः ॥ तन्त्रान्तरे—यत्रैव भानुः सततं प्राचीति तां वेदविदो वदन्ति । ततोऽपरां पूजकपूज्ययोश्च प्रवदन्ति यां तु । तत्परिभाषायामुक्तत्वात् । अन्यत्र तु सूर्योदये प्राची ग्राह्या । बृहत्पाराशरः—ईशान्याभिमुखो भूत्वा द्विजः पूर्वमु वा । सन्ध्यामुपासयेन्नित्यं यथावत्तन्निबोधत ॥

१४५. 'सन्ध्यायां मात्राः.' देवीभागवते—इडयाकर्षयेद्वायुं षोडशमात्रया ॥ धारयेत्पूरितं योगी चतुःषष्ट्या तु मात्रया ।

१. एतदासनं सूर्यार्घ्यप्रदाने योजनीयम् २ इयं पूज्यपूजकान्तवर्तिगृहे मोक्षपूजायामेव ग्राह्या ॥

(आ॥ह.नं ११६-११)

भस्म — (नित्यकृत्यार्णव ९५१।१।५)

प्रयोग पारिजाते —
"धार्यं भस्म त्रिसन्ध्यन्तु गृहिणा जलसंयुतम्॥ सर्वकालं भवेत् स्त्रीणां यतीनां जलवर्जितम्॥"

"मध्यांगुलित्रयेणैव स्वदक्षिण करस्य तु॥ त्रिपुण्ड्रं धारयेद्विद्वान् सर्व कल्मष नाशनम्॥"

स्मृतिरत्नावल्यामपि — मध्यमाऽनामिकाङ्गुष्ठैः स्नुलोमविलोमतः॥ अलिके च त्रिपुण्ड्रं मनायुष्यमती हीर्घि तपः क्षयः॥ नेत्रयुग्म प्रमाणं तु त्रिपुण्ड्रं धारयेद्द्विजः॥ षडङ्गुल प्रमाणेन ब्राह्मणानां त्रिपुण्ड्रकं॥ नृपाणां चतुरङ्गुलं

मध्यगं सम्यग्द्वात्रिंशन्मात्रया शनैः ॥ नाड्या पिङ्गलया चैव रेचयेद्योगवि-त्तमः ॥ प्राणायाममिमं प्राहुर्योगशास्त्रविशारदाः ॥

१४६. 'भस्मधारणम्.' पारस्करगृह्यसूत्रे—भस्मना ललाटे ग्रीवायां दक्षिणेंऽसे हृदि च त्र्यायुषमिति मतिमन्त्रम् ॥ प्रातः ससलिलं भस्म मध्याह्ने गन्धमिश्रितम् । सायाह्ने निर्जलं भस्म एवं भस्म विलेपयेत् ॥

१४७. 'ग्राह्यं भस्म.' ब्राह्मे—गङ्गातीरसमुद्भूतां मृदं मूर्ध्ना बिभर्ति यः । बिभर्ति सोऽर्कस्य तेजस्तमोनाशाय केवलम् ॥ काशीखण्डे—आग्नेय्यमुच्यते भस्म दग्धगोमयसम्भवम् । तदेव द्रव्यमित्युक्तं त्रिपुण्ड्रस्य महामुने ॥ सङ्ग्रहे—अग्निहोत्राग्निजं भस्म विरजाहोमजं तथा । औपाससमुत्पन्नं समिदग्निसमुद्भवम् ॥ समिदग्निसमुत्पन्नं धार्यं वै ब्रह्मचारिणा । शूद्राणां श्रोत्रियागारपचनाग्निसमुद्भवम् ॥ अन्येषामपि सर्वेषां धार्यं दावानलोद्भवम् ॥ प्रयोगपारिजाते—मृद्भस्म चन्दनं प्रोक्तं तोयं चैव चतुर्थकम् । स्नात्वा पुण्ड्रं मृदा कुर्यात्प्रक्षाल्यैव तु भस्मना ॥ देवानभ्यर्च्य गन्धेन जलमध्ये जलेन तु ॥

१४८. 'भस्मधारणफलम्.' कात्यायनः—श्राद्धे यज्ञे जपे होमे वैश्वदेवे सुरार्चने । धृतत्रिपुण्ड्रः पूतात्मा मृत्युं जयति मानवः ॥

१४९. 'भस्मधारणप्रकाराः.' कात्यायनः—ऊर्ध्वपुण्ड्रं मृदा कुर्याद्भस्मना तु त्रिपुण्ड्रकम् । उभयं चन्दनेनैव अभ्यङ्गोत्सवरात्रिषु ॥ प्रयोगपारिजाते—धार्यं भस्मत्रिपुण्ड्रं तु गृहिणा जलसंयुतम् । सर्वकालं तु स्त्रीणां यतीनां जलवर्जितम् ॥ वानप्रस्थस्य कन्यानां दीक्षाहीननृणां तथा । मध्याह्नात्प्राग्जलैर्युक्तं परतो जलवर्जितम् ॥ मध्याङ्गुलित्रयेणैव स्वदक्षकरस्य च । त्रिपुण्ड्रं धारयेद्विद्वान् सर्वकिल्बिषनाशनम् ॥ भविष्यपुराणे—सितेन भस्मना कुर्यात्त्रिसन्ध्यं च त्रिपुण्ड्रकम् । सर्वपापविनिर्मुक्तः शिवेन सह मोदते ॥ सत्यं शौचं जपो होमस्तीर्थदेवादिपूजनम् । तस्य व्यर्थमिदं सर्वं यस्त्रिपुण्ड्रं न धारयेत् ॥ स्मृतिरत्नावल्याम्—ललाटे हृदये नाभौ गलेंऽसे बाहुसन्धिषु । पृष्ठदेशे शिरस्येवं स्थानेष्वेतेषु धारयेत् ॥ मध्यमाऽनामिकाङ्गुष्ठैरनुलोमविलोमतः । अतिस्वल्पमनायुष्यमतिदीर्घं तपःक्षयम् ॥ नेत्रयुग्मप्रमाणेन त्रिपुण्ड्रं धारयेद्द्विजः । षडङ्गुलप्रमाणं तु ब्राह्मणानां त्रिपुण्ड्रकम् ॥ नृपाणां चतुरङ्गुल्यं वैश्यानां द्व्यङ्गुलं स्मृतम् । शूद्राणामथ सर्वेषामेकाङ्गुल्यं त्रिपुण्ड्रकम् । काशीखण्डे—भ्रुवोर्मध्यं समारभ्य यावदन्तो भवेद्भ्रुवोः । मध्यमाऽनामिकाङ्गुल्योर्मध्ये तु प्रतिलोमतः ॥ अङ्गुष्ठेन कृता रेखा त्रिपुण्ड्रः सोऽभिधीयते ॥

१५०. 'भस्मधारणे मन्त्राः' पुलस्त्यः—अग्निरित्यादिभि
शुद्धं ब्रह्माभिमन्त्रितम् । शिवमन्त्रेण तद्धार्यं मन्त्रेणाष्टाक्षरेण वा ॥ गा
त्र्या वा च देवर्षे मन्त्रेण प्रणवेन वा । करोति शिवमन्त्रेण यस्त्रिपुण्ड्रं
जोत्तमः ॥ त्र्यक्षः शुद्धतरः सौम्यः शिवलोके महीयते । अष्टाक्षरेण
न्त्रेण यः करोति त्रिपुण्ड्रकम् ॥ विष्णोः पदमवाप्नोति नान्यथा श्रुति
दितम् । सौरं पदमवाप्नोति गायत्र्या मुनिसत्तम ॥ प्राप्नोति ब्रह्मणो
प्रणवेन न संशयः ॥ क्रियासारे—वामहस्ततले भस्म क्षिप्त्वाऽच्छाद्य
पाणिना । अग्निरित्यादिमन्त्रेण स्पृशन् भस्माभिमन्त्र्य च ॥

१५१. 'भस्मधारणाभावे दोषः.' बृहन्नारदीये—स्नानं दानं
होमः सन्ध्यास्वाध्यायकर्मसु । ऊर्ध्वपुण्ड्रविहीनश्चेत्तत्सर्वं निष्फलं भवे
प्रयोगपारिजाते—ललाटे तिलकं कृत्वा सन्ध्याकर्म समाचरेत् । द्विद
कृत्वा भालतिलकं तस्य कर्म निरर्थकम् ॥

१५२. 'रुद्राक्षधारणफलम्.' वाचस्पतौ ईश्वरः—रुद्राक्षा
गात्रेषु ललाटे च त्रिपुण्ड्रकम् । स चाण्डालोपि सम्पूज्यः सर्ववर्णोत्तमो
भवेत् ॥ अभक्तो वा विभक्तो वा नीचो नीचतरोपि वा । रुद्राक्षान्धारयेद्य
मुच्यते सर्वपातकैः ॥ सहस्रं धारयेद्यस्तु रुद्राक्षाणां धृतव्रतः । तं न
सुराः सर्वे यथा रुद्रस्तथैव सः ॥

१५३. 'मालालक्षणम्.' आह्निककारिकासु—मध्यमादिद्वयं
वै जपकाले तु वर्जयेत् । तं वै मेरुं विजानीयात्कथितं ब्रह्मणा पुरा ॥
हीना च या माला मेरूलङ्घा च या भवेत् । अशुद्धप्रतिकाशा
माला निष्फला भवेत् ॥ चित्रिणी बिसतन्त्वाभा ब्रह्मनाडीगतान्तरा ।
सङ्ग्रथिता माला सर्वकामफलप्रदा ॥ नागदेवः—अरिष्टपत्रं बीजं
ङ्खपद्मौ मणिस्तथा । कुशग्रन्थिश्च रुद्राक्ष उत्तमं चोत्तरोत्तरम् ॥ प्रवा
मुक्तास्फटिकैर्जपः कोटिफलप्रदः । तुलसीमणिभिर्येन गणितं चाक्षयं
लम् ॥ व्यासः—हिरण्यगर्भमणिभिर्जप्तं शतगुणं भवेत् । सहस्रगुण
न्द्राक्षै रुद्राक्षैर्नियुतं भवेत् ॥ नियुतं प्रयुतं वा स्यात्पद्माक्षैस्तु न संशय
अष्टोत्तरशतं कुर्याच्चतुःपञ्चाशिकापि वा । सप्तविंशतिका वापि ततो नैवा
हिता ॥ अक्षुद्रा समरन्ध्रा च परिपूर्णा दृढापि च । सशब्दा च चल
तु त्रुटिता ग्रथिता तथा ॥ छिन्ना सूत्रेषु ग्रथिता पाषाणस्यापुरा
निश्चला ग्रथितान्योन्यं सङ्घर्षणविवर्जिता ॥ माला दुःखप्रदायिन्यो ग्र
निन्द्यतन्तुषु । तर्जन्या न स्पृशेदक्षं जपयेन्न विधूनयेत् ॥ अङ्गु
मध्यस्य परिवर्तं समाचरेत् । मध्यमाऽकर्षणं त्वस्याः सर्वसिद्धिप्रदायक

१५४. 'रुद्राक्षधारणाभावे दोषः.'—अरुद्राक्षो जपः पुंसां तावन्मात्रफलप्रदः । यस्याङ्गे ह्यस्ति रुद्राक्ष एकोऽपि बहुपुण्यदः ॥ विभूतिर्यस्य नो भाले नाङ्गे रुद्राक्षधारणम् । नहि वाण्यां शिवोच्चारस्तं त्यजेदन्त्यजं यथा ॥

१५५. 'कर्मविशेषे दर्भप्रमाणम्.' कुशकण्डिकासूत्रभाष्ये—ब्रह्मयज्ञे गोकर्णमात्रप्रमाणौ द्वौ दर्भौ । तर्पणे हस्तमात्रप्रमाणास्त्रयो दर्भाः ॥ अमरः—प्रादेशतालगोकर्णास्तर्जन्यादियुते तते । अङ्गुष्ठे सकनिष्ठे स्याद्वितस्तिर्द्वादशाङ्गुल इति ॥ अत्रिः—अनामिकामूलदेशे पवित्रं धारयेद्द्विजः ॥

१५६. 'कुशपवित्रम्.' कात्यायनः—अनन्तर्गर्भितं साग्रं कौशं द्विदलमेव च । प्रादेशमात्रं विज्ञेयं पवित्रं यत्रकुत्रचित् ॥ मार्कण्डेयः—चतुर्भिर्दर्भपिञ्जूलैर्ब्राह्मणस्य पवित्रकम् । एकैकन्यूनमुद्दिष्टं वर्णे वर्णे यथाक्रमम् ॥ सपवित्रेण हस्तेन कुर्यादाचमनक्रियाम् । नोच्छिष्टं तत्पवित्रं तु भुक्तोच्छिष्टं तु वर्जयेत् ॥ सुमन्तुः—समूलाग्रौ विगर्भौ तु कुशौ द्वौ दक्षिणे करे । सव्ये चैव तथा त्रीन्वै बिभृयात्सर्वकर्मसु ॥ अत्रिः—ब्रह्मयज्ञे जपे चैव ब्रह्मग्रन्थिर्विधीयते । भोजने वर्तुलं प्रोक्तमेवं धर्मो न हीयते ॥ बौधायनः—हस्तयोरुभयोर्द्वौ द्वावासनेऽपि तथैव च ॥ हारीतः—वामहस्ते कुशान् कृत्वा समाचामति यो द्विजः । उपस्पर्शो भवेत्तुल्यो रुधिरेण मलेन च ॥ उभयत्र स्थितैर्दर्भैः समाचामति यो द्विजः । सोमपानफलं तस्य भुक्त्वा यज्ञफलं भवेत् ॥ प्रयोगपारिजाते—स्नाने होमे जपे दाने स्वाध्याये पितृकर्मणि । करौ सदर्भौ कुर्वीत तथा सन्ध्याभिवादने ॥

१५७. 'कुशपवित्रप्रमाणम्.'—द्व्यङ्गुलं मूलवलयं ग्रन्थिरेकाङ्गुलं भवेत् । चतुरङ्गुलमग्रं स्यात्पवित्रस्य प्रमाणकम् ॥ पौष्टिके पञ्चदर्भाश्च [illegible]र्भाश्च शान्तिके । पैतृके तु त्रिदर्भाश्च द्वौ दर्भौ नित्यकर्मणि ॥ आ[illegible]कारिकासु—यथा वज्रं सुरेन्द्रस्य यथा चक्रं हरेस्तथा । त्रिशूलं त्रिनेत्रस्य ब्राह्मणस्य पवित्रकम् ॥ तत्र च—द्विगुणी कृतानां दर्भशि[illegible] पाशः प्रदक्षिणमर्धवेष्टनं विधाय पश्चाद्भागेन यदा प्रवेश्यते तदा [illegible] ग्रन्थिः । यदा प्रादक्षिण्येन सर्ववेष्टनं विधाय पुरोभागेन प्रवेश्यते [illegible] ब्रह्मग्रन्थिरिति ॥ ब्रह्मयज्ञे जपे चैव ब्रह्मग्रन्थिर्विधीयते । भोजने व[illegible] प्रोक्तमेवं धर्मो न हीयते ॥

१५८. 'कुशपवित्राभावेऽन्यपवित्रम्.' हेमाद्रौ—अन्यान्यपि पवि[illegible]ऽकुशदूर्वामयानि च । हेमात्मकपवित्रस्य कलां नार्हन्ति षोडशीम् ॥

**कातीयसूत्रभाष्ये**—कुशाभावे तु काशाः स्युः काशाः कुश
स्मृताः । काशाभावे गृहीतव्या अन्ये दर्भा यथोचिताः ॥ दर्भाभावे
रूप्यताम्रैः कर्मक्रियाः सदा । कुशाः काशाः शरा दूर्वा यवगोधू
ल्वजाः ॥ सुवर्णं राजतं ताम्रं दश दर्भाः प्रकीर्तिताः । स्नाने होमे
दाने स्वाध्याये पितृतर्पणे ॥ सपवित्रौ सदर्भौ वा करौ कुर्वीत नान्यथ
सर्वेषां वा भवेद्द्वाभ्यां पवित्रं ग्रन्थितं न वा ॥ सपवित्रः सदर्भो वा
ञ्चाचमनं चरेत् । नोच्छिष्टं तत्सदर्भं च दर्भोच्छिष्टं तु वर्जयेत् ॥

१५९. **'हेमादिपवित्रप्रमाणम्.'** **नागदेवः**—माषाणां षोडशा
कुर्याद्धेमपवित्रकम् । तेभ्यः स्वल्पतरं न्यूनं न कुर्वीत कदाचन ॥
र्मणि चोच्छिष्टे कुशजातं पवित्रकम् । निर्माल्यरूपं भवति न हेम्नस्तु
वित्रकम् ॥ **शारदायाम्**—ताम्रतारसुवर्णानामर्कषोडशखेन्दुभिः ।
त्रिशक्तिमुद्रेयं तीव्रदारिद्र्यनाशिनी ॥ इदं पवित्रं तर्जन्यां धारयन्ति
द्विजाः ॥ **योगियाज्ञवल्क्यः**—अनामिकाधृतं हेम तर्जन्यां रूप्यमेव
कनिष्ठिकाधृतं खड्गं तेन पूतो भवेन्नरः ॥ **प्रयोगपारिजाते**—उ
योगपट्टं तर्जन्यां रजतं तथा । न जीवत्पितृकैर्धार्यं ज्येष्ठो वा विद्यते
**ब्राह्मे**—मन्त्रं विना धृतं यत्तत्पवित्रं विफलं भवेत् ॥

१६०. **'शिखाबन्धनम्.'** **चतुर्विंशतिमते**—मध्ये तु बह्वृच
निबध्नीयुः शिखां ततः । माध्यन्दिनाश्च ये विप्राः पार्श्वे दक्षिणतः
मात् ॥ वामपार्श्वे तु बध्नीयुर्ये विप्रा सामगायनाः ॥ **नागदेवः**—
वामभागे च ब्रह्मग्रन्थिर्विधीयते । अमन्त्रो दीयते ग्रन्थिर्जपो होमो
भवेत् ॥ स्मृत्वोङ्कारं च गायत्रीं निबध्नीयाच्छिखां ततः । पुनराचम्य
बाहू स्कन्धौ च संस्पृशेत् ॥ मानस्तोकेति मन्त्रेण शिखाबन्धं तु का
**संस्कारभास्करे**—खल्वाटत्वादिदोषेण विशिखश्चेन्नरो भवेत् ।
तदा धारयीत ब्रह्मग्रन्थियुतां शिखाम् ॥ **कात्यायनः**—सदोपवी
भाव्यं सदा बद्धशिखेन च । विशिखो व्युपवीतश्च यत्करोति न तत्कृतम्

१६१. **'शिखाबन्धनविचारः.'** **ग्रन्थान्तरे**—स्नाने दाने जपे
सन्ध्यायां देवतार्चने । शिखाग्रन्थिं विना कर्म न कुर्याद्वै कदाचन ॥

१६२. **'शिखामुक्तिविचारः.'**—शौचेऽथ शयने सङ्गे भोजने
न्तधावने । शिखामुक्तिं सदा कुर्यादित्येतन्मनुरब्रवीत् ॥

१६३. **'आचमनम्.'** **कात्यायनपरिशिष्टसूत्रे**—आचम्य
णान्संमृशति आचामति आमागन्यति ॥ **आह्निककारिका**

(१) रौप्यधारणमिदं जीवत्पितृकभिन्नविषयम् ॥

आचमनं (वायुपुराणे - नित्य० १६०)
"क्रियां यः कुरुते मोहाद्दनाचम्यैह नास्तिकः॥ भवन्ति हि वृथा तस्य क्रियाः सर्वा न संशयः॥"

भविष्ये - नित्यकृत्यार्णव ४८। ११३
"विना यज्ञोपवीतेन तथा मुक्तशिखो द्विजः॥ अप्रक्षालितपादस्तु आचान्तोऽप्यशुचिर्भवेत्॥ बहिर्जानु रूपस्पृश्य एकहस्तार्पितैर्जलैः॥ सोपानत्कस्तथा तिष्ठन्नैव शुद्धिमवाप्नुयात्॥"

व्यासः - नित्याकृत्यार्णव ४८। ११४
"शिरः प्रावृत्य कण्ठं वा मुक्तकच्छशिखोऽपि वा॥ अकृत्वा पादयोः शौचमाचान्तोऽप्यशुचिर्भवेत्॥"

५ वशिष्ठ :- आचामेत्पुनराचा
मेद्वासो विपरिधाय च । ओष्ठौ च
संस्पृश्य तथा यत्रस्यात्रामलोम
कौ ।

६ दाक्षोमा त्यनिबंधे - भोजने हवने
दाने उपहारे प्रतिग्रहे । हविर्
भक्षण काले वा ता द्विराचमनं
स्मृतम् ॥

७ आचार [redacted] दीपे - दाने
भोजनकाले च सन्ध्ययोरुभ
योरपि ॥ आचान्त : पुनराचा
मेज्जपहोमार्चने पुनः ॥

८ आचार मयूख :- भोजने हवने दाने
उपचारे च प्रतिग्रहे ॥ सन्ध्यायां चैव मधु
पानेषु पूर्वं पश्चाद्द्विराचमेत् ॥

९ आचारार्क :- द्राक्षा ही निष्फलानीक्षुर्
पयो मूलं घृतं दधि ॥ तांबूलमौषधं पत्रं हावि
र्भुक्त्वापि नाचमेत् ॥

प्रणवं पूर्वमुच्चार्य चतुर्विंशतिसङ्ख्यया। स्वाहान्तं प्राशयेद्वारि नमोन्तं स्पर्शयेत्तथा। स्नात्वा पीत्वा क्षुते सुप्ते भुक्त्वा रथ्याप्रसर्पणे। आचान्तः पुनराचामेद्वाससी परिधाय च॥ दक्षिणेनोदकं पेयं दक्षं वामेन संस्पृशेत्। तावन्न शुध्यते तोयं यावद्वामो न युज्यते॥ गोकर्णाकृतिहस्तेन माषमात्रं जलं पिबेत्॥

१६४. 'आचमने उदकम्.' तन्त्रसारे—दध्ना सह पलैकं तु शुद्धं वारि तथाचमेत्। स्नानं सन्ध्या क्रियाः सर्वाः कर्तव्याः शीतवारिणा। तथैवाचमनं प्रोक्तं कर्मानुष्ठानसिद्धये॥

१६५. 'आचमनविचारः.' नागदेवः—संहताङ्गुलिना तोयं गृहीत्वा पाणिना द्विजः। मुक्ताङ्गुष्ठकनिष्ठेन शेषेणाचमनं चरेत्॥ माषमात्रसुवर्णस्य यत्र मज्जति वै मणिः। एतदाचमनं प्रोक्तं पवित्रं कायशोधनम्॥ भरद्वाजः—आयतं पर्वणां कृत्वा गोकर्णाऽऽकृतिवत्करम्। एतेनैव विधानेन द्विज आचमनं चरेत्॥ बृहत्पाराशरः—आमणेर्बन्धनाद्धस्तौ पादौ चाजानुतः शुचिः। प्रक्षाल्याचमयेद्विद्वानन्तर्जानुकरो द्विजः॥ प्रक्षाल्य पादौ हस्तौ च त्रिः पिबेदम्बु वीक्षितम्। सुमृष्टाङ्गुष्ठमूलेन विमृज्य कृती मुखम्॥ दक्षिणे च स्थितं तोयं तर्जन्यां सव्यपाणिनः। तत्तोयं संस्पृशेद्यस्तु सोमपानसमं स्मृतम्॥ बौधायनः—ॐ पूर्वाभिः सर्वाभिर्व्याहृतिभिराचामेत्। यत् प्रथममाचामति तेन ऋग्वेदं प्रीणाति॥ द्वितीयं तेन यजुर्वेदम्। यत्तृतीयं तेन सामवेदम्। यत्प्रथमं संमार्ष्टि तेनाथर्वणवेदम्॥ यद्द्वितीयं तेनेतिहासादीन्। यत्सव्यं पाणिं प्रोक्षति पादौ शिरो हृदयं चक्षुः कर्णौ नासां नाभिं चोपस्पृशति तेनौषधिवनस्पतिप्रभृतीसर्वांश्च देवान् प्रीणाति॥ शङ्खः—त्रिः प्राश्नीयाद्यदम्भस्तु प्रीतास्तेनास्य देवताः। ब्रह्मा विष्णुश्च रुद्रश्च भवन्तीत्यनुशुश्रुम॥ गङ्गा च यमुना चैव प्रीयेते परिमार्जनात्। नासत्यदस्रौ प्रीयेते स्पृष्टे नासापुटद्वये॥ स्पृष्टे लोचनयुग्मे तु प्रीयेते शशिभास्करौ। कर्णयुग्मे तथा स्पृष्टे प्रीयेते अनिलानलौ॥ स्कन्धयोः स्पर्शनादस्य प्रीयन्ते सर्वदेवताः। मूर्ध्नः संस्पर्शनादस्य प्रीतस्तु पुरुषो भवेत्॥

१६६. 'आचमनफलम्.' ब्राह्मे—होमे भोजनकाले च सन्ध्ययोरुभयोरपि। आचान्तः पुनराचामेदन्यत्रापि सकृत्सकृत्॥ द्विराचम्य ततः शुचिः स्मृत्वा विष्णुं सनातनम्॥ व्यासः—शिरः प्रावृत्य कण्ठं वा मुक्तकच्छशिखोऽपि वा। अकृत्वा पादयोः शौचमाचान्तोऽप्यशुचिर्भवेत्॥ अपः पाणिनखे स्पृष्ट्वा आचामेद्यस्तु वै द्विजः। सुरापानेन तत्तुल्य-

(१) अङ्गुष्ठमूलेन निर्लोमप्रदेशेन॥

मित्येवमृषिरब्रवीत् ॥ पैठीनसिः—जानुदघ्नजले नद्यास्तिष्ठन्नेवा
द्विजः । जानोरूर्ध्वं जले तिष्ठन्नाचान्तः शुचितामियात् ॥

१६७. 'आचमनप्रकाराः.' विश्वामित्रकल्पे—शुद्धं स्मार्तं
चैव पौराणं वैदिकं तथा । तान्त्रिकं श्रौतस्मार्तं च षड्विधं श्रुतिनोदितम्
विण्मूत्रादिकशौचेषु 'शुद्धं' च परिकीर्तितम् । 'स्मार्तं' 'पौराणं'
कर्मण्याचमेद्विधिपूर्वकम् ॥ 'वैदिकं' श्रौतमित्यादि ब्रह्मयज्ञादिपूर्वकम्
अस्त्रविद्यादिकार्याणां 'तान्त्रिको' विधिरुच्यते ॥

१६८. 'श्रौताचमनम्.' आह्निककारिकासु—प्रणवं पूर्व
सावित्रीं तदनन्तरम् । तथैव व्याहृतीस्तिस्रः श्रौताचमनमुच्यते ॥

१६९. 'स्मार्ताचमनम्.' भरद्वाजः—केशवाद्यैस्त्रिभिः पिबे
द्वाभ्यां प्रक्षालयेत्करौ ॥ द्वाभ्यामोष्ठौ तु संमृज्य द्वाभ्यामुन्मार्जनं तथा
एकेन हस्तौ प्रक्षाल्य पादावपि तथैव च ॥ सम्प्रोक्ष्यैकेन मूर्धानं तत
ङ्कर्षणादिभिः । आस्यनासाक्षिकर्णौ च नाभ्युरस्कं भुजौ क्रमात् । एवमा
चमनं कृत्वा साक्षान्नारायणो भवेत् ॥ (एतदाचमनं त्रिकालसन्ध्योपा
रम्भे उक्तम् ) ॥

१७०. 'वैदिकाचमनम्.' आचारतिलके—कर्माङ्गे तु त्रि
प्राणायामत्रयं स्मृतम् । प्राङ्मुखो वाऽपि कर्तव्यं कर्म कुर्यात्प्रयत्नतः

१७१. 'वैदिकाचमनं तथा प्राणायामप्रयोगः'—'आचमनादि
ॐ केशवाय नमः स्वाहा । ॐ नारायणाय नमः स्वाहा । ॐ
वाय नमः स्वाहा ॥ ( इति पिबेत् ) ॥ 'हस्तप्रक्षालनम्'—ॐ
विन्दाय नमः ॥ 'आत्मनः समन्तात्प्रदक्षिणवदुदकक्षेपणम्'
नमो भगवते वासुदेवाय ॥ 'प्राणायामाः'—तत्रादौ—'पूरकः'
ॐ भूः । ॐ भुवः । ॐ स्वः । ॐ महः । ॐ जनः ।
तपः । ॐ सत्यम् । ॐ तत्सवितुर्व० ॥ १ ३५/३ ॥ ॐ आपोज्यो
तीरसोमृतं ब्रह्मभूर्भुवः स्वरोम् । ॐ विष्णवे नमः ॥ ( एवं दक्षिण
नासापुटं पीडयेत् ) ॥ 'कुम्भकः'—उपरिदर्शितक्रमेण । ॐ ब्रह्मणे
नमः ॥ ( एवं वामनासापुटं पीडयेत् ) ॥ 'रेचकः'—उपरिदर्शितक्र
मेण । ॐ महेश्वराय नमः । ( एवं उभयनासापुटे पीडयेत् ) ॥ इति वै
दिकाचमनं तथा प्राणायामप्रयोगः ॥

१७२. 'जलाभावे आचमनम्.' आचारमयूखे—क्षुते नि
चैव दन्तोच्छिष्टे तथाऽनृते । पतितानां च सम्भाषे दक्षिणं श्र

(१) त्रिकालसन्ध्योपासनारम्भे अयं प्रयोगो न योजयेत् ॥

शेत् ॥ अग्निरापश्च वेदाश्च सोमः सूर्योऽनिलस्तथा । सर्वे देवास्तु विप्रस्य कर्णे तिष्ठन्ति दक्षिणे ॥ साङ्ख्यायनः—आदित्या वसवो रुद्रा वायुरग्निश्च धर्मराट् । विप्रस्य दक्षिणे कर्णे नित्यं तिष्ठन्ति देवताः ॥ क्षुते निष्ठीवने सुप्ते परिधानेऽश्रुपातने । कर्मस्थ एषु नाचामेद्दक्षिणं श्रवणं स्पृशेत् ॥ पराशरः—प्रभासादीनि तीर्थानि गङ्गाद्याः सरितस्तथा । विप्रस्य दक्षिणे कर्णे वसन्ति मुनिरब्रवीत् ॥ गङ्गा च दक्षिणे श्रोत्रे नासिकायां हुताशनः । उभयोः स्पर्शने चैव तत्क्षणादेव शुद्ध्यति ॥ नागदेवः—अशब्दाभिरनुष्णाभिस्त्यक्ताभिः फेनबुद्बुदैः । आपद्गतानां शुद्धिः स्यादुष्णेनापि च वारिणा ॥ पादक्षालनशेषेण नाचामेद्वारिणा द्विजः । शुद्धाभावे पिबेत्किञ्चित्त्यक्त्वा भूमौ तु तज्जलम् ॥ मार्कण्डेयः—कुर्यादाचमनं स्पर्शं गोपृष्ठस्यार्कदर्शनम् । कुर्वीतालम्भनं चापि दक्षिणश्रवणस्य च ॥

१७३. 'प्राणायामः.' कात्यायनपरिशिष्टसूत्रे—वाङ्म आस्ये नसोः प्राणोऽक्ष्णोश्चक्षुः कर्णयोः श्रोत्रं बाह्वोर्बलमूर्वोरोजोरिष्टानि अङ्गानि तनूस्तन्वा मे सह ॥ योगियाज्ञवल्क्यः—सव्याहृतिं सप्रणवां गायत्रीं शिरसा सह । त्रिः पठेदायतप्राणः प्राणायामः स उच्यते ॥ अगस्त्यसंहितायाम्—प्राणायामैर्विना यद्यत्कृतं कर्म निरर्थकम् । अतो यत्नेन कर्तव्यः प्राणायामः शुभार्थिना ॥ देवीपुराणे—श्रुतिस्मृत्यादि कर्मादौ सगर्भः प्राणसंयमः । अगर्भो ध्यानमात्रं तु स चामन्त्रः कीर्तितः ॥

१७४. 'प्राणायामसङ्ख्या.' प्रायश्चित्ततत्त्वश्रवणात्—द्वौ द्वौ प्रा-[illegible]तु मध्याह्ने त्रिभिः सन्ध्यासुरार्चने । भोजनादौ भोजनान्ते प्राणाया-[illegible]स्तु षोडश ॥

१७५. 'प्राणायामप्रकाराः.' योगियाज्ञवल्क्यः—नासापुटेना-ऽऽपोऽव बाह्यमाकृष्य तेनैव शनैः समस्तम् । नाडीषु सर्वासु च पूरयेद्यः [illegible]को' नाम महान्निरोधः ॥ न रेचकं नैव तु पूरकं वा नासाग्रभागे [illegible]व वायुम् । सुनिश्चलं धारयति क्रमेण 'कुम्भाख्य' मेतं प्रवदन्ति [illegible]दर्शि[illegible] ॥ निःसार्य नासाविवरादशेषं प्राणं बहिःशून्य इवानिलेन । निरु-[illegible]स्तिष्ठति चोर्ध्ववायुः स 'रेचको' नाम महान्निरोधः ॥ नासिका-[illegible]उच्छ्वासो ध्मातः 'पूरक' उच्यते । 'कुम्भो' निश्चलनिःश्वासो रि-[illegible]नस्तु 'रेचकः' ॥ न प्राणेनाप्यपानेन वेगाद्वायुं समुत्सृजेत् । येन [illegible] करस्थांश्च निःश्वासो नैव चालयेत् ॥ शनैर्नासापुटाद्वायुमुत्सृजेन्न [illegible]गतः ॥ 'काम्यः'—अङ्गिराः—दह्यमानोऽनुतापेन कृत्वा पा-

पानि मानवः । शोचमानस्त्वहोरात्रं प्राणायामैर्विशुद्धयति ॥ पीडये
क्षिणां नाडीमङ्गुष्ठेन तथोत्तराम् । कनिष्ठिकानामिकाभ्यां मध्यमां तं
त्यजेत् ॥ नीलोत्पलदलश्यामं नाभिमध्ये प्रतिष्ठितम् । चतुर्भुजं महात्म
पूरके चिन्तयेद्धरिम् ॥ शौनकः—प्राणानायम्य विधिवद्वाग्यतः सं
न्द्रियः । अथ सन्ध्यामुपासिष्य इति सङ्कल्प्य मार्जयेत् ॥ स एव
नासिकामङ्गुलीभिस्तु तर्जनीमध्यमाहते । सव्येन तु समाकृष्य दक्षि
विसर्जयेत् ॥ प्रणवं व्याहृतीः सप्त गायत्रीं शिरसा सह । त्रिः पठे
तप्राणः प्राणायामः स उच्यते ॥ कात्यायनः—दक्षिणे रेचये
वामेनापूरितोदरम् । कुम्भकेन जपं कुर्यात्प्राणायामो भवेदिति ॥ प्रयो
पारिजाते—पञ्चाङ्गुलीभिर्नासाग्रं पीडयेत्प्रणवेन वै । मुद्रेयं सर्वपा
वानप्रस्थगृहस्थयोः ॥ कनिष्ठानामिकाङ्गुष्ठैर्यतेश्च ब्रह्मचारिणः ॥ न
देवः—बाह्यवायोरन्तःप्रवेशनं 'पूरकः' । प्रवेशितस्य धारणं 'कुम्भक
धृतस्य बहिर्निःसारणं 'रेचकः' ॥ यथा—पूरणं दक्षया नाड्या कु
हृदयस्थया । रेचनं वामया कुर्यात्प्राणायामस्य लक्षणम् ॥ रेचकः पू
श्चैव प्राणायामोऽथ कुम्भकः । प्रोच्यते सर्वशास्त्रेषु योगिभिर्यतमानसै
रेचकोऽजस्रनिःश्वासः पूरकस्तन्निरोधनम् । साम्येन संस्थितिर्या सा
म्भकः परिगीयते ॥ विरेच्य पवनं पूर्वं संकोच्य गुदमण्डलम् । पूरि
विधानेन स्वशक्त्या कुम्भके स्थितिः ॥ कुम्भके तु हृदि स्थाने ध्या
कमलासनम् । ब्रह्माणं रक्तगौराभं चतुर्वक्त्रं पितामहम् ॥ रेचके
ध्यायेज्जलाधस्थं महेश्वरम् । शुद्धस्फटिकसंकाशं निर्मलं पापनाशनम्
पूरके विष्णुसायुज्यं कुम्भके ब्रह्मणोन्तिकम् । रेचकेन तृतीयं तु प्र
यादैश्वरं पदम् ॥ एतद्धि योगिनामुक्तं प्राणायामस्य लक्षणम् । ओं
व्याहरन् विप्रो यथाविधि समाहितः ॥ प्राणायामैस्त्रिभिः पूतस्तत्क्षणाज्ज
लतेऽग्निवत् । यथा पर्वतधातूनां दोषान् हरति पावकः ॥ एवमन्तर्गतं
प्राणायामेन दह्यते ॥

१७६. 'मार्जनम्' विश्वामित्रकल्पे—भूमौ शिरसि चाका
काशे भुवि मण्डले । मण्डले च तथाकाशे एवं च नवधा क्षिपेत् ।
थत्रयमाकाशे ववरत्रयं मस्तके । नकाराणां त्रयं भूमौ नान्यथा
भवेत् ॥ एवमापोहिष्ठेति तृचेन मार्जनं कुर्यात् ॥ योगियाज्ञवल्क्य
अर्धर्चया क्षिपेदूर्ध्वमर्धर्चया क्षिपेदधः । अधोभागे विसृष्टाभिरसुरा
संक्षयम् ॥ सर्वतीर्थाभिषेकं च ऊर्ध्वसंमार्जनाद्भवेत् । सिन्धुद्वीपं
गायत्रं छन्द एव हि ॥ आपस्तु दैवतं प्रोक्तं विनियोगश्च मार्जने

मार्जनं कर्म आह्रिकानामुदाहृतम् ॥ छन्दोगपरिशिष्टे—रक्षार्थं वारिणात्मानं परिक्षिप्य समन्ततः । शिरसो मार्जनं कुर्यात्कुशैः सोदकबिन्दुभिः ॥

१७७. 'अघमर्षणं तदेव पापपुरुषनिरसनम्.' हरिहरभाष्ये—सुमित्रिया न आप इति यजुषा । आपो जलमञ्जलिना करद्वयपुटेनादाय ॥ दुर्मित्रियास्तस्मै सन्त्विति यजुषा द्वेष्यं शत्रुं प्रति निषिञ्चेत् ॥ नागदेवः—जुम्बकायेति मन्त्रेण विदध्यादघमर्षणम् । जपेद्द्वादशवारं तु महापापापनुत्तये ॥ हारीतः—जुम्बका नाम गायत्री वेदे वाजसनेयके । अन्तर्जले सकृज्जप्ता ब्रह्महत्यां व्यपोहति ॥ शौनकः—उद्धृत्य दक्षिणे हस्ते जलं गोकर्णवत्कृते । निःश्वासं नासिकाग्रे तु पाप्मानं पुरुषं स्मरेत् ॥ ऋतञ्चेति त्र्यृचं वापि द्रुपदां वा जपेदृचम् । दक्षनासापुटेनैव पाप्मानमपसारयेत् । तज्जलं नावलोक्याथ वामभागे क्षितौ क्षिपेत् ॥ कात्यायनः—करेणोद्धृत्य सलिलं घ्राणमासज्य तत्र च । जपेदनियताः सर्वास्त्रिः सकृद्वाघमर्षणम् ॥ स्मृत्यन्तरे—तत्संयोगिपदद्वन्द्वमङ्गप्रत्यङ्गपातकम् । उपपातकरोमाणं रक्तश्मश्रुविलोचनम् ॥ खड्गचर्मधरं कृष्णं कुक्षौ पापं विचिन्तयेदिति ॥

१७८. 'द्रुपदागायत्री'. बृहस्पतिः—द्रुपदानाम यो मन्त्रो वेदे वाजसनेयके । अन्तर्जले त्रिरावर्त्य सर्वपापैः प्रमुच्यते ॥ योगियाज्ञवल्क्यः—द्रुपदानाम सा देवी यजुर्वेदे प्रतिष्ठिता । अन्तर्जले त्रिरावर्त्य मुच्यते ब्रह्महत्यया ॥ आचान्तः पुनराचामेन्मन्त्रवत्स्नानभोजने । द्रुपदां तु त्रिरावर्त्य तथा चैवाघमर्षणम् ॥ सोपांशुं प्रणवं वापि घ्राता ह्यापो विसर्जनमात् ॥ तथा—कोकिलराजपुत्रस्तु द्रुपदाया ऋषिः स्मृतः । अनुष्टुप् च भवेच्छन्द आपश्चैव तु दैवतम् ॥

१७९. 'अर्घ्यम्'. आश्वलायनः—ततस्तिष्ठन् जलं प्रगृह्य प्राङ्मुखो-[...]णाञ्जलिना स्मरेत् । स्थानादौ तु स्थितं तेजः स्फाटिकं ज्योतिषा समम् ॥ [...]र्थं तच्च सम्प्राप्तं दक्षिणेन पथाञ्जलीन् । व्याहृत्यादि जपेन्मन्त्रं स्मृत्वैवं [...]तो रवेः ॥ मन्देहान् युध्यतः क्रूरान्निक्षिपेत्तेष्वथाञ्जलीन् । षोडशाक्षर[...]ण पुनराकृष्य सत्वरः ॥ पुनर्जलं गृहीत्वैवं तेजोमन्त्रं च संस्मरन् । [...]द्वाममार्गेण स्मृत्वा संस्थाप्य चात्मनि ॥ प्रदक्षिणं समावर्त्य जलं गृ[...]मेत्ततः ॥ शौनकः—ईषन्नम्रः प्रभाते तु मध्याह्ने ऋजुसंस्थितः । [...]ऽर्घ्यं प्रक्षिपेद्देव्या सायं तूपविशन्भुवि ॥ व्यासः—कराभ्यां तोय[...]थ गायत्र्या चाभिमन्त्रितम् । आदित्याभिमुखस्तिष्ठंस्त्रिरूर्ध्वं सन्ध्ययोः

(१) यजुर्वेदे पञ्चविंशाध्याये 'विधृतिन्नाभ्या' इति यो नवमो मन्त्रः सा जुम्बकगायत्री ज्ञेया ॥

क्षिपेत् ॥ सकृदेव तु मध्याह्ने क्षेपणीयं द्विजातिभिः ॥ अन्यच्च—प्रा मध्याह्नयोः सन्ध्यां तिष्ठन्नेव समापयेत् । उपविश्य तु सायाह्ने जले न निक्षिपेत् ॥ एकं वाहननाशाय द्वितीयं शस्त्रनाशनम् । असुराणां व र्थाय तृतीयार्घ्यं विदुर्बुधाः ॥

१८०. 'अर्घ्यफलम्.' सङ्ग्रहे—मुक्तहस्तेन दातव्यं मुद्रां तत्र कारयेत् । तर्जन्यङ्गुष्ठयोगे तु राक्षसी मुद्रिका स्मृता ॥ राक्षसी मुद्रिका चेत्तत्तोयं रुधिरं भवेत् । जलेष्वर्घ्यं प्रदातव्यं जलाभावे शुचिस्थले ॥ म्प्रोक्ष्य वारिणा सम्यक् ततोऽर्घ्यं तु प्रदापयेत् । गायत्रीं शिरसा ही महाव्याहृतिपूर्वकाम् ॥ प्रणवाद्यां जपंस्तिष्ठन् क्षिपेद्वा अञ्जलित्रयम् तेन वज्रोदकेनाशु मन्देहा नाम राक्षसाः । सूर्यारयः प्रलीयन्ते शैला ज्रहता इव । काललोपो न कर्तव्यो द्विजेन स्वहितेप्सुना ॥ अर्धोदया समये तस्माद्वज्रोदकं क्षिपेत् । द्वौ पादौ तु समौ कृत्वा पूरयेदुदक लीन् ॥ गोशृङ्गमात्रमुत्क्रम्य जलमध्ये जलं क्षिपेत् । प्रायश्चित्तार्थमा मुच्यते दैत्यहत्यया ॥ हस्ताभ्यां स्वस्तिकं कृत्वा प्रातस्तिष्ठेद्दिवाकरम् मध्याह्ने तु ऋजू बाहू सायं मुकुलितौ करौ ॥ नागदेवः—यदा माध्याह्नसन्ध्यां करोति तदा गायत्र्यार्घ्यं दद्यात् ॥

१८१. 'जलाभावेऽर्घ्यविचारः.' अग्निस्मृतौ—जलाभावे रपि । मार्गे बन्धने त्वशुचावपि । उभयोः सन्ध्ययोः काले रजसा वार्घ्यमुत्

१८२. 'उपस्थानम्.' शौनकः—सायंप्रातरुपस्थानं कुर्यान्मन्त्रैर्य क्रमम् ॥ बृहत्पाराशरः—उदुत्यं चित्रंदेवानामुपस्थाने नियोजयेत् योगियाज्ञवल्क्यः—गायत्र्यास्तु जपं कृत्वा पूर्वं चैव यथाविधि । स्थानं स्वकैर्मन्त्रैरादित्यस्य तु कारयेत् ॥ उदुत्यं चित्रंदेवानामुद्वयन्त स्परि । तच्चक्षुर्देव इति च एकचक्रेति वैधि च ॥ उदगादित्ययं मन्त्र अ कृष्णेनेति वै ऋचा । तृप्तात्मा सम्प्रयुञ्जीत शक्त्यान्यानि जपेत्सदा ॥ न्ध्याद्वयेऽप्युपस्थानमेवमाहुर्मनीषिणः । मध्याह्ने उदये चैव विभ्राडा च्छया भवेत् ॥ तदसंयुक्तपार्ष्णिर्वा एकपादो द्विपादपि । जपेत्कृताञ्ज र्वाऽपि ऊर्ध्वबाहुरथापि वा ॥ यत्र स्यात्कृच्छ्रभूयस्त्वं श्रेयसोऽपि म षिणः । भूयस्त्वं ब्रुवते तत्र कृच्छ्राच्छ्रेयो ह्यवाप्यते ॥ व्यासः—उ जातवेदेति ऋषिः प्रस्कण्व उच्यते । छन्दो गायत्रमेवास्य सूर्यो दैव च ॥ अग्निष्टोम उपस्थाने विनियोगः प्रकीर्तितः । चित्रंदेवेति च ऋषिः कौत्स उदाहृतः ॥ त्रिष्टुप् छन्दो दैवतं च सूर्योऽस्य परिकीर्ति

१८३. 'सन्ध्यादिमुद्राः.' तन्त्रसारे—योजनात्सर्वदेवानां

ज्ञानार्णवे – वामहस्तकृता मुष्टिर्दक्षहस्तस्य पार्वति ॥ कलशाख्या भवेन्मुद्रा सर्वपापहरा शुभा ॥"
१८४ अंकुशमुद्रा- ज्ञानार्णवे –" दक्षमुष्टिं विधायाथ, तर्जन्यंकुशरूपिणी ॥ अंकुशाख्या महामुद्रा त्रैलोक्याऽऽकर्षणक्षमा ॥"



त्पापसंहृतेः । तस्मान्मुद्रेति सा ख्याता सर्वकामार्थसाधिनी ॥ सन्ध्यादि-नित्यकर्मणि मुद्राः—मुद्राप्रकाशे—'कलशाऽथवा कुम्भमुद्रा'—दक्षाङ्गुष्ठं पुराङ्गुष्ठे ( वामाङ्गुष्ठे ) क्षिप्त्वा हस्तद्वयेन च । सावकाशां ( मध्यशून्यां ) मुष्टिकां च कुर्यात्सा कुम्भमुद्रिका ॥ 'कूर्ममुद्रा'—वामहस्ते च तर्जन्यां दक्षिणस्य कनिष्ठिका । तथा दक्षिणतर्जन्यां वामाङ्गुष्ठं नियोजयेत् ॥ उन्नतं दक्षिणाङ्गुष्ठं वामस्य मध्यमादिकाः । अङ्गुलीर्योजयेत्पृष्ठे दक्षिणस्य करस्य च ॥ वामस्य पितृतीर्थेन मध्यमानामिके तथा । अधोमुखे च ते कुर्याद्दक्षिणस्य करस्य च ॥ कूर्मपृष्ठसमं कुर्याद्दक्षपाणिं च सर्वतः । कूर्ममुद्रेयमाख्याता देवताध्यानकर्मणि ॥ 'अस्त्रमुद्रा'—दक्षस्य तर्जनीमध्ये सव्ये करतले क्षिपेत् । अभिघातेन शब्दः स्यादस्त्रमुद्रा समीरिता ॥ 'अङ्गन्यासमुद्राः'—हृन्नेत्रं त्रिभिराख्यातं द्वाभ्यामस्त्रशिरो मतम् । अङ्गुष्ठेन शिखा ज्ञेया दिग्भिः कवचमीरितम् ॥ 'मत्स्यमुद्रा'—दक्षपाणेः पृष्ठदेशे वामपाणितलं न्यसेत् । अङ्गुष्ठौ चालयेत्सम्यङ्मुद्रेयं मत्स्यरूपिणी ॥ 'धेनुमुद्रा'—दक्षानामासमायुक्ता वामहस्तकनिष्ठिका । वामानामासमायुक्ता दक्षपाणिकनिष्ठिका ॥ दक्षस्य मध्यमाक्रान्ता वामहस्तस्य तर्जनी । वाममध्यमयाक्रान्ता दक्षहस्तस्य तर्जनी ॥ संयुक्तौ कारयेद्विद्वानङ्गुष्ठावुभयोरपि । धेनुमुद्रा निगदिता गोपिता साधकोत्तमैः ॥ परिवृत्तकरौ पश्चात्तर्जनीमध्यमे युते । कनिष्ठानामिकाङ्गुष्ठं परस्परयुतं कुरु । धेनुमुद्रेयमाख्याता अमृतीकरणं भवेत् ॥ 'आवाहनमुद्रा'—हस्ताभ्यामञ्जलिं बध्वानामिकामूलपर्वणोः । अङ्गुष्ठौ निक्षिपेत्सेयं मुद्रा त्वावाहनी स्मृता ॥ 'गन्धादिमुद्राः'—मध्यमानामिकाङ्गुष्ठैरङ्गुल्यग्रेण पार्वति । दद्याच्च विमलं 'गन्धं' मूलमन्त्रेण साधकः । अङ्गुष्ठतर्जनीभ्यां च 'पुष्पं' चक्रे निवेदयेत् । मध्यमानामिकाभ्यां तु मध्यपर्वणि देशिकः । अङ्गुष्ठाग्रेण दैवेशि ॥ 'धूपं' निवेदयेत् । उत्तोलनं त्रिधा कृत्वा गायत्र्या मूलयोगतः । ...वाख्यमुद्रया देवीं 'नैवेद्यं' विनिवेदयेत् । मूलेनाचमनं दद्यात्ताम्बूलं ...मुद्रया । 'पुष्पं' समर्पयेद्देवीमुद्रया ज्ञानसंज्ञया । अङ्गुष्ठतर्जनीयोगा-...ज्ञानमुद्रा' प्रकीर्तिता ॥ 'प्राणादिमुद्राः'—कनिष्ठानामिके अङ्गुष्ठेन ...संदिति–१–'प्राणमुद्रा' ॥ अनामामध्यमे अङ्गुष्ठेन स्पृशेदिति–२–...नमुद्रा' ॥ मध्यमातर्जन्यावङ्गुष्ठेन स्पृशेदिति–३–'व्यानमुद्रा' ॥ ...मध्यमानामा अङ्गुष्ठेन स्पृशेदिति–४–'उदानमुद्रा' ॥ तर्जन्यादङ्गु-...ष्ठयमङ्गुष्ठेन स्पृशेदिति–५–'समानमुद्रा' ॥ 'ग्रासमुद्रा'—अ-...कुटिलीभूता विरलाग्राः परस्परम् । ग्रासमुद्रा समाख्याता सव्यपाणौ

नियोजिता ॥ 'शङ्खमुद्रा'—वामाङ्गुष्ठं तु सङ्गृह्य दक्षिणेन तु मुष्टिना कृत्वोत्तानं ततो मुष्टिं अङ्गुष्ठं तु प्रसारयेत् । वामाङ्गुल्यस्तथाश्लिष्टाः संयुक्ताः सुप्रसारिताः । दक्षिणाङ्गुष्ठसंस्पृष्टा ज्ञेयैषा 'शङ्खमुद्रिका' ॥ 'घण्टाऽथ गरुडमुद्रा'—मिथस्तर्जनिके श्लिष्टे श्लिष्टावङ्गुष्ठकौ तथा । मध्यमाना मिके तु द्वौ पक्षाविव विचालयेत् । एषा 'गरुडमुद्रा' स्याद्विष्णोः सन्तोषवर्धिनी ॥ 'योनिमुद्रा'—मध्यमे कुटिले कृत्वा तर्जन्युपरि संस्थिते अनामिके मध्यगते तथैव हि कनिष्ठिके । सर्वा एकत्र संयोज्या अङ्गुष्ठ परिपीडिताः । एषा तु प्रथमा मुद्रा 'योनिमुद्रेति' संज्ञिता ॥ परि करौ सम्यक् तर्जनीवदने समे । मध्यमे कुरु तन्मध्ये योजयेत्तदनन्तरम् अन्योन्यानामिके देवि कनिष्ठे च तथाविधे । अङ्गुष्ठाभ्यां योजिताभ्यां न्याकारं तु कारयेत् ॥ योनिमुद्रेयमाख्याता परा त्रैलोक्यमातृका ॥ 'प्रार्थनामुद्रा'—प्रसृताङ्गुलिका हस्तौ मिथः श्लिष्टौ च सन्मुखौ । कुर्यात् हृदये सेयं 'मुद्रा प्रार्थन' संज्ञिका ॥ हेमाद्रौ—संमुखीकृत्य हस्तौ किञ्चित्सङ्कुचिताङ्गुली । मुकुली तु समाख्याता पङ्कजा प्रसृतैव सा ॥ वोक्ता मुकुली या च प्रादेशी निःसृताङ्गुली । व्याकोशमुद्रा मुकुला मुद्राः प्रदर्शयेत् ॥ अङ्गुष्ठौ कुञ्चितान्तौ तु स्वकीयाङ्गुलिचेष्टितौ । वाभिहतौ हस्तौ योजयित्वा तु निष्ठुरा । तर्जन्यौ कुञ्चिते कृत्वा तथैव कनीयसी । अधोमुखी दृष्टनखा स्थिता मध्ये करस्य तु । चतस्रश्चोल पृष्ठे अङ्गुष्ठावेकतः कुरु । नालम्व्यावस्थितौ द्वौ तु 'योगमुद्रा' प्रकीर्तिता

१८४. 'गायत्रीवर्णदेवताः.' योगियाज्ञवल्क्यः—अक्षराणां दैवत्यं सम्प्रवक्ष्याम्यतः परम् । आग्नेयं ( तत् ) प्रथमं ज्ञेयं वायव्यं ( स ) द्वितीयकम् ॥ तृतीयं ( वि ) सूर्यदैवत्यं चतुर्थं ( तु ) वैद्युतं पञ्चमं ( व ) यमदैवत्यं वारुणं ( रे ) षष्ठमुच्यते ॥ बार्हस्पत्यं सप्तमं ( ण्य् ) पार्जन्यमष्टमं ( यम् ) विदुः । ऐन्द्रं तु नवमं ( भ ) ज्ञेयं गान्धर्वं दशमं ( र्गः ) तथा ॥ पौष्णमेकादशं ( दे ) प्रोक्तं मैत्रावरुणं द्वादशं ( व ) त्वाष्ट्रं त्रयोदशं ( स्य ) ज्ञेयं वासवं तु चतुर्दशम् ॥ ( धी ) मारुतं पञ्चदशकं ( म ) सौम्यं षोडशकं ( हि ) स्मृतम् । सप्त ( धि ) त्वाङ्गिरसं वैश्वदेवमतः परम् ॥ ( यः ) आश्विनं चैकोन ( यः ) प्राजापत्यं तु विंशकम् । ( नः ) सर्वदेवमयं प्रोक्तमेकविंश मतः परम् ॥ रौद्रं द्वाविंशकं ( चो ) प्रोक्तं त्रयोविंशं तु ( द ) कम् । वैष्णवं तु ( यात् ) चतुर्विंशमेता ह्यक्षरदेवताः ॥ जपकाले स्मृत्य तासां सायुज्यतां व्रजेत् । गायत्री वेदजननी गायत्री पापनाशिनी

+ न१८७ "ब्रह्मचारी गृहिता भिक्षुः जप्तसहस्रं जपेत्। वानप्रस्थो यतिश्चैव सहस्राद्धिकं" -(यति धर्मसङ्ग्रहः)



गायत्र्यास्तु परं नास्ति दिवि चेह च पावनम् । हस्तत्राणप्रदा देवी पततां नरकार्णवे ॥ तस्मात्तामभ्यसेन्नित्यं ब्राह्मणोऽनुदये शुचिः । गायत्रीनिरतं हव्यकव्येषु विनियोजयेत् ॥ तस्मिन्न लिप्यते पापमब्बिन्दुरिव पुष्करे ॥

१८५. 'गायत्रीशब्दस्यार्थः.' नागदेवः—गायन्तं त्रायते यस्माद्गायत्री तेन सोच्यते ॥

१८६. 'जपनियमाः.' याज्ञवल्क्यः—ध्यायेत्तु मनसा मन्त्रं जिह्वोष्ठौ न विचालयेत् । न कम्पयेच्छिरो ग्रीवां दन्तान्नैव प्रकाशयेत् ॥ यक्षरक्षःपिशाचाश्च सिद्धविद्याधरा गणाः । यस्मात्प्रभावं गृह्णन्ति तस्माद्गुह्यं तु कारयेत् ॥ धर्मप्रवृत्तौ—प्रातर्नाभौ करं कृत्वा मध्याह्ने हृदि संस्थितम् । सायं जपति नासाग्रे जपस्तु त्रिविधः स्मृतः ॥ प्रातर्मध्याह्नयोस्तिष्ठन् गायत्रीजपमारभेत् । ऊर्ध्वजानुस्तु सायाह्ने ध्यानालोकनतत्परः ॥ कृत्वोत्तानौ करौ प्रातः सायं न्युब्जौ करौ तथा । मध्याह्ने हृदयस्थौ तु कृत्वा जपमुदीरयेत् ॥ व्यासः—धृत्वा पवित्रं सम्प्रोक्ष्य जपस्थानं कुशोदकैः । आधारादीन् नमस्कृत्य कुशाग्रैरासनं ततः ॥ बद्ध्वा पद्मासनं वापि स्वस्तिकं वा यथासुखम् । ॐ भुर्भुवः स्वरोमिति जपित्वासनमुपविशेत् ॥ पटले—अप्रोक्षितजपस्थानाच्छक्रो हरति यज्जपम् । (तस्माज्जपान्ते तत्प्रोक्ष्य ललाटे तिलकं क्रियात्) ॥ वृद्धमनुः—वस्त्रेणाच्छाद्य तु करं दक्षिणं यः सदा जपेत् । तस्य स्यात्सफलं जाप्यं तद्धीनमफलं स्मृतम् ॥ अत एव जपार्थं सा 'गोमुखी' ध्रियते जनैः ॥

१८७. 'जपसङ्ख्या.' स्मृत्यन्तरे—सायं प्रातश्च मध्याह्ने सावित्रीं वा यतो जपेत् । सहस्रपरमां देवीं शतमध्यां दशावराम् ॥ मनुः—विधियज्ञाज्जपयज्ञो विशिष्टो दशभिर्गुणैः । उपांशुः स्याच्छतगुणः साहस्रो मानसः स्मृतः ॥ व्यासः—अष्टोत्तरशतं नित्यमष्टाविंशतिरेव वा । विधिना दशकं वापि त्रिकालेषु जपेद्बुधः । तत उद्वास्य गायत्रीमुत्तमेत्यनुवाकतः ॥

१८८. 'जपफलम्.' नृसिंहपुराणे—त्रिविधो जपयज्ञः स्यात्तस्य भेदं निबोधत । वाचिकश्च उपांशुश्च मानसस्त्रिविधः स्मृतः ॥ त्रयाणां जपयज्ञानां श्रेयान्स्यादुत्तरोत्तरः ॥ 'एतेषां लक्षणान्याह.' विश्वामित्रः—यदुच्चनीचस्वरितैः शब्दैः स्पष्टपदाक्षरैः । मन्त्रमुच्चारयेद्वाचा 'वाचिको'ऽयं जपः स्मृतः ॥ शनैरुच्चारयेन्मन्त्रमीषदोष्ठौ च चालयेत् । अपरैर्न श्रुतः किञ्चित् 'उपांशु' र्जपः स्मृतः । धिया यदक्षरश्रेण्या वर्णाद्वर्णं पदात्पदम् । शब्दार्थचिन्तनं भूप कथ्यते 'मानसो' जपः ॥

१८९. 'जपलक्षणम्.' स्मृत्यन्तरे—सम्पुटैकषडोङ्कारा गायत्री त्रि-

विधा मता । तत्रैकप्रणवा ग्राह्या गृहस्थैर्ब्रह्मचारिभिः ॥ गृहस्थो ब्रह्मचारी च प्रणवाद्यामिमां जपेत् । अन्ते यः प्रणवं कुर्यान्नासौ वृद्धिमवाप्नुयात् ॥ सम्पुटां च षडोङ्कारां गायत्रीं च जपेद्यतिः ॥ गायत्रीकल्पे—पर्वभिस्तु जपेद्देवीं माला काम्यजपे स्मृता । गायत्री वेदमूला स्याद्वेदः पर्वसु गीयते ॥ आरभ्यानामिकामध्यं पर्वाण्युक्तान्यनुक्रमात् । तर्जनीमूलपर्यन्तं जपेद्दशसु पर्वसु ॥ मध्यमाङ्गुलिमूले तु यत्पर्वद्वितयं भवेत् । तं वै 'मेरुं' विजानीयाज्जपे तं नातिलङ्घयेत् ॥

१९०. 'गायत्रीजपविधिः.' बौधायनः—दर्भेष्वासीनो दर्भान् धारयमाणः प्राङ्मुखः सावित्रीमावर्तयेत् ॥ शङ्खः—कुशमयासनासीनः कुशोत्तरीयवान् कुशपवित्रपाणिः प्राङ्मुखः सूर्याभिमुखो वाक्षमालामादाय देवताध्यायी जपं कुर्यात् ॥ तत्र ॐभूर्भुवः स्वरित्यनेन त्रिवारं हृदयशिरःशिखास्थानानि मार्जयेत् ॥ योगियाज्ञवल्क्यः—सविता देवता ह्यस्या मुखमग्निस्तदित्यृचः । विश्वामित्र ऋषिश्छन्दो गायत्रं च विधीयते॥ कर्मेन्द्रियाणि पञ्चैव पञ्चबुद्धीन्द्रियाणि च । पञ्च पञ्चेन्द्रियार्थाश्च भूतानां चैव पञ्चकम् ॥ मनोबुद्धिस्तथात्मा च अव्यक्तं च यदुत्तमम् । चतुर्विंशत्यथैतानि गायत्र्या अक्षराणि तु ॥ प्रणवं पुरुषं विद्धि सर्वगं पञ्चविंशकम् । ॐकारः पूर्वमुच्चार्यो भूर्भुवःस्वस्तथैव च ॥ गायत्री प्रणवश्चान्ते जप एवमुदाहृतः । सप्तभिः पावयेद्देहं दशभिः प्रापयेद्दिवम् ॥ विंशत्यावर्तिता देवी नयते चेश्वरालयम् । अष्टोत्तरशतं जप्ता तारयेज्जन्मसागरात् ॥ तीर्णं न पश्यति प्रायो जन्ममृत्युं हि दारुणम् । दशभिर्जन्मजनितं शतेन च पुरा कृतम् ॥ त्रिजन्मजं सहस्रेण गायत्री हन्ति किल्बिषम् ॥

१९१. 'गायत्रीजपफलम्.' छन्दोगपरिशिष्टे—सर्वेषामेव वेदानां गुह्योपनिषदां तथा । सारभूता तु गायत्री निर्गता ब्रह्मणो मुखात् ॥ बृहद्यमः—न तथा वेदजपतः पापं निर्दहति द्विजः । यथा सावित्रीजपतः सर्वपापैः प्रमुच्यते ॥ कूर्मपुराणे—गायत्रीं चैव वेदांश्च तुलया समतोलयत् । वेदा एकत्र साङ्गास्तु गायत्री चैकतः स्मृता ॥ योगियाज्ञवल्क्यः—वेदाः साङ्गास्तु चत्वारोऽधीताः सर्वेऽथ वाङ्मयाः । गायत्रीं यो न जानाति वृथा तस्य परिश्रमः ॥ गायत्रीमात्रसन्तुष्टः श्रेयान् सुयन्त्रितः । न यन्त्रितस्त्रिवेदी च सर्वाशी सर्वविक्रयी ॥

१९२. 'सप्तमहाव्याहृतयः.' योगियाज्ञवल्क्यः—व्याहृतीनां सर्वासामार्षं चैव प्रजापतिः । सप्त छन्दांसि प्रोक्तानि छादनानि विशेषतः ॥ गायत्र्युष्णिगनुष्टुप् च जगती त्रिष्टुबेव च । पङ्क्तिश्च १८

सप्त छन्दांसि तानि वै ॥ अग्निर्वायुस्तथादित्यो बृहस्पतिरपांपतिः । इन्द्रश्च विश्वेदेवाश्च देवताः समुदाहृताः ॥ अनाम्नातेषु नित्येषु प्रायश्चित्तेषु सर्वदा । प्राणायामप्रयोगे च विनियोग उदाहृतः ॥

१९३. 'अभिवादनम्.' ह्रोलिर्भाष्ये—यस्य देशो न विज्ञातो नाम गोत्रं त्रिपूरुषम् । कन्यादाने पितृश्राद्धे नमस्कारे च वर्जयेत् ॥ नागदेवः—पाखण्डं पतितं व्रात्यं महापातकिनं शठम् । सोपानत्कं कृतघ्नं च नाभिवादेत्कदाचन ॥ धावन्तं च प्रमत्तं च शूद्राचारकरं तथा । भुञ्जानमप्यनाचान्तं नास्तिकं नाभिवादयेत् ॥ जपन्तं च जलस्थं च समित्पुष्पकुशानलान् । उदपात्रं तथा भैक्ष्यं वहन्तं नाभिवादयेत् ॥ जमदग्निः—देवताप्रतिमां दृष्ट्वा यतिं दृष्ट्वा त्रिदण्डिनम् । नमस्कारं न कुर्याच्चेत्प्रायश्चित्ती भवेद्द्विजः ॥ उक्तं च—दूरस्थं जलमध्यस्थं धावन्तं धनगर्वितम् । स्नातं मूढं चाशुचिकं नमस्कारांस्तु वर्जयेत् ॥ नमस्कारं विना विप्र आशीर्वादं प्रयच्छति । विप्रो भवति चाण्डालो गृह्णानो नरकं व्रजेत् ॥ सभायां यज्ञशालायां देवतायतनेषु च । प्रत्येकं तु नमस्कारो हन्ति पुण्यं पुरा कृतम् ॥ यदि स्नातो भवेद्विप्रो मस्तके तिलकं विना । नमस्कारं न कुर्यात्तमिति प्रोचुर्मनीषिणः ॥ आह्निककारिकासु—लौकिकं वैदिकं कर्म तथाध्यात्मिकमादितः । भो शब्दं कीर्तयेदन्ते स्वस्य नामाभिवादने ॥ सभासु चैव सर्वासु यज्ञे राजगृहेषु च । नमस्कारं प्रकुर्वीत ब्राह्मणं न पृथङ्नमेत् ॥ समित्पुष्पकुशान्यम्बुमृत्तिकाक्षतपाणिनः । जपं होमं च कुर्वाणा नाभिवाद्यास्तथा द्विजाः ॥ धावन्तं च प्रमत्तं वा मूत्रोच्चारकरं तथा ॥ योगिनं च तपःसक्तं ध्यानस्थं नाभिवादयेत् ॥

१९४. 'सन्ध्यामन्त्रक्रमः.' योगियाज्ञवल्क्यः—ओंकारो व्याहृतयश्चैव गायत्री सशिरा तथा । आपोहिष्ठा ऋचस्तिस्रः सूक्तमेवाघमर्षणम् ॥ आदित्यरक्षणार्थं तु सायंप्रातर्दिनेदिने । सृष्टाः स्वयम्भुवा पूर्वं [illegible]णस्तन्मुखं स्मृतम् ॥

१९५. 'सन्ध्यास्तुतिः.' विश्वामित्रकल्पे—विप्रो वृक्षस्तस्य मूलं [सन्]ध्या वेदः शाखा धर्मकर्माभिपत्रे । तस्मान्मूलं यत्नतो रक्षणीयं छिन्ने [मूले] नैव शाखा न पत्रे ॥ ॐकारप्रौढमूलः क्रमपदसहितश्छन्दविस्तीर्ण[शाखो] ऋक्पत्रः सामपुष्पो यजुरधिकफलोऽथर्वगन्धं दधानः । यज्ञच्छा[यास]मेतो द्विजमधुपगणैः सेव्यमानः प्रभाते मध्ये सायं त्रिकालं सुचरित[चरि]तः पातु वो वेदवृक्षः ॥ स्वकाले सेविता नित्यं सन्ध्या कामदुघा भ[वेत् ।] अकाले सेविता सा च सन्ध्या वन्ध्या वधूरिव ॥

१९६. 'सन्ध्याविसर्जनम्.' स्मृतौ—स्वस्तिकाकारहस्ताभ्यां कर्णौ स्पृष्ट्वा । पश्चात्स्वस्य नामगोत्रप्रवरोच्चारपूर्वकं देवगुरुवृद्धानभिवादयेत् । धर्मसिन्धौ—सन्ध्याङ्गभूतन्यासप्राणायामादि विधेयम् । मुद्रातर्पणादि विधिः कृताकृत इति ॥

१९७. अथ 'प्रातःसन्ध्याप्रयोगः'—तत्रादौ 'भस्मनो मृदो वा मर्दनम्'—ॐ अग्निरिति भस्म । वायुरिति भस्म । जलमिति भस्म । स्थलमिति भस्म । व्योमेति भस्म । सर्वँ हवा इदं भस्म । मन एतानि चक्षूंषि भस्मानीति ॥ 'भस्मनो मृदो वा अभिमन्त्रणम्'—ॐ त्र्यम्बकं यजामहे । सुगन्धिम्पुष्टिवर्द्धनम् । उर्व्वारुकमिव बन्धनान्मृत्योर्म्मुक्षीय मामृतात् । * । १ $\frac{६०}{३}$ ॥ प्प्रसद्य भस्म्मना योनिमपश्च पृथिवीमग्ग्ने । सँ्सृज्ज्य मातृभिष्ट्वञ्ज्योतिष्म्मान्पुनरा सदः । २ $\frac{३८}{१२}$ ॥ 'भस्मनो मृदो वा धारणम्'—ॐ त्र्यायुषञ्जमदग्ग्नेः कश्यपस्य त्र्यायुषम् यद्देवेषु त्र्यायुषन्तन्नोऽअस्तु त्र्यायुषम् । ३ $\frac{६२}{३}$ ॥ (एतैर्ल्ललाटाद्यङ्गेषु भस्म धारयेत्) ॥ 'शिखाबन्धनम्.'—(अङ्गुष्ठमात्रां शि... गायत्र्या नैर्ऋत्यां बध्वा ।) चिद्रूपिणि महामाये दिव्यतेजःसमन्विते तिष्ठ देवि शिखाबन्धे तेजोवृद्धिं कुरुष्व मे) ॥ ॐ मा नस्तोके तनये मा नऽआयुषि मा नो गोषु मा नोऽअश्वेषु रिषः । मा नो वीरान्रुद्रभामिनो वधीर्हविष्मन्तः सदमित्त्वाहवामहे ॥ ४ $\frac{१६}{१६}$ ॥ 'कण्ठे रुद्राक्षमालाधारणम्' ॐ त्र्यम्बकं यजामहे० । ५ $\frac{६०}{३}$ ॥ 'आचमनम्'—ॐ केश... नमः स्वाहा । ॐ नारायणाय नमः स्वाहा । ॐ माधवाय स्वाहा—इत्याचम्य ॥ ॐ गोविन्दाय नमः—(दक्षिणकरं प्रक्ष...

---

१ यथोक्तस्नानानन्तरं श्वेतं धौतं वस्त्रं परिधायोपवस्त्रं गृहीत्वानन्तरं कुशास... कादौ वासनविधिना प्राङ्मुखो उपविश्य पश्चात्सन्ध्योपासनमारभेत् ॥ २ वाम... णहस्तेन भस्म गृहीत्वा पश्चादुदकमिश्रणानन्तरं दक्षिणहस्तेन भस्म मर्दयेत् । ३ ... पासनारम्भे 'स्मार्ताचमनं' कुर्यात् ॥

ॐ विष्णवे नमः—वामकरं प्रक्षाल्य । ॐ मधुसूदनाय नमः—( ऊर्ध्वोष्ठं प्रक्षाल्य ) । ॐ त्रिविक्रमाय नमः—अधरोष्ठप्रोक्षणम् ॥ ॐ वामनाय नमः—ॐ श्रीधराय नमः—उन्मार्जनम् ॥ ॐ हृषीकेशाय नमः—हस्तौ प्रक्षाल्य ॥ ॐ पद्मनाभाय नमः—( पादं प्रक्षाल्य ) ॥ ॐ दामोदराय नमः—( मूर्धानं प्रोक्षणम् ) ॥ ॐ सङ्कर्षणाय नमः—आस्यं प्रोक्षणम् ॥ ॐ वासुदेवाय नमः—दक्षिणनासापुटस्पर्शनम् ॥ ॐ प्रद्युम्नाय नमः—वामनासापुटस्पर्शनम् ॥ ॐ अनिरुद्धाय नमः—दक्षिणनेत्रस्पर्शनम् ॥ ॐ पुरुषोत्तमाय नमः—वामनेत्रस्पर्शनम् ॥ ॐ अधोक्षजाय नमः—दक्षिणकर्णस्पर्शनम् ॥ ॐ नारसिंहाय नमः—वामकर्णस्पर्शनम् ॥ ॐ अच्युताय नमः—नाभिस्पर्शनम् ॥ ॐ जनार्दनाय नमः—हृदयस्पर्शनम् ॥ ॐ उपेन्द्राय नमः—मस्तकस्पर्शनम् ॥ ॐ हरये नमः—दक्षिणबाहुस्पर्शनम् ॥ ॐ श्रीकृष्णाय नमः—वामबाहुस्पर्शनम् ॥ 'प्राणायामाः'—प्रणवपूर्वकद्वादशाक्षरीमहामन्त्रस्य परब्रह्मऋषिः । परमात्मादेवता । दैवीगायत्रीछन्दः । सप्तानां व्याहृतीनां विश्वामित्रजमदग्निभरद्वाजगौतमात्रिवसिष्ठकश्यपा ऋषयः । अग्निवायुसूर्यबृहस्पतिवरुणेन्द्रविश्वेदेवा देवताः । गायत्र्युष्णिगनुष्टुप्बृहतीपङ्क्तित्रिष्टुब्जगत्यश्छन्दांसि । तत्सवितुरित्यस्य विश्वामित्रऋषिः । सवितादेवता । गायत्रीछन्दः । तथा च । आपोज्योतीरित्यस्य प्रजापतिर्ऋषिः । ब्रह्माग्निवायुसूर्यादेवताः । यजुश्छन्दः । सर्वेषां प्राणायामे विनियोगः—ॐ नमो भगवतेवासुदेवाय—ॐ भूः । ॐ भुवः । ॐ स्वः । ॐ महः । ॐ जनः । ॐ तपः । ॐ सत्यम् । ॐ तत्सवितुर्वरे० ॥ ६ $\frac{३५}{३}$ ॥ ॐ आपोज्योतीरसोमृतं ब्रह्मभूर्भुवःस्वरोम् ॥ 'पवित्रधारणम्'—ॐ पवित्रेस्त्थो वैष्णव्यौ

---

[illegible] मन्त्रेणात्मनः प्रदक्षिणमुदकं क्षिपेत् । (२) ततः कनिष्ठिकाऽनामिकाभ्यां [illegible] सम्पीड्य दक्षिणेन वायुं पूरयेत् इति पूरकः ॥ ततोङ्गुष्ठेन दक्षिणनासापुटं [illegible] एवमुभयनासापुटनिरोधे सति । पुनः ॐ भूरित्यादिस्वरोमित्यन्तेनैकावृत्तिप[illegible]मकं कृत्वा । ततः कनिष्ठानामिके विमुच्य । पुनः ॐ भूरित्यादिस्वरोमित्य[illegible] पठित्वा वायुं रेचयेदिति रेचकः । (३) एतन्मन्त्रेण पवित्रधारणम् । [illegible] मृतश्चेत्तेन कुशपवित्रार्थे हेमपवित्रं धार्यम् ॥

सवितुर्वः प्प्रसवऽउत्पुनाम्म्यच्छिद्द्रेण पुवित्रेण सूर्य्यं रुश्मिभिः * * $\frac{१२}{६}$ * * तस्य ते पवित्रपते पुवित्र तस्य यत्काम्मःपुनेतच्छकेयम् ॥ ७$\frac{१}{४}$ ॥ 'हृदि पवित्र णम्'—ॐ विष्णुर्विष्णुः । ॐ वाग्वाक् । ॐ प्राणः प्राणः । ॐ क्षुश्चक्षुः । ॐ श्रोत्रं श्रोत्रम् । ॐ नाभिः । ॐ हृदयम् । ॐ कण्ठः ॐ मुखम् । ॐ शिरः । ॐ शिखा । ॐ बाहुभ्याम् यशोबलम् अपवित्रः पवित्रो वेत्यस्य वामदेव ऋषिः । मुखे विष्णुर्देवता । यत्री छन्दः । हृदि पवित्रकरणे विनियोगः—अपवित्रः पवित्रो सर्वावस्थां गतोऽपि वा । यः स्मरेत्पुण्डरीकाक्षं स बाह्याभ्यन्त शुचिः ॥ 'सङ्कल्पः'—ममोपात्तदुरितक्षयद्वारा श्रीपरमेश्वरप्रीत प्रातःसन्ध्योपासनमहं करिष्ये ॥ 'भूप्रार्थना'—पृथिवीत्यस्य मे ष्ठऋषिः । कूर्मो देवता । सुतलं छन्दः । आसने विनियोगः— थिवि त्वया धृता लोका देवि त्वं विष्णुना धृता । त्वं च धारय देवि पवित्रं कुरु चासनम् ॥ 'भूतशुद्धिः'—अपसर्पन्तु ते भूता भूता भूमिसंस्थिताः । ये भूता विघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया अपक्रामन्तु भूतानि पिशाचाः सर्वतोदिशम् । सर्वेषामविरोधेन न्ध्याकर्म समारभे ॥ (अनेन मन्त्रेण वामपादपार्ष्णिना त्रिवारं ताडयेत्) 'भैरवनमस्कारः'—तीक्ष्णदंष्ट्र महाकाय कल्पान्तदह पम । भैरवाय नमस्तुभ्यमनुज्ञां दातुमर्हसि ॥ 'मार्जनम्'—ॐ पुनातु—(शिरसि) । ॐ भुवः पुनातु—(नेत्रयोः) । ॐ स्वः नातु—(कण्ठे) । ॐ महः पुनातु—(हृदये) । ॐ जनः पुनातु (नाभ्याम्) । ॐ तपः पुनातु—(पादयोः) । ॐ सत्यं पुनातु (पुनः शिरसि) । ॐ खं ब्रह्म पुनातु—(सर्वत्र) ॥ ॐ आ

हि । ष्ठा मयो भुवः (इति मस्तके) । ॐ तानऽऊर्ज्जे द तन (इति भूमौ) । ॐ मुहेरणाय चक्षसे (इति हृदये) ८$\frac{१४}{३६}$ ॥ ॐ योवःशिवतमो रसः (इति हृदये) । ॐ स्यभाजयतेह नः (इति भूमौ) । ॐ उशतीरिव मात (इति मस्तके) ॥ ९$\frac{१५}{३६}$ ॥ ॐ तस्म्माऽअरङ्गम ... मस्तके) । ॐ यस्य क्षयाय जिन्वथ (इति हृदये) ...

यों जुन यथा च नः (इति भूमौ) ॥ १०$\frac{१६}{३६}$ ॥ (शेषमुदकं भुवि क्षिपेत्) ॥ 'व्याहृतिपूर्वकं गायत्रीषडङ्गन्यासाः'—ओङ्कारस्य ब्रह्मा ऋषिः । अग्निर्देवता । गायत्री छन्दः । प्रथमस्वरो बीजम् । पञ्चमः स्वरः शक्तिः । शिवं कीलकं विद्युद्वर्णं । न्यासे विनियोगः—ॐ अङ्गुष्ठाग्रे तु गोविन्दम् । ॐ तर्जन्यां तु महीधरम् । ॐ मध्यमायाम्—हृषीकेशम् । ॐ अनामिक्याम्—त्रिविक्रमम् । ॐ कनिष्ठिक्याम्—न्यसेद्विष्णुम् । ॐ करमध्ये तु—माधवम् । ॐ करपृष्ठे हरिं विद्यान्मणिबन्धे जनार्दनम् ॥ (एवं यः कुरुते जाप्यं तत्सर्वं चाक्षयं भवेत्) ॥ ॐ भूः—अङ्गुष्ठाभ्यां नमः । ॐ भुवः—तर्जनीभ्यां नमः । ॐ स्वः—मध्यमाभ्यां नमः । ॐ तत्सवितुर्वरेण्यम्—अनामिकाभ्यां नमः । ॐ भर्गोदेवस्य धीमहि—कनिष्ठिकाभ्यां नमः । ॐ धियो योनः प्रचोदयात्—करतलकरपृष्ठाभ्यां नमः । ॐ भूः—हृदयाय नमः । ॐ भुवः—शिरसे स्वाहा । ॐ स्वः—शिखायै वषट् । ॐ तत्सवितुर्वरेण्यम्—कवचाय हुम् । ॐ भर्गोदेवस्य धीमहि—नेत्रत्रयाय वौषट् । ॐ धियो योनः प्रचोदयात्—अस्त्राय फट् ॥ 'अथ प्रणवन्यासाः'—ॐ अकारम्—नाभौ । ॐ उकारम्—हृदये । ॐ मकारम्—मूर्ध्नि ॥ 'व्याहृतिन्यासाः'—ॐ भूः—पादयोः । ॐ भुवः—जान्वोः । ॐ [स्]वः—ऊर्वोः । ॐ महः—जठरे । ॐ जनः—कण्ठे । ॐ [त]पः—मुखे । ॐ सत्यम्—शिरसि ॥ 'अक्षरन्यासाः'—ॐ तका[र]म्—पादाङ्गुष्ठयोः । ॐ सकारम्—गुल्फयोः । ॐ विकारम्—[ज]ङ्घयोः । ॐ तुकारम्—जान्वोः । ॐ वकारम्—ऊर्वोः । ॐ [रेका]रम्—गुदे । ॐ णिकारम्—लिङ्गे । ॐ यकारम्—कट्याम् । ॐ [भ]रम्—नाभौ । ॐ गोकारम्—उदरे । ॐ देकारम्—स्तनयोः । [ॐ व]कारम्—हृदये । ॐ स्यकारम्—कण्ठे । ॐ धीकारम्—मुखे । [ॐ म]कारम्—तालुदेशे । ॐ हिकारम्—नासिकाग्रे । ॐ धिकारम्—नेत्रयोः । ॐ योकारम्—भ्रुवोर्मध्ये । ॐ द्वितीययोस्नुकारम्—[...] ॐ नकारम्—पूर्वमुखे । ॐ प्रकारम् दक्षिणमुखे । ॐ [...]रम्—[पश्चि]ममुखे । ॐ दकारम् उत्तरमुखे । ॐ याकारम् [...] । [...]यञ्जनतकारम् व्यापकं सर्वतो न्यसेत् ॥ 'शिरो[मन्त्र]ाः' ॐ आपो गुह्ये । ॐ ज्योतिश्चक्षुषि । ॐ रसो वक्रे । [ॐ अ]मृतं जानुनि । ॐ ब्रह्म हृदये । ॐ भूः पादयोः । ॐ

भुवः नाभौ । ॐ स्वः ललाटे । ॐकारम् मूर्ध्नि ॥ 'अथ गा-यत्र्यावाहनम्' गायत्रीं त्र्यक्षरां बालां साक्षसूत्रकमण्डलुम् । रक्त-वस्त्रां चतुर्हस्तां हंसवाहनसंस्थिताम् । ऋग्वेदस्य कृतोत्सङ्गां सर्वदेव-नमस्कृताम् । ब्रह्माणीं ब्रह्मदैवत्यां ब्रह्मलोकनिवासिनीम् । आ-वाहयाम्यहं देवीमायान्तीं सूर्यमण्डलात् । आगच्छ वरदे देवि त्र्यक्षरे ब्रह्मवादिनि । गायत्रि छन्दसां मातर्ब्रह्मयोनि नमोऽस्तु ते ॥ 'अम्बुप्राशनम्' सूर्यश्चमेत्यस्य नारायण ऋषिः । सूर्यो देवता । अनुष्टुप् छन्दः । अम्बुप्राशने विनियोगः ॐ सूर्यश्च मामन्युश्च मन्युपतयश्च मन्युकृतेभ्यः पापेभ्यो रक्षन्ताम् । यद्रात्र्या पापमकार्षम् । मनसा वाचा हस्ताभ्याम् । पद्भ्यामुदरेण शिश्ना रात्रिस्तदवलुम्पतु । यत्किञ्चित् दुरितं मयि । इदमहं माममृत-योनौ । सूर्ये ज्योतिषि जुहोमि स्वाहा ॥ 'ततो द्विराचमनम्' ॐ केशवाय नमः स्वाहा । ॐ नारायणाय नमः स्वाहा । ॐ माधवाय नमः स्वाहा ॥ 'हस्तप्रक्षालनम्' ॐ गोविन्दाय नमः ॥ 'पुनश्च मार्जनम्' आपोहिष्ठेति तिसृणां सिन्धुद्वीप ऋषिः । आपो देवता । गायत्री छन्दः । मार्जने विनियोगः ॐ आपो हि । ष्ठा मयो भुवः० । ११$\frac{१४}{३६}$ ॥ ॐ योवः शिवतमो० १२$\frac{१५}{३६}$ ॥ ॐ तस्माऽअरङ्गमा० । १३$\frac{१६}{३६}$ ॥ 'जलावग्रहणम्' सुमित्रियादुर्मित्रिया इति द्वयोः प्रजापतिर्ऋषिः । आपो देवता । अनुष्टुप् छन्दः । जलावग्रहणे विनियोगः ॐ सुमित्रिया नऽ आपऽओषधयः सन्तु । दुर्मित्रियास्तस्मै सन्तु योऽ स्मान्द्वेष्टि यञ्च वयन्द्विष्मः ॥ १४ $\frac{२३}{३८}$ ॥ 'अघमर्षणम्' द्रुपदादिवेत्यस्य कोकिलराजपुत्र ऋषिः । आपो देवता । अनुष्टुप् छन्दः । अघमर्षणे विनियोगः ॐ द्रुपदादिव मुमुचानः स्विन्नः स्नातो मलादिव । पूतम्पवित्रेणेवाज्ज्यम् आपः शुन्धन्तु मैनसः ॥ १५$\frac{२०}{२०}$ ॥ 'पापपुरुषनिरसनम्' ऋतञ्च सत्यं चेत्यस्याघमर्षण ऋषिः । भाववृत्तो देवता । अनुष्टुप् छन्दः

१ ( एतन्मन्त्रेण जलं प्राश्य ) । २ ( हस्तं प्रक्षाल्य ) ॥ ३ ( एतैर्मन्त्रैर्मा[illegible] र्यात् ) ४ अनेन मन्त्रेण सन्ध्योपयोगि जलं वामहस्ते गृहीत्वा तं न्युब्जेन द[illegible] स्तेनाच्छाद्य ॥

पापपु० विनियोगः—ॐ ऋतं च सत्यं चाभीद्धात्तपसोध्यजायत। ततो रात्र्यजायत ततः समुद्रोऽअर्णवः। समुद्रादर्णवादधिसंवत्सरोऽअजायत। अहोरात्राणि विदधद्विश्वस्य मिषतो वशी। सूर्याचन्द्रमसौ धाता यथा पूर्वमकल्पयत्। दिवं च पृथिवीं चान्तरिक्षमथो स्वः।१६॥'अर्घ्यदानम्'—ॐ भूर्भुवःस्वरिति महाव्याहृतीनां परमेष्ठी प्रजापतिर्ऋषिः। अग्निवायुसूर्या देवताः। गायत्र्युष्णिगनुष्टुभश्छन्दांसि। ॐ तत्सवितुरित्यस्य विश्वामित्रऋषिः। सविता देवता। गायत्रीछन्दः। अर्घ्यदाने विनियोगः। ॐ भूर्भुवः स्वः ॐ तत्सवितु०। १७$\frac{३५}{३}$॥ ब्रह्मस्वरूपिणे सूर्यनारायणाय नमः इदमर्घ्यं दत्तं न मम॥ ॐ भूर्भुवः स्वः ॐ तत्सवितु०। १८$\frac{३५}{३}$॥ ब्र० सू० इ० द० न मम॥ ॐ भूर्भुवः स्वः ॐ तत्सवितु०। १९$\frac{३५}{३}$॥ ब्र० सू० इ० द० न मम॥ (कालातिक्रमे सति—ॐ आकृष्णेन। रजसा वर्त्तमानो निवेशयन्नमृतम्मर्त्यञ्च। हिरण्ययेन सविता रथेनादेवो याति भुवनानि पश्यन्। २०$\frac{४३}{३३}$) ॥ ब्र० सू० इ० द० न मम॥ ततः—ॐ असावादित्यो ब्रह्म॥ 'आचमनम्'—ॐ केशवाय नमः स्वाहा। ॐ नारायणाय नमः स्वाहा। ॐ माधवाय नमः स्वाहा॥ 'हस्तप्रक्षालनम्'—ॐ गोविन्दाय नमः॥ 'आत्मनः समंतात्प्रदक्षिणवदुदकक्षेपणम्'—ॐ नमो भगवते वासुदेवाय॥ 'प्राणायामाः'—तत्रादौ 'पूरकः'—ॐ भूः। ॐ भुवः। ॐ स्वः। ॐ महः। ॐ जनः। ॐ तपः। ॐ सत्यम्। ॐ तत्सवितु०। २१$\frac{३५}{३}$॥ ॐ आपोज्योतीरसोऽमृतं ब्रह्मभूर्भुवः स्वरोम्। ॐ विष्णवे नमः—(एवं दक्षिणनासापुटपीडनपूर्वकं मनसा

(१) इति मन्त्रेण तदाच्छादितं जलमवघ्राणपूर्वकं वामभागे निक्षिपेत्॥ (२) ...कारेण 'पद्मासनस्थित्या' प्रातः सूर्याभिमुखं गन्धाक्षतपुष्पयुक्तानि त्रीण्य... दद्यात्॥ दत्ताघ्योंदकेन दक्षिणनासाचक्षुःश्रोत्रस्पर्शनं कुर्यात्॥ (३) अनेन चतुर्थार्घ्यं दद्यात्॥ (४) अनेन मन्त्रेण प्रदक्षिणवदुदकं क्षिपेत्॥

'विष्णुं' ध्यायेत् ) ॥ 'कुम्भकः'—ॐ भूः । ॐ भुवः । ॐ स्वः । ॐ महः । ॐ जनः । ॐ तपः । ॐ सत्यम् । ॐ तत्सवितुर्व० २२$\frac{३५}{३}$ ॥ ॐ आपोज्योतीरसोऽमृतं ब्रह्मभूर्भुवः स्वरोम् । ॐ ब्रह्मणे नमः—( एवं वामनासापुटपीडनपूर्वकं मनसा 'ब्रह्माणं' ध्यायेत् ) 'रेचकः'—ॐ भूः । ॐ भुवः ॐ स्वः । ॐ महः । ॐ जनः ॐ तपः । ॐ सत्यम् । ॐ तत्सवितुर्व० । २३$\frac{३५}{३}$ ॥ ॐ आपोज्योतीरसोऽमृतं ब्रह्मभूर्भुवः स्वरोम् । ॐ महेश्वराय नमः—( एवमुभ नासापुटपीडनपूर्वकं मनसा 'महेश्वरं' ध्यायेत् ) ॥ 'सूर्योपस्थानम्'— उद्वयमुदुत्यमिति द्वयोः प्रस्कण्वऋषिः । सूर्यो देवता अनुष्टुप् छन्दः । चित्रं देवानामित्यस्य कुत्साङ्गिरसऋषिः । सूर्यो देवता । त्रिष्टुप् छन्दः । तच्चक्षुरित्यस्य दध्यङ्ङाथर्वणऋषिः । सूर्यो देवता । उष्णिक् छन्दः । सूर्योपस्थाने विनियोगः—ॐ उद्वयन्तमसस्परि स्वः पश्यन्त उत्तरम् । देवन्देवत्रा सूर्यमगन्म ज्योतिरुत्तमम् २४$\frac{२१}{२०}$ ॥ उदुत्यञ्जातवेदसन्देवं वहन्ति केतवः । दृशे विश्वाय सूर्यम् । २५$\frac{३१}{३३}$ ॥ चित्रन्देवानामुदगादनीकञ्चक्षुर्म्मित्रस्य वरुणस्याग्नेः । आप्प्रा द्यावा पृथिवी अन्तरिक्षꣳ सूर्यऽआत्मा जगतस्तस्थुषश्च ॥२६$\frac{४}{७}$ तच्चक्षुर्द्देवहितम्पुरस्ताच्छुक्रमुच्चरत् । पश्येम शरदः शतञ्जीवेम शरदः शतꣳ शृणुयाम शरदः शतम्प्रब्रवाम शरदः शतमदीनाः स्याम शरदः शतम्भूयश्च शरदः शतात् ॥२७$\frac{२४}{३६}$ ॥ 'गायत्र्यावाहनम्'—तेजोसीरित्यस्य परमेष्ठी प्रजापतिऋषिः । आज्यं देवता । जगती छन्दः । यजुर्गायत्र्यावाहने विनियोगः—**ॐ तेजोसि शुक्रमस्यमृतमसि धामनामासि प्प्रियन्देवानामनाधृष्टन्देव यजनमसि ॥२८$\frac{३१}{१}$॥ 'गायत्र्युपस्थानम्'—तुरीयपदस्य विमलऋषिः । परमात्मा देवता

यत्री छन्दः । गायत्र्युपस्थाने विनियोगः—ॐ गायत्र्यस्येकपदी । द्विपदी त्रिपदी चतुष्पद्यपद्यसि । नहि पद्यसे नमस्ते तुरीयाय दर्शताय पदाय परोरजसे सावदोम् ॥ 'गायत्रीरूपम्'—तत्सवितुरित्यस्य विश्वामित्रऋषिः । सविता देवता । गायत्री छन्दः । वायव्यं बीजम् । चतुर्थं शक्तिः । पञ्चविंशतिर्व्यञ्जनानि कीलकम् । चतुर्थं पदम् । प्रणवो मुखम् । (अग्निर्मुखम्) । ब्रह्मा शिरः । विष्णुर्हृदयम् । रुद्रः कवचम् । परमात्मा शरीरम् । श्वेतवर्णा साङ्ख्यायनसगोत्राः षट्स्वराः । सरस्वती जिह्वा । पिङ्गाक्षी त्रिपदा गायत्री । अशेषपापक्षयार्थे जपे विनियोगः ॥ 'गायत्रीध्यानम्'—मुक्ताविद्रुमहेमनीलधवलच्छायैर्मुखैस्त्रीक्षणैर्युक्तामिन्दुनिबद्धरत्नमुकुटां तत्त्वात्मवर्णात्मिकाम् । गायत्रीं वरदाभयाङ्कुशकशाशुभ्रं कपालंगुणं शङ्खं चक्रमथारविन्दयुगलं हस्तैर्वहन्तीं भजे ॥ 'सूर्यनारायणप्रार्थना'—ध्येयः सदा सवितृमण्डलमध्यवर्ती नारायणः सरसिजासनसन्निविष्टः । केयूरवान्मकरकुण्डलवान् किरीटी हारी हिरण्मयवपुर्धृतशङ्खचक्रः ॥ सूर्यमण्डलगं विष्णुं ध्यात्वा विष्णुप्रीत्यर्थं (अमुकसंख्या) गायत्रीजपमहं करिष्ये । नारायणाय विद्महे वासुदेवाय धीमहि । तन्नो विष्णुः प्रचोदयात् ॥ 'गायत्रीप्रार्थना'—बहुरूपिणि गायत्री दिव्येसंध्ये सरस्वति ॥ अजरे अमरे देवि ब्रह्मयोनिर्नमोऽस्तु ते ॥ ब्रह्मशापाद्विमुक्ता भव । विश्वामित्रशापाद्विमुक्ता भव । वसिष्ठशापाद्विमुक्ता भव ॥ (क्षेपकानि)—'गायत्रीशापविमोचनम्'—अस्य श्रीब्रह्मशापविमोचनमन्त्रस्य ब्रह्माऋषिः । भुक्तिमुक्तिप्रदा ब्रह्मशापविमोचनी [गाय]त्रीशक्तिर्देवता । गायत्री छन्दः । ब्रह्मशापविमोचनार्थे जपे [विनि]योगः—गायत्रीं ब्रह्मेत्युपासीत यद्रूपं ब्रह्मविदो विदुः । तां [पश्य]न्ति धीराः सुमनसा वाचामग्रतः । ॐ वेदान्तनाथाय विद्महे [हिरण्य]गर्भाय धीमहि । तन्नो ब्रह्म प्रचोदयात् ॥ ॐ देवी गा[यत्रि] त्वं ब्रह्मशापाद्विमुक्ता भव ॥ अस्य श्रीवसिष्ठशापविमोचन[मन्त्रस्य] निग्रहानुग्रहकर्त्ता वसिष्ठऋषिः । वसिष्ठानुगृहीता गाय[त्रीशक्ति]र्देवता । विश्वोद्भवा गायत्री छन्दः । वसिष्ठशापविमोच[नार्थे] जपे विनियोगः—ॐ सोऽहमर्कमयं ज्योतिरात्मज्योतिरहं

शिवः । आत्मज्योतिरहं शुक्रः सर्वज्योती रसोस्म्यहम् ॥ इत्युक्त्व 'योनिमुद्रां' प्रदर्श्य गायत्रीत्रयं पठित्वा ॥ ॐ देवी गायत्री त्वं वसिष्ठ शापाद्विमुक्ता भव ॥ अस्य श्रीविश्वामित्रशापविमोचनमन्त्रस्य नूतनसृष्टिकर्त्ता विश्वामित्रऋषिः । विश्वामित्रानुगृहीता गायत्री शक्तिर्देवता । वाग्देहा गायत्री छन्दः । विश्वामित्रशापविमोचनार्थे जपे विनियोगः—गायत्रीं भजाम्यग्निमुखीं विश्वगर्भां यदुद्भवाः देवाश्चक्रिरे विश्वसृष्टिं तां कल्याणीमिष्टकरीं प्रपद्ये । यन्मुखान्नि सृतोऽखिलवेदगर्भः । शापयुक्ता तु गायत्री सफला न कदाचन शापादुत्तरिता सा तु भुक्तिमुक्तिफलप्रदा ॥ (इति शापविमोचनानि कृताकृतानि) ॥ (क्षेपकम्)—'गायत्र्यस्त्रोपाहरणम्'—अस्य गायत्र्य स्त्रोपाहरणमन्त्रस्य ब्रह्मविष्णुमहेश्वरा ऋषयः । ऋग्यजुःसामानि छ न्दांसि । क्रियामयं वपुः । परात्परशक्तिर्देवता । हं बीजम् । सं शक्तिः । सोऽहं कीलकम् । अस्त्रोपसंहरणार्थे जपे विनियोगः—ॐ ब्रह्मतेजोज्वालामालिनीं देवीं ह्रां अङ्गुष्ठाभ्यां नमः । ॐ विष्णुते जोज्वालामालिनीं देवीं ह्रीं तर्जनीभ्यां नमः । ॐ रुद्रतेजोज्वाला मालिनीं देवीं ह्रूं मध्यमाभ्यां नमः । ॐ अग्नितेजोज्वालामालि देवीं ह्रैं अनामिकाभ्यां नमः । ॐ ज्ञानतेजोज्वालामालिनीं दे ह्रौं कनिष्ठिकाभ्यां नमः । ॐ सत्यतेजोज्वालामालिनीं देवीं ह्रः क तलकरपृष्ठाभ्यां नमः । बहुरूपिणि गायत्रि दिव्येसन्ध्ये सरस्वति अजरे अमरे देवि ब्रह्मयोनिर्नमोऽस्तु ते ॥ (इति गायत्र्यस्त्रो रणं कृताकृतम् ॥) इति क्षेपकम् ॥ 'मुद्राप्रदर्शनम्'[1]—सुमुखं स चैव विततं विस्तरं तथा । द्विमुखं त्रिमुखं चैव चतुःपञ्चमुखं त षण्मुखाऽधोमुखं चैव व्यापकाञ्जलिकं तथा । शकटं यमपाशं च ग्र चोन्मुखोन्मुखम् । प्रलम्बं मुष्टिकं चैव मत्स्यः कूर्मो वराह सिंहाक्रान्तं महाक्रान्तं मुद्गरं पल्लवं तथा ॥ 'गायत्रीजपः'[2]—अ वस्य ब्रह्माऋषिः । परमात्मा देवता । गायत्री छन्दः

(१) एता मुद्रा न जानाति गायत्री निष्फला भवेत् । तस्मादाचार्येणाध्येतॄण चतुर्विंशतिर्मुद्रा इतिकर्तव्यतयावश्यमेव शिक्षणीयाः । तेन गायत्री सुप्रतिष्ठिता स भवति ॥ (२) जपमालां 'वस्त्राच्छादितां' 'गोमुखीं' वा नाभिदेशे गायत्रीजपः कार्यः ॥

हुतीनां प्रजापतिर्ऋषिः । अग्निवायुसूर्या देवताः । गायत्री छन्दः । सर्वपापक्षयार्थे गायत्रीमन्त्रजपे विनियोगः—ॐ भूर्भुवः स्वः ॐ तत्सवि० । ॐ २९ $\frac{३५}{३}$ ॥ 'तथोत्तरं धेनुमुद्रा'—सुरभिर्ज्ञानं वैराग्यं योनिः शङ्खोऽथ पङ्कजम् । लिङ्गं निर्वाणकं चैव जपान्तेऽष्टौ प्रदर्शयेत् ॥ 'सूर्यप्रदक्षिणा'—विश्वतश्चक्षुरिति मन्त्रस्य विश्वकर्माभौवनऋषिः । विश्वकर्मा देवता । त्रिष्टुप् छन्दः । सूर्यप्रदक्षिणायां विनियोगः—ॐ विश्वतश्चक्षुरुत । विश्वतोमुखो विश्वतोबाहुरुत विश्वतस्पात् । सम्बाहुभ्यान्धमति सम्पतत्रैर्द्यावाभूमी जनयन्देवऽएकः ॥ ३० $\frac{१९}{१७}$ ॥ 'सूर्यादिदिग्देवतानां नमस्काराः'—एकचक्र इत्यस्य नारायणऋषिः । सूर्यो देवता । उष्णिक् छन्दः । सूर्यनमस्कारे विनियोगः—एकचक्रो रथो यस्य दिव्यः कनकभूषितः । स मे भवतु सुप्रीतः पद्महस्तो दिवाकरः ॥ ॐ गायत्र्यै नमः । ॐ सावित्र्यै नमः । ॐ सन्ध्यायै नमः । ॐ सरस्वत्यै नमः । प्राच्यै (पूर्वे) दिशे—ॐ इन्द्राय नमः । आग्नेय्याम्—ॐ अग्नये नमः । दक्षिणस्याम्—ॐ यमाय नमः । नैर्ऋत्याम्—ॐ निर्ऋतये नमः । पश्चिमे—ॐ वरुणाय नमः । वायव्याम्—ॐ वायवे नमः । उत्तरस्याम्—ॐ कुबेराय नमः । ईशान्याम्—ॐ ईश्वराय नमः । ऊर्ध्वायाम्—ॐ ब्रह्मणे नमः । अधस्तात्—ॐ विष्णवे नमः । अवाच्यै—ॐ अनन्ताय नमः । 'जपनिवेदनम्'—देवागातुविद इत्यस्य मनसस्पतिर्ऋषिः । वातो देवता । विराट् छन्दः । जपनिवेदने विनियोगः—ॐ देवा गातु विदो गातुं वित्त्वा गातुमित । मनसस्पतऽइमं देव यज्ञꣳ स्वाहा वातेधाः ॥ ३१ $\frac{२१}{८}$ ॥ 'जपार्पणम्'—[अ]नेन प्रातःसन्ध्याङ्गभूतेनामुकसंख्याकेन अथवा यथाशक्ति गायत्रीजपाख्येन कर्मणा श्रीभगवान् ब्रह्मस्वरूपी सूर्यनारायणः [प्रीयतां] न मम ॥ 'प्रार्थना'—यदक्षरपदभ्रष्टं मात्राहीनं तु यद्भवेत् । [तत्सर्वं] क्षम्यतां देवि काश्यपप्रियवादिनि ॥ 'सन्ध्याविसर्जनम्'—[उत्तमे] शिखरे इत्यस्य कश्यपऋषिः । सन्ध्या देवता । अनुष्टुप्

छन्दः। सन्ध्याविसर्जने विनियोगः—उत्तरे शिखरे देवि भूम्यां पर्वतमस्तके। ब्राह्मणेभ्यो विनिर्मुक्ता गच्छ देवि यथासुखम्॥ 'गोत्रप्रवरोच्चारणम्'—अमुकगोत्रोत्पन्नोऽहं अमुकप्रवरान्वितोऽहं शुक्लयजुर्वेदान्तर्गतमाध्यन्दिनवाजसनेयशाखाध्यायी अमुकशर्माऽहं इत्युच्चारयेत्॥ ('यथोदाहरणम्'—गौतमगोत्रोत्पन्नोऽहं गौतमाङ्गिरस आयासेति त्रिप्रवरान्वितोऽहं शुक्लयजुर्वेदान्तर्गतमाध्यन्दिनवाजसनेयशाखाध्यायी नारायणभट्टशर्माऽहमिति)॥ 'अभिवादनम्'—भो आचार्य त्वामभिवादयामि। भो वैश्वानर त्वामभिवादयामि। भो सूर्याचन्द्रमसौ युवामभिवादयामि। भो याज्ञवल्क्य त्वामभिवादयामि। भो ईश्वर त्वामभिवादयामि॥ आकाशात्पतितं तोयं यथा गच्छति सागरम्। सर्वदेवनमस्कारः केशवं प्रति गच्छति॥ ततो—'द्विराचमनम्'॥ ॐ केशवाय नमः स्वाहा। ॐ नारायणाय नमः स्वाहा। ॐ माधवाय नमः स्वाहा॥ 'हस्तप्रक्षालनम्'—ॐ गोविन्दाय नमः॥ 'ईश्वरस्तुतिः'—यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु। न्यूनं सम्पूर्णतां याति सद्यो वन्दे तमच्युतम्॥ 'अर्पणम्'—अनेन प्रातःसन्ध्योपासनाख्येन कर्मणा श्री भगवान् ब्रह्मस्वरूपी परमेश्वरः प्रीयतां न मम॥ 'शिखामुक्तिः'—ब्रह्मपाशसहस्रेण रुद्रशूलशतेन च। विष्णुचक्रसहस्रेण शिखामुक्तिं करोम्यहम्॥ 'शिखाबन्धनम्'—तूष्णीम्॥ (क्षेपकम्)—'सन्ध्याङ्गभूतं गायत्रीतर्पणम्'—गायत्र्या विश्वामित्र ऋषिः सविता देवता गायत्री छन्दः। गायत्रीतर्पणे विनियोगः—ॐ भूः ऋग्वेदपुरुषम्—तर्पयामि। ॐ भुवः यजुर्वेदपुरुषम्—तर्पयामि। ॐ स्वः सामवेदपुरुषम्—तर्पयामि। ॐ महः अथर्ववेदपुरुषम्—तर्पयामि। ॐ जनः इतिहासपुराणपुरुषम्—तर्पयामि। ॐ तपः सर्वागमपुरुषम्—तर्पयामि। ॐ सत्यम् सत्यलोकपुरुषम्—तर्पयामि। ॐ भूः भूर्लोकपुरुषम्—तर्पयामि। ॐ भुवः भुवर्लोकपुरुषम्—तर्पयामि। ॐ स्वः स्वर्लोकपुरुषम्—तर्पयामि। भूः एकपदां गायत्रीम्—तर्पयामि। भुवः द्विपदां गायत्रीम्—तर्पयामि। ॐ स्वः त्रिपदां गायत्रीम्—तर्पयामि।

(१) पुनः शिखाबन्धनं तूष्णीम्॥ सन्ध्यादेवपूजातर्पणादौ धृतं कुशपवित्रं तत्संबन्धि जलतीर्थादिकं च तुलसीमूले पवित्रस्थले वा विसर्जयेत्॥

ॐ भूर्भुवः स्वः चतुष्पदां गायत्रीम्—तर्पयामि । ॐ उषसीम्—तर्पयामि । ॐ गायत्रीम्—तर्पयामि । ॐ सावित्रीम्—तर्पयामि । ॐ सरस्वतीम्–तर्पयामि । ॐ वेदमातरम्—तर्पयामि । ॐ पृथिवीम्–तर्पयामि । ॐ अजाम्—तर्पयामि । ॐ कौशिकीम्–तर्पयामि । ॐ साङ्कृतीम्–तर्पयामि । ॐ सर्वजितम्—तर्पयामि ॥ इति सन्ध्याङ्गभूतं गायत्रीतर्पणम् ॥ एतत्कृताकृतमस्ति ॥ इति क्षेपकम् ॥ 'सन्ध्याभूमृत्तिकावन्दनम्'—ॐ भूर्भुवः स्वः ०।३२ $\frac{35}{3}$॥ स्वः । भुवः । भूः । ॐ ॥ ॐ विष्णवे नमः । ॐ विष्णवे नमः ॥ ॐ विष्णवे नमः ॥ इति प्रातःसन्ध्याप्रयोगः ॥

१९८. अथ 'कात्यायनादिपरिशिष्टसूत्रोक्तत्रिकालसन्ध्याप्रयोगः' 'भस्मधारणम्'—ॐ त्र्यायुषं जमदग्नेः—ललाटे । कश्यपस्य त्र्यायुषम्—ग्रीवायाम् । यद्देवेषु त्र्यायुषम्—दक्षिणांसे । तन्नोऽअस्तु त्र्यायुषम् हृदये ॥ 'आचमनम्'—ॐ आमागन्यशसा-सꣳसृज वर्चसा । तं मा कुरु प्रियं प्रजानामधिपतिं पशूनामरिष्टं तनूनाम् ॥ 'प्राणायामः'—ॐ भूः ॐ भुवः ॐ स्वः ॐ महः ॐ जनः ॐ तपः ॐ सत्यं ॐ तत्सवितु० १ $\frac{35}{3}$॥ ॐ आपोज्योतीरसोऽमृतं ब्रह्म भूर्भुवःस्वरोम् । (एवं त्रिवारं प्राणायामः कर्तव्यः) ॥ 'न्यासाः'—वाङ्मऽआस्येऽस्तु—मुखं कराग्रेण स्पृशेत् । नसोर्मे प्राणोऽस्तु—(तर्जन्यङ्गुष्ठाभ्यां नासारन्ध्रद्वयं स्पृशेत्) । अक्ष्णोर्मे चक्षुरस्तु-(अनामिकाङ्गुष्ठाभ्यां चक्षुर्द्वयं स्पृशेत्) । कर्णयोर्मे श्रोत्रमस्तु—(मध्यमाङ्गुष्ठाभ्यां दक्षिणकर्णं स्पृशेत्) । कर्णयोर्मे श्रोत्रमस्तु—(मध्यमाङ्गुष्ठाभ्यां वामकर्णं स्पृशेत्) । बाह्वोर्मे बलमस्तु—(कराग्रेण दक्षिणबाहुं स्पृशेत्) । बाह्वोर्मे बलमस्तु—(कराग्रेण वामबाहुं स्पृशेत्) । ऊर्वोर्मेऽओजोऽस्तु—(युगपद्धस्तेनोरू स्पृशेत्) । अरिष्टानि मेऽङ्गानि तनूस्तन्वा मे सह—(शिरःप्रभृति पादान्तानि सर्वाङ्गाण्युभाभ्यां हस्ताभ्यामालभेत्) ॥ 'सङ्कल्पः'— ॐ तत्सत्परमेश्वरप्रीत्यर्थं प्रातःसन्ध्योपासनमहं करिष्ये— 'अर्घ्यम्'— ॐ भूर्भुवः स्वः—तत्सवि० २ $\frac{35}{3}$॥ (इति गायत्रीमन्त्रेणार्घ्यत्रयं दद्यात्) ॥ 'सूर्योपस्थानम्.'—ॐ उद्वयन्तमसस्परि स्वः पश्यन्तऽउत्तरम्।

(१) सुपुष्पाण्यम्बुमिश्राण्यूर्ध्वं प्रक्षिप्य ॥

देवन्देवत्रा सूर्य्यमगन्म्मज्ज्योतिरुत्तमम् ॥ ३ $\frac{२९}{२०}$ । उ-
दुत्यञ्जातवेदसन्देवं वहन्ति केतवः । दृशे विश्वाय सूर्य्यम्
॥ ४ $\frac{३१}{३३}$ ॥ चित्रन्देवानामुदगादनीकञ्चक्षुर्म्मित्रस्य वरु-
णस्याग्नेः । आप्प्रा द्यावा पृथिवीऽअन्तरिक्षꣳ सूर्य्य
आत्त्मा जगतस्तस्त्थुषश्च ॥ ५ $\frac{४६}{१३}$ ॥ तच्चक्षुर्द्देवहित-
म्पुरस्ताच्छुक्क्रमुच्चरत् । पश्येम शरदः शतञ्जीवेम शरदः
शतꣳशृणुयाम शरदः शतम्प्रब्रवाम शरदः शतमदी-
नाःस्याम शरदः शतम्भूयश्च शरदः शतात् ॥ ६ $\frac{२४}{३६}$ ॥
'गायत्रीमन्त्रजपः'—(गायत्र्या च यथाशक्ति) ॥ 'उपस्थानम्'—
ॐ विभ्राड् बृहत्० १७ ॥ ॐ सहस्रशीर्षा पुरुषः० ॥ १६ ॥ ॐ
यज्जाग्रतः० ६ ॥ ॐ यदेतन्मण्डलं तपति० ॥ १३ ॥ (इत्युपस्थाय
प्रदक्षिणीकृत्य नमस्कृत्योपविशेत्) ॥ 'अर्पणम्'—अनेन यथाशक्ति
गायत्रीजपादिकृतेन ब्रह्मस्वरूपी सविता देवता प्रीयतां न मम।
ॐ तत्सद्ब्रह्मार्पणमस्तु ॥ इति कात्यायनादिपरिशिष्टसूत्रोक्तत्रिकाल
सन्ध्याप्रयोगः समाप्तः ॥

१९९. अथ 'संक्षेपतःप्रातःसन्ध्याप्रयोगः.' तत्रादौ— 'भस्म
धारणम्—' ॐ त्र्यायुषञ्जमदग्नेः कश्यपस्य त्र्यायुषम्
यद्देवेषु त्र्यायुषन्तन्नो ऽअस्तु त्र्यायुषम् । १ $\frac{६२}{३}$ ॥ 'शिखा
बन्धनम्'—ॐ मा नस्तोके । तनये मा न ऽआयुषि म
नो गोषु मा नो ऽअश्वेषु रीरिषः । मा नो वीरान्
द्रभामिनो वधीर्हविष्म्मन्तः सदमित्त्वा हवामहे।२ $\frac{१६}{१६}$
'रुद्राक्षमालाधारणम्'—ॐ त्र्यंबकं यजामहे । सुगन्धि
म्पुष्टिवर्द्धनम । उर्व्वारुकमिव बन्धनान्मृत्योर्म्मु

(१) (२) (३) एते क्रमेण सप्तदश, षोडश, षट् च मन्त्रा 'रुद्राध्याये' द्रष्टव्याः ।
(४) एतद्ब्राह्मणं 'सूर्योपस्थानप्रयोगे' द्रष्टव्यम् ॥

यम्नामृतात् । ३ $\frac{६०}{३}$ 'आचमनम्—' ॐ केशवाय नमः स्वाहा । ॐ नारायणाय नमः स्वाहा । ॐ माधवाय नमः स्वाहा—(इति पिबेत्) ॥ ॐ गोविन्दाय नमः—दक्षिणकरं प्रक्षाल्य । ॐ विष्णवे नमः—वामकरं प्रक्षाल्य । ॐ मधुसूदनाय नमः—ऊर्ध्वोष्ठं सम्मृज्य । ॐ त्रिविक्रमाय नमः—अधरोष्ठंसम्मृज्य । ॐ वामनाय नमः । ॐ श्रीधराय नमः—उन्मार्जनम् । ॐ हृषीकेशाय नमः—हस्तौ प्रक्षाल्य । ॐ पद्मनाभाय नमः—पादौ प्रक्षाल्य । ॐ दामोदराय नमः—मूर्द्धानं सम्प्रोक्ष्य । ॐ सङ्कर्षणाय नमः—आस्यं सम्प्रोक्ष्य । ॐ वासुदेवाय नमः—दक्षिणनासा पुटं सम्प्रोक्ष्य । ॐ प्रद्युम्नाय नमः—वामनासा पुटं सम्प्रोक्ष्य । ॐ अनिरुद्धाय नमः—दक्षिणाक्षि सम्प्रोक्ष्य । ॐ पुरुषोत्तमाय नमः—वामाक्षि सम्प्रोक्ष्य । ॐ अधोक्षजाय नमः—दक्षिणकर्णं सम्प्रोक्ष्य । ॐ नारसिंहाय नमः—वामकर्णं सम्प्रोक्ष्य । ॐ अच्युताय नमः—नाभिं सम्प्रोक्ष्य । ॐ जनार्दनाय नमः—ऊरुं सम्प्रोक्ष्य । ॐ उपेन्द्राय नमः—मस्तकं सम्प्रोक्ष्य । ॐ हरये नमः—दक्षिणभुजं सम्प्रोक्ष्य । ॐ श्रीकृष्णाय नमः—वामभुजं सम्प्रोक्ष्य ॥ तत्रादौ—'प्राणायामाः'—प्रणवपूर्वकद्वादशाक्षरीमहामन्त्रस्य परब्रह्मऋषिः परमात्मादेवता दैवीगायत्रीछन्दः सप्तानां व्याहृतीनां विश्वामित्रजमदग्निभरद्वाजगौतमाऽत्रिवसिष्ठकश्यपाऋषयः अग्निवायुसूर्यबृहस्पतिवरुणेन्द्रविश्वेदेवादेवताः । गायत्र्युष्णिगनुष्टुप्बृहतीपङ्क्तित्रिष्टुब्जगत्यश्छन्दांसि । तत्सवितुरित्यस्य विश्वामित्रऋषिः सवितादेवता गायत्रीछन्दः । तथा च आपोज्योतिरित्यस्य प्रजापतिर्ऋषिः ब्रह्माग्निवायुसूर्या देवताः यजुश्छन्दः सर्वेषां प्राणायामे विनियोगः—'आत्मनः समन्तात्प्रदक्षिणवदुदकक्षेपणम्'—ॐ नमो भगवते वासुदेवाय ॥ ततो—'पूरकः'—ॐ भूः ॐ भुवः ॐ स्वः ॐ महः ॐ जनः ॐ तपः ॐ सत्यम् ॐ तत्सवितु० । ४$\frac{३५}{३}$ ॥ ॐ आपोज्योतीरसोऽमृतं ब्रह्मभूर्भुवः स्वरोम् । ॐ विष्णवे नमः । (एवं दक्षिणनासापुटे) ॥ 'कुम्भकः'— ॐ भूः ॐ भुवः ॐ स्वः ॐ महः ॐ जनः ॐ तपः ॐ सत्यम् ॐ तत्स[illegible]० । ५$\frac{३५}{३}$ ॥ ॐ आपोज्योतीरसोऽमृतं ब्रह्मभूर्भुवः स्वरोम् । ब्रह्मणे नमः । (एवं वामनासापुटे) ॥ 'रेचकः'—ॐ भूः ॐ भुवः

ॐ स्वः ॐ महः ॐ जनः ॐ तपः ॐ सत्यम् ॐ तत्सवितु० । ६ $\frac{३५}{३}$ ॥ ॐ आपोज्योतीरसोऽमृतं ब्रह्मभूर्भुवः स्वरोम् । ॐ महेश्वराय नमः । (एवमुभयनासापुटे) ॥ 'हृदिपवित्रकरणम्'—ॐ विष्णुर्विष्णुः । ॐ वाग्वाक् । ॐ प्राणः प्राणः । ॐ चक्षुश्चक्षुः । ॐ श्रोत्रं श्रोत्रम् । ॐ नाभिः । ॐ हृदयम् । ॐ कण्ठः । ॐ मुखम् । ॐ शिरः । ॐ शिखा । ॐ बाहुभ्यां यशोबलम् ॥ अपवित्रः पवित्रेत्यस्य वामदेवऋषिः । विष्णुर्देवता अनुष्टुप्छन्दः । मुखे हृदि पवित्रकरणे विनियोगः—अपवित्रः पवित्रो वा सर्वावस्थाङ्गतोऽपि वा । यः स्मरेत्पुण्डरीकाक्षं स बाह्याभ्यन्तरः शुचिः ॥ 'सङ्कल्पः'—ममोपात्तदुरितक्षयद्वारा श्रीपरमेश्वरप्रीत्यर्थं प्रातःसन्ध्योपासनमहं करिष्ये ॥ 'भूप्रार्थना'—पृथिवीत्यस्य मेरुपृष्ठऋषिः कूर्मोदेवता सुतलं छन्दः आसने विनियोगः—पृथिवि त्वया धृता लोका देवि त्वं विष्णुना धृता । त्वं च धारय मां देवि पवित्रं कुरु चासनम् ॥ 'भूतशुद्धिः'—अपसर्पन्तु ते भूता ये भूता भूमिसंस्थिताः । ये भूता विघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया ॥ अपक्रामन्तु भूतानि पिशाचाः सर्वतोदिशम् । सर्वेषामविरोधेन सन्ध्याकर्म समारभे ॥ (अनेन मन्त्रेण वामपादपार्ष्णिना त्रिवारं भूमिं ताडयेत् ॥ 'अभिषेकः'—ॐ भूः पुनातु—शिरसि । ॐ भुवः पुनातु—नेत्रयोः । ॐ स्वः पुनातु—कण्ठे । ॐ महः पुनातु—हृदये । ॐ जनः पुनातु—नाभ्याम् । ॐ तपः पुनातु—पादयोः । ॐ सत्यं पुनातु—पुनः शिरसि । ॐ खं ब्रह्म पुनातु— सर्वत्र ॥ 'अम्बुप्राशनम्'—सूर्यश्चेत्यस्य नारायणऋषिः सूर्योदेवता अनुष्टुप् छन्दः अम्बुप्राशने विनियोगः—ॐ सूर्यश्च मामन्युश्च मन्युपतयश्च मन्युकृतेभ्यः पापेभ्यो रक्षन्तां यद्रात्र्यापापमकार्षं मनसा वाचा हस्ताभ्यां पद्भ्यामुदरेण शिश्ना रात्रिस्तदवलुम्पतु यत्किञ्चिद्दुरितं मयि इदमहं मामृतयोनौ सूर्य्येज्योतिषि जुहोमि स्वाहा ॥ (इति आचमनवदुदकं पिबेत्) ततो 'द्विराचमनम्'—ॐ केशवाय नमः स्वाहा ॐनारायणाय नमः स्वाहा

माधवाय नमः स्वाहा ॥ 'हस्तप्रक्षालनम्'—ॐ गोविन्दाय नमः ॥ 'मार्जनम्'—आपोहिष्ठेति तिसृणां सिन्धुद्वीपऋषिः आपोदेवता गायत्री-छन्दः मार्जने विनियोग—ॐ आपो हि ष्ठा मयो भुव÷इति मस्तके। तान ऽऊर्जे दधातन—इति भूमौ । महे रणाय चक्षसे—इति हृदये । ७$\frac{३४}{३६}$ ॥ यो वः शिवतमो रस÷इति हृदये तस्य भाजयतेह नः÷इति भूमौ । उशतीरिव मातरः÷इति मस्तके । ८$\frac{३५}{३६}$ ॥ तस्मा ऽअरङ्गमामव÷इति मस्तके । यस्य क्षयाय जिन्वथ इति हृदये । आपो जनयथा च नऽ इति भूमौ । ९$\frac{३६}{३६}$ ॥ 'जलावग्रहणम्'—सुमित्रियादुर्म्मित्रिया इति द्वयोः प्रजापतिर्ऋषिः आपो देवता अनुष्टुप् छन्दः । जलावग्रहणे विनियोगः—ॐ सुमित्रिया नऽआपऽओषधयः सन्तु दुर्म्मित्रिया-स्तस्मै सन्तु योऽस्मान्द्वेष्टि यञ्च वयन्द्विष्मः।१०$\frac{२३}{३८}$॥ 'अघमर्षणम्'—द्रुपदादिवेत्यस्य कोकिलराजपुत्रऋषिः । आपो देवता अनुष्टुप् छन्दः । अघमर्षणे विनियोगः—ॐ द्रुपदादिव मुमुचानः स्विन्नः स्नातो मलादिव । पूतम्पवित्रेणेवाज्यमापः शुन्धन्तु मैनसः ।११$\frac{२०}{२०}$ ॥ 'पापपूरुषनिरसनम्'—ॐ ऋतं च सत्यं चाभीद्धात्तपसोऽध्यजायत । ततो रात्र्यजायत ततः समुद्रो अर्णवः । समुद्रादर्णवादधि संवत्सरो अजायत । अहोरात्राणि विदधद्विश्वस्य मिषतोवशी । सूर्याचन्द्रमसौ धाता यथापूर्वमकल्प-यत् । दिवं च पृथिवीं चान्तरिक्षमथो स्वः ॥ १२ ॥ 'अर्घ्यम्'—ॐ भूर्भुवः स्वरिति महाव्याहृतीनां परमेष्ठीप्रजापतिर्ऋषिः । अग्निवायु-सूर्या देवताः । गायत्र्युष्णिगनुष्टुभश्छन्दांसि । ॐ तत्सवितुरित्यस्य विश्वा-मित्रऋषिः सवितादेवता गायत्रीछन्दः अर्घ्यदाने विनियोगः—ॐ [illegible]र्भुवः स्वः—ॐ तत्सवितु० । १३$\frac{३५}{३}$ ॥ ब्रह्मस्वरूपिणे [illegible]रायणाय नमः इदमर्घ्यं दत्तं न मम ॥ ॐ भूर्भुवः ॐ तत्सवितु० । १४$\frac{३५}{३}$ ॥ ब्रह्मस्वरूपिणे सूर्यनाराय-

णाय नमः इदमर्घ्यं दत्तं न मम ॥ ॐ भूर्भुवः स्वः ॐ तत्सवितु० । १५$\frac{३५}{३}$ ॥ ब्रह्मस्वरूपिणे सूर्यनारायणाय नमः इदमर्घ्यं दत्तं न मम ॥ ॐ असावादित्यो ब्रह्म । (अनेन प्रदक्षिणावदुदकं क्षिपेत्) 'आचमनम्'—ॐ केशवाय नमः स्वाहा । ॐ नारायणाय नमः स्वाहा । ॐ माधवाय नमः स्वाहा । 'हस्तप्रक्षालनम्'—ॐ गोविन्दाय नमः ॥ 'आत्मनः समन्तात्प्रदक्षिणवदुदकक्षेपणम्'— ॐ नमो भगवते वासुदेवाय 'प्राणायामाः'—तत्रादौ—'पूरकः'— ॐ भूः । ॐ भुवः ॐ स्वः । ॐ महः । ॐ जनः । ॐ तपः । ॐ सत्यम् । ॐ तत्सवितुर्व्व० । १६$\frac{३५}{३}$ ॥ ॐ आपोज्योतीरसोऽमृतं ब्रह्मभूर्भुवः स्वरोम् । ॐ विष्णवे नमः ॥ 'कुम्भकः'—ॐ भूः । ॐ भुवः ॐ स्वः । महः । जनः । ॐ तपः । ॐ सत्यम् । ॐ तत्सवितुर्व्व० । १७$\frac{३५}{३}$ ॥ ॐ आपोज्योतीरसोऽमृतं ब्रह्मभूर्भुवःस्वरोम् ॐ ब्रह्मणे नमः ॥ 'रेचकः'—ॐ भूः । भुवः । ॐ स्वः ॐ महः । जनः । ॐ तपः । ॐ सत्यम् । ॐ तत्सवितुर्व्व० १८$\frac{३५}{३}$ ॥ ॐ आपोज्योतीरसोऽमृतं ब्रह्मभूर्भुवः स्वरोम् ॥ ॐ महेश्वराय नमः ॥ 'सूर्योपस्थानम्'—उद्वयमुदुत्यमिति द्वयोः प्रस्कण्व ऋषिः । सूर्यो देवता अनुष्टुप् छन्दः । चित्रन्देवानामित्यस्य कुत्साङ्गिरस ऋषिः । सूर्यो देवता त्रिष्टुप् छन्दः । तच्चक्षुरित्यस्य दध्यङ्ङाथर्वण ऋषिः सूर्यो देवता उष्णिक् छन्दः । सूर्योपस्थाने विनियोगः—ॐ उद्वयन्तमसस्परि स्वः पश्यन्त ऽउत्तरम् । देवन्देवत्रा सूर्यमगन्म ज्योतिरुत्तमम् १६$\frac{२१}{२०}$ ॥ उदुत्यञ्जातवेदसन्देवं वहन्ति केतवः । दृशे विश्वाय सूर्य्यम् । १७$\frac{३१}{३३}$॥ चित्रन्देवानामुदगादनीकञ्चक्षुर्म्मित्रस्य वरुणस्याग्नेः । आप्प्रा द्यावा पृथिवी ऽअन्तरिक्षꣳ सूर्य्य आत्मा जगतस्तस्थुषश्च । १८$\frac{४६}{१३}$ ॥ तच्चक्षुर्द्देवहितम्पुरस्ताच्छुक्रमुच्चरत । पश्येम शरदः शतञ्जीवेम शरदः श

शृणुयाम शुरदः शुतम्प्रब्रवाम शुरदः शुतमदीनाः स्याम शुरदः शुतम्भूयश्च शुरदः शुतात् । १९$\frac{२४}{३६}$ ॥ 'गायत्र्यावाहनम्'—गायत्रीं त्र्यक्षरां बालां साक्षसूत्रकमण्डलुम् । रक्तवस्त्रां चतुर्हस्तां हंसवाहनसंस्थिताम्॥ ऋग्वेदे च कृतोत्सङ्गां सर्वदेवनमस्कृताम् । ब्रह्माणीं ब्रह्मदैवत्यां ब्रह्मलोकनिवासिनीम् । आवाहयाम्यहं देवीमायान्तीं सूर्यमण्डलात् । आगच्छ वरदे देवि त्र्यक्षरे ब्रह्मवादिनि । गायत्रि छन्दसां मातर्ब्रह्मयोनि नमोऽस्तु ते ॥ तेजोसीत्यस्य परमेष्ठी प्रजापतिर्ऋषिः । आज्यं देवता जगतीछन्दः गायत्र्यावाहने विनियोगः—** ॐ तेजोसि शुक्रमस्यमृतमसि धामनामासि प्रियन्देवानामनाधृष्टन्देव यजनमसि । २०$\frac{३१}{१}$ ॥ 'गायत्र्युपस्थानम्'—तुरीयपदस्य विमलऋषिः । परमात्मादेवता । गायत्रीछन्दः गायत्र्युपस्थाने विनियोगः—गायत्र्यस्येकपदी द्विपदी त्रिपदी चतुष्पद्यपद्यसि नहि पद्यसे नमस्ते तुरीयाय दर्शताय पदाय परोरजसे सावदोम् ॥ 'गायत्रीजपः'—प्रणवस्य ब्रह्माऋषिः परमात्मादेवता गायत्रीछन्दः । व्याहृतीनां प्रजापतिर्ऋषिः । अग्निवायुसूर्यादेवताः । गायत्री छन्दः । सर्वपापक्षयार्थे गायत्रीमन्त्रजपे विनियोगः— ॐ भूर्भुवः स्वः ॐ तत्सवितु० । २१$\frac{३५}{३}$ ॥ ॐ ॥ (एवं यथाशक्ति गायत्रीमन्त्रजपः कार्यः ) ॥ जपान्ते 'न्यासाः'—ॐ अङ्गुष्ठाग्रे तु गोविन्दम् । ॐ तर्जन्यां तु महीधरम् । ॐ मध्यमायां हृषीकेशम् । ॐ अनामिक्यां त्रिविक्रमम् । ॐ कनिष्ठिक्यां न्यसेद्विष्णुम् । ॐ करमध्ये तु माधवम् । करपृष्टे हरिं विद्यान्मणिबन्धे जनार्दनम् ॥ 'सूर्यप्रदक्षिणा'—विश्वतश्चक्षुरिति मन्त्रस्य विश्वकर्मा भौवनऋषिः । विश्वकर्मा देवता । त्रिष्टुप् छन्दः । सूर्यप्रदक्षिणायां विनियोगः— ॐ विश्वतश्चक्षुरुत । विश्वतो मुखो विश्वतो बाहुरुत विश्वतस्पात । सम्बाहुभ्यान्धमति सम्पतत्रैर्द्यावाभूमी जनयन्देव एकः । २२$\frac{१९}{१७}$ ॥ 'दिग्देवतानां नमस्काराः' प्राच्यै (पूर्वे)—ॐ इन्द्राय नमः । आग्नेय्याम्—ॐ अग्नये नमः । दक्षिणस्याम्—ॐ यमाय नमः । नैर्ऋत्याम्—ॐ निर्ऋतये नमः ।

पश्चिमे—ॐ वरुणाय नमः । वायव्याम्—ॐ वायवे नमः । उत्तरस्याम्
—ॐ कुबेराय नमः । ईशान्याम्—ॐ ईश्वराय नमः । ऊर्ध्वायाम्—
ब्रह्मणे नमः । अधस्तात्—ॐ अनन्ताय नमः ॥ 'जपनिवेदनम्'—
देवागातुविद इत्यस्य मनसस्पतिर्ऋषिः । वातोदेवता विराट्छन्दः । ज
निवेदने विनियोगः—ॐ देवा गातु विदोगातुं वित्त्वा गातु
मित । मनसस्पत ऽइमन्देव यज्ञꣳ स्वाहा वातेधाः
२३ $\frac{२१}{८}$ ॥ अनेन प्रातःसन्ध्याङ्गभूतयथाशक्तिसङ्ख्याकेन गायत्री
मन्त्रजपाख्येन कर्मणा श्रीसूर्यनारायणः प्रीयतां न मम ॥ 'गोत्रो
च्चारणाऽभिवादनम्'—अमुकगोत्रोत्पन्नोऽहं अमुकप्रवरान्वितोऽ
शुक्लयजुर्वेदान्तर्गतमाध्यन्दिनवाजसनेयशाखाध्यायी अमुकभट्टशर्मा
ऽहं भो साङ्ख्यायनसगोत्रधारिणि ब्रह्मरूपे गायत्रि त्वामभिवाद
यामि । भो वैश्वानर त्वामभिवादयामि । भो सूर्याचन्द्रमसौ युवा
मभिवादयामि । भो याज्ञवल्क्य त्वामभिवादयामि । भो ईश्वर त्वा
मभिवादयामि ॥ 'क्षमापनम्'—यदक्षरपदभ्रष्टं मात्राहीनं तु य
द्भवेत् । तत्सर्वं क्षम्यतां देवि काश्यपप्रियवादिनि ॥ 'प्रार्थना'—
आकाशात्पतितं तोयं यथा गच्छति सागरम् । सर्वदेवनमस्कारः
केशवं प्रति गच्छति ॥ यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रिया
दिषु । न्यूनं सम्पूर्णतां याति सद्यो वन्दे तमच्युतम् ॥ 'अर्पणम्'
अनेन प्रातःसन्ध्योपासनाख्येन कर्मणा श्रीभगवान् ब्रह्मस्वरूप
परमेश्वरः प्रीयतां न मम ॥ 'शिखामुक्तिः'—ब्रह्मपाशसहस्रेण
रुद्रशूलशतेन च । विष्णुचक्रसहस्रेण शिखामुक्तिं करोम्यहम् ॥
'शिखाबन्धनम्'—तूष्णीम् ॥ 'सन्ध्याभूमृत्तिकावन्दनम्'—
भूर्भुवः स्वः तत्सवितु० । २४ $\frac{३५}{३}$ ॥ स्वः भुवः भूः
॥ ॐ विष्णवे नमः । ॐ विष्णवे नमः । ॐ विष्णवे नमः ॥
इति संक्षेपतःप्रातःसन्ध्याप्रयोगः ॥

२००. 'सायंप्रातर्होमः.' कात्यायनसूत्रे—उद्धरेति यज
ब्रूयात् । सायंप्रातरग्निहोत्रे गार्हपत्यादाहवनीयस्योद्धरणमनस्तमि
तानुदितयोः प्रत्यङ्मुखो वा सायं निदध्यात्तस्मिन्सायंप्रात

मेके। नित्यो दक्षिणाग्निः सर्वे गतश्रियः सदा वाहरणमेकेषामुपवसथेन वावसिते वा तस्मिन्पचेयुरमांऽसं पावकाऽभावे गोः पयोधिश्रपितं वै ब्रूयात्तद्ब्राह्मणं पाययीत वै ब्रूयादन्तरेणापराग्निं गत्वा दक्षिणेन वा प्रदक्षिणमाहवनीयं परीत्योपविशति यजमानः पत्नी च पूर्ववदपरेणाहवनीयं कूर्चं निदधाति कुशान्वा परिस्तरणं वा सर्वेषां प्रागुदग्भिरुदगग्रान्दक्षिणाग्रान् करोतीति श्रुतेराहवनीयं पर्युक्ष्योदधारान्निनयत्यागार्हपत्यात्तं च ततो दक्षिणाग्निं जुहुते च धारावर्जम् ॥ १२ ॥ अग्निहोत्रीं दोहयति। पुंवत्सापशूद्रेण स्थाल्यामार्यकृत्यामूर्ध्वकपालायां दक्षिणतः प्राचीमुदीचीं वा पूर्वेणाहवनीयमाहृत्य गार्हपत्येऽधिश्रपयत्युत्तरतो निरूह्याङ्गारानेवमन्यत्रापि होमार्थस्याहरणं दक्षिणेन वौषधं तृणेनावज्योत्यासिच्यापः पुनरवज्योत्य निधाय त्रिरुद्वासयत्युदगस्तमिते जुहोति वैकङ्कतः स्रुक्स्रुवं प्रतप्य पाणिना संमार्ष्टि पुनः प्रतप्योन्नेष्यामीत्याहो ३ मुन्नयेति यजमानस्तिष्ठंश्चतुरः स्रुवानुन्नयति स्थाल्यां परिशिनष्टि तद्ब्राह्मणः पिबेदुपरि समिधं धारयन्वार्क्षीमध्यधिगार्हपत्यादाहवनीयः हरति मुखमात्रे धारयन् मध्ये निगृह्योद्गृह्योपविश्य समिधमादधात्यग्निज्योतिषं त्वा वायुमतीं प्राणवतीः स्वर्ग्याः स्वर्गायोपदधामि भास्वतीमिति प्रदीप्तामभिजुहोत्यग्निर्ज्योतिरिति सजूरिति चाग्निर्वर्चऽ इति ब्रह्मवर्चसकामस्य कूर्चे निधाय गार्हपत्यमवेक्षते होष्यन्नस्मिंस्तूष्णीमुत्तरां भूयसीं भूयिष्ठः स्रुचि द्विः प्रकम्प्य निदधात्युपमृज्य स्रुचं कूर्चे निमार्ष्टि नमो देवेभ्यः स्वधा पितृभ्यऽइति दक्षिणतऽउत्तानमपऽउपस्पृश्येतरयोश्च पुष्टिकामः स्थाल्याः स्रुवेणेह पुष्टिं पुष्टिपतिर्दधात्विह प्रजाः रमयतु प्रजापतिः ॥ अग्नये गृहपतये रयिमते पुष्टिपतये स्वाहेति गार्हपत्ये तूष्णीम्। द्वितीयामग्नयेऽन्नादायान्नपतये स्वाहेति दक्षिणाग्नौ तूष्णीम्। [illegible]तीयामनामिकया द्विः प्राश्नात्युत्सृप्य निर्लेढ्याचम्योत्सिञ्चति [illegible]ञ्जिन्व पितॄञ्जिन्व तृतीयामुदुक्षति सप्तर्षीन् जिन्वेति चतुर्थी[illegible]ने त्रिर्निषिञ्चत्यग्नये पृथिवीक्षिते स्वाहा पृथिव्याऽअमृतं जु[illegible]स्वाहामृतेऽअमृतं जुहोमि स्वाहेति स्रुक् स्रुवमाहवनीये प्रतप्य [illegible]ति समिधऽआदधाति सर्वेषु यथा पर्युक्षितः समिदसि स-

मिद्धोमेऽअग्ने दीदिहि समेद्धा तेऽअग्ने दीद्यासमिति वाग्यतो दोह- प्रभृत्या होमात् ॥ १४ ॥ क्षीरहोताचेत्प्रातर्जुहोति । अनुदिते त- णावपराग्निं गत्वा दक्षिणेन वा प्रदक्षिणं गार्हपत्यं परीत्योपविशति यजमानः पत्नी च यथा देशमपऽआचामति वृष्टिरसि वृश्च मे पाप्मानः सत्येन व्रतमुपैम्यापः सत्यं मयि व्रतमिति वाचं विसृज्य पुनराचा- मति विद्युदसि विद्युन्मे पाप्मानं जह्यपोवभृथमभ्युपैमि मयि सत्यं गोषु मे व्रतमित्युन्नयामीत्याह । प्रातः प्राक्सꣳस्थꣳसमित्पर्युक्षण धारा चोभयत्र वाग्निशब्दे सूर्यो रात्र्युपसाह्वेति वा ज्योतिः सूर्य ऽइति वा प्रातः प्रथमास्तमिते पर्युदयं च स्वर्गकामस्य तमोभ्यये साय जुहुयाद्वियति प्रातरायुःकामस्यान्तः पशौ पशुकामस्य सायंप्रातः शयाने श्रीकामस्य प्रातः प्रथमसमिद्धे हूयमाने प्रजासु निहलेन सहसान्नमश्नतो भूयिष्ठार्चिषि गृहीत्वेव सहसा प्रदीप्ततमे श्रीयश- स्कामस्यार्चिः प्रत्यवाये मैत्रेणान्नमत्स्यतोङ्कारेषु चाकश्यमानेषु ब्र- ह्मवर्चसकामस्य पयसा स्वर्गकामः पशुकामो वा यवाग्वा ग्रामकाम स्तण्डुलैर्बलकामो दध्नेन्द्रियकामोनधिश्रयणं च श्रुतिसामर्थ्याभ घृतेन तेजस्कामः संवत्सरं जुहुयादेतेषामेकैकेन कामसंयोगे सा प्रातर्वा दक्षिणेन प्रवेशनमग्निहोत्रेष्टिषु सायंप्रातराहवनीयस्यासने पस्थाने शय्यासनं वा गार्हपत्ये संव्रजन्मनसोपस्मृत्य दक्षिणाग्नि नशित्वा प्रातर्मुहूर्त्तꣳ सभासनꣳ सभ्यस्य भस्मोद्धृतमुपेयात्स्वयं जुहुयादुपवसथे नियमऽउपवसथे नियमः ॥ १५ ॥

२०१. पारस्करगृह्यसूत्रे— परिचरणमस्तमितानुदितयोर्द तण्डुलैरक्षतैर्वाग्नये स्वाहा प्रजापतये स्वाहेति सायꣳसूर्याय स्वा प्रजापतये स्वाहेति प्रातः पुमाꣳसौ मित्रावरुणौ पुमाꣳसाव नावुभौ । पुमानिन्द्रश्च सूर्यश्च पुमाꣳसं वर्ततां मयि पुनः स्वा पूर्वा गर्भकामा ॥ ९ ॥ राज्ञोक्षभेदे नद्धविमोक्षे यानय ऽन्यस्यां वा व्यापत्तौ स्त्रियाश्चोद्वहने तमेवाग्निमुपसमाधाय संस्कृत्येहरतिरिति जुहोति नानामन्त्राभ्यामन्यद्यानमुपकल्प्य प्रवेशयेद्राजानꣳ स्त्रियं वा प्रतिक्षत्रऽइति यज्ञान्तेनात्वाहा चैतया धुर्यौ दक्षिणा प्रायश्चित्तिस्ततो ब्राह्मणभोजनम् ॥

पक्षादिषु स्थालीपाकं श्रपयित्वा दर्शपूर्णमासदेवताभ्यो हुत्वा जुहोति ब्रह्मणे प्रजापतये विश्वेभ्यो देवेभ्यो द्यावापृथिवीभ्यामिति विश्वेभ्यो देवेभ्यो बलिहरणं भूतगृह्येभ्यऽआकाशाय च वैश्वदेवस्याग्नौ जुहोत्यग्नये स्वाहा प्रजापतये स्वाहा विश्वेभ्यो देवेभ्यः स्वाहाऽग्नये स्विष्टकृते स्वाहेति प्राशनान्ते बाह्यतः स्त्री बलिंहरति नमः स्त्रियै नमः पुंसे वयसे नमः शुक्लाय कृष्णदन्ताय पापिनां पतये नमो ये मे प्रजामुपलोभयन्ति ग्रामे वसन्तऽउत वारण्ये तेभ्यो नमोऽस्तु बलिमेभ्यो हरामि स्वस्ति मेऽस्तु प्रजां मे ददत्विति शेषमद्भिः प्लाव्य ततो ब्राह्मणभोजनम् ॥ ११ ॥

२०२. 'होमप्रकारः'. स्मृतिः—अन्यैः शतहुताद्धोमादेकदा स्वहुतो वरम् । शिष्यैः शतहुताद्धोमादेकः पुत्रहुतो वरम् ॥ पुत्रैः शतहुताद्धोमादेक आत्महुतो वरम् । तस्मात्सदैव होमं तु प्रकुर्वीत स्वयं द्विजः ॥ कात्यायनः—असमक्षं तु दम्पत्योर्होतव्यं नर्त्विगादिना । द्वयोरप्यसमक्षं तु भवेद्धुतमनर्थकम् ॥ निक्षिप्याग्निं स्वदारेषु परिकल्प्यर्त्विजं तथा । प्रवसेत्कार्यवान्विप्रो वृथा नैवाचरेत्क्वचित् ॥ यावन्नापैति लौहित्यं तावत्सायं तु हूयते । प्रातः सूर्योदयात्पूर्वं प्रायश्चित्तमतः परम् ॥ पौर्णमास्यात्यये हव्यं होतव्यं यदहर्भवेत् । तदहर्जुहुयादेवममावास्यात्ययेऽपि च ॥ मरीचिः—शरीरार्तिर्भवेद्यत्र द्रव्यार्तिर्वा प्रजायते । तथाऽन्यास्वपि चापत्सु पक्षहोमो विधीयते ॥ अनातुरोऽप्रवासी च विरोगो निरुपद्रवः । पक्षहोमं तु यो दद्यात्साचारो व्यतितव्रतः ॥ पक्षहोमं प्रकुर्वीत प्रवसन्नग्निमान्पदे । पञ्चयज्ञविधानं तु लौकिकेऽग्नौ विधीयते ॥ परेणाऽग्नौ हुते स्वार्थे परस्याऽग्नौ हुते स्वयम् । पितृयज्ञात्यये चैव वैश्वदेवद्वयस्य च ॥ अन्वष्टक्ययज्ञे च नवान्नप्राशने तथा । इष्टिं वैश्वानरीं कुर्यादेकान्नेन चरुः स्मृतः ॥ पक्षहोमं तु यो दत्वाऽकस्माच्चैव निवर्तितः । होमं पुनः प्रकुर्वीत न चासौ दोषभाग्भवेत् । प्रवासी नाऽग्निहोत्री च त्रिपञ्चाशीति सप्त च । दातव्यो होम एकाहे सायंप्रातः पृथक् पृथक् ॥

२०३. 'होमकुण्डम्'—कुण्डशुल्वकारिकाख्यग्रन्थे—वृत्ते पूर्वविनिर्मिते त्रियवयुक्त षड्भिः शरश्चाङ्गुलैर्मित्वा त्र्यष्टिभिरङ्गुलैश्च तिसृभिर्ज्याभिर्जेन्मण्डलम् । द्वाभ्यां मध्यशरद्वयं यवयुतं द्वाभ्यां च बाणद्वयं कृत्वा [illegible]ष्टपत्रविधिना पद्मं चतुर्भिर्दलैः ॥

[illegible]४. प्रथमाकृतयः 'श्रौताग्निकुण्डं' ज्ञेयम् । द्वितीया तु 'स्मा[illegible]ण्डम्' ॥







२०५. 'अथाऽग्निहोत्रशालाकुण्डरचनाप्रकारः' कुण्डतत्त्वप्रदी बलभद्रसूरिणोक्तः—ब्राह्मीमविभ्रंशवर्ती परीक्ष्य संशोध्य भूमिं सुसम समुच्चाम् । प्रगृह्य तस्यामनुलिप्य शालां कृत्वा निदध्याद्दृढमाद्यशङ्कुम् प्राचीं ततः पूर्ववदुक्तयुक्त्या संसाध्य देशे परितः प्रशस्ते । नर्यस श्चाद्विगुणाङ्गुलादि व्यासार्धमित्या विलिखेत्सुवृत्तम् ॥ तन्मध्यचिह्नाद्वसु क्रमेषु वैकादशद्वादशसु स्वमत्या । पाशस्य मध्यं परिकल्प्य कुर्यात्कु चतुष्कोणमरत्निमात्रम् ॥ मध्यं च 'नर्याहवनीय' योस्तु विभज्य षोढाप सप्तधा वा । लब्धांशकागंतुसमं त्रिधा तमंशं च हित्वा परदक्षिणेग्निः॥ रुदक् सार्द्धनवाङ्गुलेस्मिन् यूकेषुभिर्वर्द्धितभूस्थशङ्कौ । एकोनविंशाङ्गुलि र्यैवैकयूकाद्वयव्यासदलेन वृत्तम् ॥ विलिख्य पूर्वापरसंस्थजीवां कृत्वा हित्वोत्तरकार्मुकं हि । याम्याङ्कवेत्कुण्ड 'मथर्व' संज्ञं 'सभ्यं' सभायां चतुर सुक्तम् ॥ 'औपासनं' चैवमथो गृहान्तः कुण्डद्वयं नर्यमिवोक्तवद्वा । र्युपर्यर्पितमेखलाभिस्त्रिभिस्त्रिभिः सर्वस्वरेषु भित्तिः ॥ वेदाङ्गुलोच्चाभि विदध्याद्ध्रुवश्च तारुयङ्गुलविस्तृताभिः । रज्जुं द्विपाशां षडरत्निदीर्घां चिह्नितां पञ्चसु मध्यभागे ॥ हस्तद्वयेप्यङ्गुलषट्कचिह्ने ह्यष्टादशेषु लक्षिता च । प्राचीभवा 'दाहवनीय' शङ्कोः पश्चादरत्नीं प्रतिमुच्य शङ्कु पाशद्वयं सम्प्रतिमुच्य शङ्कोर्विकर्षयेदङ्गुलषट्कचिह्नम् । पाश्चात्यहस्त ज्जुचिह्ने शङ्कू च याम्योत्तरगौ निखेयौ ॥ तच्छ्रोणियुग्मं त्वथ पूर्व दष्टादशाङ्केन विकृष्य रज्जुम् । अग्निं शयोढं सयुगं तथा स्याच्छ्र त्सार्द्धकरस्य चिह्ने ॥ सूत्रार्पणात्कोणचतुष्टये तु क्षेत्रं भवेत्तद्द्विष

वेद्याः । पूर्वार्धशङ्कोरथ चापरार्धं यावच्च कोणौ परिवेष्ट्य रज्ज्वा ॥ अर्धीकृतां तामनुवेष्ट्य शङ्कुं याम्योत्तरौ मध्यगतौ निखेयौ । तुरीयभागेन दलीकृताया रज्जोः पृथुत्वादथवापि शङ्कोः ॥ वृत्तार्धमानेन च सङ्कहौ तु कृत्वा खनेत् त्र्यङ्गुलवेदिमध्यम् । वितानपूर्वापरसौम्यदिक्षु द्वारैर्युतं शंस्यगृहं पुरस्तात् ॥ याम्येन्द्रदिग्द्वारगृहं द्वयोश्च श्वभ्रं च भस्मोद्धरणाय कुर्यात् । एवं हविर्यज्ञविधौ वितानकुण्डानि साध्यानि समानि सद्भिः ॥ इत्यग्निहोत्रशालाकुण्डविधिः ॥

१०६. 'यज्ञपात्राणि.' कात्यायनसूत्रे—ऋचो यजूंषि सामानि निगदा मन्त्रास्तेषां वाक्यं निराकाङ्क्षं मिथः सम्बद्धं····वैकङ्कतानि पात्राणि खादिरः स्रुवः स्फ्यश्च पालाशी जुहूराश्वत्थ्युपभृद्वारणाऽन्यहोमसंयुक्तानि बाहुमात्र्यः स्रुचः पाणिमात्रपुष्करास्त्वग्बिला हंससुखप्रसेखा मूलदण्डा भवन्त्यरत्निमात्रः स्रुवोऽङ्गुष्ठपर्ववृत्तपुष्करः स्फ्योऽस्याकृतिरादर्शाकृतिः प्राशित्रहरणं चमसाकृति वा चात्वालोत्करावस्तरेण सञ्चरः प्रणीतोत्कराविष्टिषु ॥ ३ ॥ 'कातीये'—यज्ञपात्राणि सर्वाणि वैकङ्कतानि । यथा—उलूखलमुसलकूर्चेडापात्रीपिष्टपात्रीपुरोडाशपात्रीशम्याभृतावदानाभ्युपवेशान्तर्धानकटप्राशित्रहरणषड्वर्तब्रह्मयजमानासनहोतृषदनादीनि । एतानि वारणान्यहोमसंयुक्तानि ॥

१ आज्यस्थाली.



२ चरुस्थाली.



३ प्रणीता.



४ पुरोडाशपात्री.



२०७. 'यज्ञपात्राकृतयः.' कातीये—( १ )—'आज्यस्थाली'—तैजसी वा मृन्मयी वा प्रकीर्तिता । द्वादशाङ्गुलविस्तीर्णा प्रादेशोच्चा शुभा स्मृता ॥ आज्यस्थालीसमानैव ( २ )—'चरुस्थाली'—प्रशस्यते ॥ (३)—'प्रणीता'—वारणा ग्राह्या द्वादशाङ्गुलसंमिता । खातेन हंसदाकृत्या पद्मपत्रवत् ॥ ( ४ )—'पुरोडाशस्य पात्री'—तु

यैः पात्रैर्होमो न क्रियते तानि सर्वाणि वारणानि भवन्तीत्यर्थः ॥




चतुरस्रा समानतः । खातेन वर्तुलेनैव युता यज्ञे प्रशस्यते ॥ (५)—खादिरो बाहुमात्रस्तु 'जुहूस्रुक्संज्ञकः'—स्रुवः । अरत्निमात्रो हंसास्‍ वर्तुलोऽङ्गुष्ठपर्ववत् । अर्धपर्वप्रणाल्या च युक्तो नासाकृतिर्भवेत् ॥ (६)—'उपभृत्स्रुक्' (७)—'ध्रुवास्रुक्च' (८)—'पुष्करस्रुक्'—तथै च । (९)—'अग्निहोत्रस्य हवणी'—तथा (१०)—'वै ङ्कतः'—स्रुवः । एते चान्ये च बहवः स्रुवभेदाः प्रकीर्तिताः । वर्तुलास्




शङ्कुमुखाः पर्वखाताः समानकाः ॥ (११)—'उलूखलं' (१२)—'मुसलं'—स्वायत्ते सुदृढे तथा । इच्छाप्रमाणे (१३)—'शूर्पं'—वैणवमेव च ॥ अन्यच्च—खादिरं मुसलं लाशः स्यादुलूखलः । यद्वोभौ वारणौ कार्यौ तदभावेऽन्यवृ (१४)—शम्या—प्रादेशमात्री स्यात्खादिरः (१५)—'स्‍ प्रकीर्तितः । खड्गाकारोऽरत्निमात्रो वज्ररूपो मखे स्मृतः ॥




र्बमात्रं तु तीक्ष्णाग्रं पृथुवक्त्रकम् । (१६)—'शृतावदानं'—प्रादेशमात्रं दीर्घमुदाहृतम् ॥ (१७)—'उपवेशो'—ऽरत्निमात्रो हस्ताकारस्तु खादिरः ॥ कौशः (१८)—'कूर्चो'—बाहुमात्रो मकराकार उच्यते । इच्छाप्रमाणस्तु । (१९)—'दृषत्प्रोक्तः'— पाषाणसंभवः । (२०)—'उपलो'—वर्तुलः प्रोक्तो वितस्तिपरिमाणकः । षडङ्गुलप्रमाणं तु (२१)—'षड्वर्तं—चतुरस्रकम् । तथा चोमयतः-




खातं वारणं तत्प्रचक्षते, ॥ (२२)—'अभ्रि'—स्तीक्ष्णमुखा ज्ञेया खादिरारत्निसंमिता, । अश्वत्थो यः शमीगर्भः प्रशस्तोर्वीसमुद्भवः । तस्य या प्राङ्मुखी शाखा उदीची चोर्ध्वगापि वा । (२३)—'अरणि'—स्तन्मयी प्रोक्ता तन्मध्ये (२४)—'चोत्तरारणिः' । सारवद्दारवं (२५)—'मोविली'—च प्रशस्यते । संसक्तमूलो यः शम्याः स ... उच्यते । अलाभे त्वशमीगर्भादाहरेदविलम्बितः । चतुर्विंशतिर- ... षडपि पार्थिवम् ॥ चत्वार उच्छ्रये मानमरण्योः परिकीर्तितम् ॥

अष्टाङ्गुलः (२६)—प्रमथः (प्रमन्थः)— स्याच्चत्रं स्याद्द्वादशाङ्गुलम्।



२७ नेत्रम् अथवा रज्जूः

ओविली द्वादशैव स्यादेतन्मन्थनयन्त्रकम् ॥ अङ्गुष्ठाङ्गुलमानं तु यत्र यत्रो पदिश्यते । तत्र तत्र बृहत्पर्वग्रन्थिभिर्मिनुयात्सदा ॥ गोवालैः शणसंमि श्रैस्त्रिर्वृत्तममलात्मकम् । व्यामप्रमाणं (२७)—'नेत्रं'— स्यात्प्रमथ्य स्तेन पावकः ॥ मूर्द्धाक्षिकर्णवक्त्राणि कन्धरा चापि पञ्चमी । अङ्गुष्ठमात्रा ण्येतानि द्व्यङ्गुष्ठं वक्ष उच्यते ॥ अङ्गुष्ठमात्रं हृदयं त्र्यङ्गुष्ठमुदरं स्मृतम् एकाङ्गुष्ठा कटिर्ज्ञेया द्वौ बस्ती द्वौ च गुह्यकम् ॥ ऊरू जङ्घे च पादौ चतुस्त्र्येकैर्यथाक्रमम् । अरण्यवयवा ह्येते याज्ञिकैः परिकीर्तिताः ॥ यत्गु ह्यमिति प्रोक्तं देवयोनिस्तु सोच्यते । अस्यां यो जायते वह्निः स कल्


२८ कृत्तधोनकटः


२९ हविर्धानपात्री.


३० प्राशित्रहरणम्.


३१ चमसः


३२ इडापात्री.

(१) कात्यायनः'—अन्येषु ये तु मथ्नन्ति ते रोगभयमाप्नुयुः । प्रथमे मन्थने नियमो नोत्तरेषु च ॥ उत्तरारणिनिष्पन्नः 'प्रमन्थः' सर्वदा भवेत् । योनिसङ्कर युज्यते ह्यन्यमन्थकृत् ॥ आर्द्रा सशुषिरा चैव घूर्णाङ्गी पाटिता तथा । न हिता यज नामरणिश्चोत्तरारणिः ॥ परिधायाहतं वासः प्रावृत्य च यथाविधि । विमृयात्प्राङ्मुखी मावृता वक्ष्यमाणया । चत्रबुध्ने प्रमन्थाग्रं गाढं कृत्वा विचक्षणः । कृत्वोत्तराग्रा ध्नमुपरि न्यसेत् ॥ चत्राधः कीलकाग्रस्थामोविलीमुदगग्रकाम् । विष्टभ्य धार ष्कम्पं प्रयतः शुचिः ॥ त्रिरुद्वेष्ट्याथ नेत्रेण चत्रं पत्न्योऽहतांशुकाः । पूर्वं ण्यान्त्याः प्राच्यग्नेः स्याद्यथा च्युतिः ॥ नैकयापि विना कार्यमाधानं भार्यया अकृतं तद्विजानीयात्सर्वान्वाचारभन्ति यत् ॥ वर्णज्येष्ठ्येन बह्वीभिः सवर्णाभिश्च कार्यमभिच्युतेराभिः साध्वीभिर्मन्थनं पुनः ॥

णकृदुच्यते ॥ (२८)—'अन्तर्धानकटः'—प्रोक्तो द्वादशाङ्गुलसंमितः । अर्धचन्द्रसमाकारः किञ्चिदुच्छ्रितशीर्षकः, ॥ प्रोक्ता (२९)—'हविर्धानपात्री'—तु विपुला द्वादशाङ्गुला । पिष्टपात्री च सैवोक्ता चतुरस्रा प्रकीर्तिता ॥ (३०)— 'प्राशित्रहरणं'—चान्यत्कीर्तितं द्वादशाङ्गुलम्, । चमसानां तु वक्ष्यामि दण्डाः स्युश्चतुरङ्गुलाः ॥ त्र्यङ्गुलस्तु भवेत्स्कन्धो विस्तारश्चतुरङ्गुलः । पलाशाद्वा वटाद्वान्यवृक्षाद्वा (३१)—'चमसाः'—स्मृताः ॥ (३२)—'इडापात्री'—तथा चान्यारत्नि-

३३ यजमानासनम्. 

३४ पत्न्या आसनम्. 

३५ होत्रासनम्. 

३६ ब्रह्मासनम्. 

मात्रा प्रकीर्तिता ॥ (३३)— 'यजमानासनं'—(३४)—पत्न्या आसनं'—च पृथक्पृथक्; । (३५)— 'होत्रासनं'— तथा (३६)— 'ब्रह्मासनं'— विस्तारयोगतः । अरत्निमात्राण्येतानि कथि-


३७ यजमानस्य पात्री.


३८ पत्नीपात्री.


३९ कृष्णाजिनम्.

तानि मनीषिभिः । (३७)— 'यजमानस्य पात्री'— च (३८)—'पत्नीपात्री'—तथैव च । मखे (३९)— 'कृष्णाजिनं'—ग्राह्यं तदखण्डं विशिष्यते, ॥

२०८. 'इध्मादिविचारः.' कातीये—इध्मस्तु द्विगुणः कार्यः ...गुणः स्मृतः । सार्तें प्रादेश इध्मो वा द्विगुणः परिधिस्ततः ॥ ...वित्रं वेदं च त्रयं प्रादेशसंमितम् ॥ अष्टादशसङ्ख्यसमित्क एक-...ङ्ख्यसमित्को वा अरत्निमात्रः पालाशो वा इध्मः कार्यः । पाला-

शाऽभावे वैकङ्कतः कार्यः । तदभावे काश्मर्यमयः । काश्मर्यः (श्रीपर्णवृक्षः) तदभावे बैल्वो वा औदुम्बरो वा खादिरो वा ॥

२०९. 'यज्ञियवृक्षाः' वायुपुराणे—पलाशफल्गुन्यग्रोधाः प्लक्षाश्व-त्थविकङ्कताः । उदुम्बरस्तथा बिल्वश्चन्दनो यज्ञियाश्च ये ॥ सरलो देवदारुश्च शालश्च खदिरस्तथा । समिदर्थे प्रशस्ताः स्युरेते वृक्षा विशेषतः ॥ ग्राह्याः कण्टकिनश्चैवं यज्ञिया एव केचन । पूजिताः समिदर्थेषु पितॄणां वचनं यथा ॥

२१०. 'समिधाविचारः'. कात्यायनः—नाङ्गुष्ठादधिका ग्राह्या समित्स्थूलतया क्वचित् । न निर्मुक्तत्वचा चैव न सकीटा न पाटिता ॥

२११. 'समिधाप्रमाणम्.' कात्यायनः—प्रादेशान्नाधिका नोना च शाखासमायुता । न सपर्णा न निर्वीर्या होमेषु तु विजानता ॥

२१२. 'इध्मार्थे समिद्ग्रहणम्.' मित्रपरिशिष्टे— पर्णाऽश्वत्थखदि-रोहितकोदुम्बराणां तदलाभे सर्ववनस्पतीनां तिन्दुकधवलाऽम्रनिम्बराज-क्षशाल्मल्यरत्नकपित्थकोविदारबिभीतकश्लेष्मातकसर्वकण्टकवृक्षविवर्जितम्

२१३. 'यज्ञार्थेऽग्राह्यवृक्षाः.' वायुपुराणे—निवासा ये च कीटा-लताभिर्वेष्टिताश्च ये । अयज्ञिया गर्हिताश्च वल्मीकैश्च समावृताः ॥ शकुनि-निवासाश्च वर्जयेत्तान् महीरुहान् । अन्यांश्चैवंविधान् सर्वान् यज्ञिय-विवर्जयेत् ॥

२१४. 'अग्राह्यसमिधः.' वायुपुराणे—विशीर्णा विदला ह्रस्वा व-सशुषिराः कृशाः । दीर्घाः स्थूला घुणैर्दुष्टाः कर्मसिद्धिविनाशकाः ॥

२१५. 'ग्राह्यसमिधः.' कात्यायनः—प्रागग्राः समिधो देयाः यागेषु पातिताः । शान्त्यर्थेषु प्रशस्तार्द्रा विपरीता जिघांसति ॥ होतव्या म-र्पिभ्यां दध्ना क्षीरेण संयुता । प्रादेशमात्राः समिधो ग्राह्याः सर्वत्र चैव ॥

२१६. 'सप्तधान्यानि.' षट्त्रिंशन्मते—यवगोधूमधान्यानि ति-कङ्गुश्च मुद्गकाः । श्यामकाश्चणकाश्चैव सप्तधान्यमुदाहृतम् ॥

२१७. 'अष्टादशधान्यानि.' हेमाद्रौ—यवगोधूमधान्यानि ति-कङ्गुकुलत्थकाः । माषा मुद्गा मसूराश्च निष्पावाः श्यामसर्षपाः ॥ नीवारा आढक्योऽथ सतीनकाः । चणकाश्चीनकाश्चैव धान्यान्यष्टा-

२१८. 'होमद्रव्याणि.' चण्डीहोमविधिः— पायसान्नैस्त्रिम-क्षारम्भाफलादिभिः । मातुलुङ्गैरिक्षुखण्डैर्नारिकेलयुतैस्तिलैः ॥ ज-रात्रफलैरन्यैर्मधुरवस्तुभिः ॥

२१९. 'होमे उक्तधान्यानि'. कात्यायनः—कृतमोदनसक्त्वादि तण्डुलादि कृताकृतम् । व्रीह्यादि चाकृतं प्रोक्तमिति वेद्यं त्रिधा बुधैः ॥ स्मृत्यन्तरे—हविष्यान्नं तिला माषा नीवारा व्रीहयो यवाः । इक्षवः शालयो मुद्गाः पयो दधि धृतं मधु ॥ हविष्येषु यवा मुख्यास्तदनु व्रीहयः स्मृताः । व्रीहीणामप्यलाभे तु दध्ना वा पयसापि वा ॥ यथोक्तवस्त्वसम्पत्तौ ग्राह्यं तदनुकल्पतः । यवानामिव गोधूमा व्रीहीणामिव शालयः ॥

२२०. 'आहुतयः'—बृहस्पतिः—प्रस्थं धान्यं चतुःषष्टिराहुतेः परिकीर्तितम् । तिलानां तु तदर्धं स्यात्तदर्धं स्याद्घृतस्य च । बौधायनः—व्रीहीणां च यवानां च शतमाहुतिरिष्यते इति ॥

२२१. 'अग्निप्रज्वलनम्.' आपस्तम्बः—न कुर्यादग्निधमनं कदाचिद्व्यजनादिना । मुखेनैव धमेदग्निं धमन्या वेणुजातया ॥ ( नाग्निं मुखेनेति तु यल्लौकिके योजयन्ति तत् ) ॥

२२२. 'होमनिषेधः' हरिहरभाष्ये—क्षुत्तृट्क्रोधसमायुक्तो हीनमन्त्रो जुहोति यः । अप्रवृद्धे सधूमे वा सोऽन्धः स्यादन्यजन्मनि ॥ स्वल्पे रूक्षे सस्फुलिङ्गे वामावर्ते भयानके । ऊर्ध्वं काष्ठैश्च सम्पूर्णे फूत्कारवति पावके ॥ कृष्णार्चिषि सुदुर्गन्धे तथा लिहति मेदिनीम् । आहुतीर्जुहुयाद्यस्तु तस्य नाशो भवेद् ध्रुवम् ॥

२२३. 'प्रैषपद्धतिः.' ब्राह्मणसर्वस्वे हलायुधः—ऋचो यजूंषि सामानि प्रैषाश्चैते मन्त्रसंज्ञाः । तत्र ऋग्वेदसामवेदयोस्तु मन्त्रा 'उच्चैः' प्रयोज्याः ॥ यजुर्वेदमन्त्रा 'उपांशु' प्रयोज्याः ॥

२२४. 'ब्राह्मणभोजनम्.' यज्ञपार्श्वे—गर्भाधानादिसर्वेषु ब्राह्मणान् भोजयेद्दश । आवसथ्ये चतुर्विंशदग्न्याधाने शतात्परम् ॥ आग्रयणे प्रायश्चित्ते ब्राह्मणान् दश पञ्च वा । सहस्रं भोजयेत्सोमे ब्राह्मणानां शतं पशौ ॥ चातुर्मास्येषु चत्वारि शतानि च सुरामखे । अयुतं वाजपेये च [illegible]मेधे चतुर्गुणम् ॥

२२५. 'ब्राह्मणाय दक्षिणाविचारः.' कात्यायनः—ब्राह्मणे [illegible] देया या यत्र परिकीर्तिता ॥ कर्मान्तेऽनुच्यमानायां पूर्णपात्रादिका [illegible] यावता बहु भोक्तुस्तु तृप्तिः पूर्णेन जायते ॥

[illegible]६. 'अथ पृष्ठोदिविविधानम्.' कात्यायनपरिशिष्टसूत्रे—अ-

थातो धर्मजिज्ञासा केशान्तादूर्ध्वमपत्नीकऽउच्छिन्नाग्निरनग्निको वा प्र
वासी ब्रह्मचारी चान्वग्निरिति ग्रामादग्निमाहृत्य, पृष्ठोदिवीत्यधिष्ठाप्य
समिद्वमिति द्वाभ्यामुपस्थानं व्याहृतिभिस्त्रिभिश्च सावित्र्या प्रज्वाल्य
ताꣳसवितुस्तत्सवितुर्विश्वानि देवसवितरिति, पुनस्त्वेति समिन्ध
पूर्ववद्दक्षतैर्हुत्वा पाकं पचेत्तत्र वैश्वदेवं कुर्याद्ब्रह्मणे प्रजापतये गृ
ह्याभ्यः कश्यपायानुमतये विश्वेभ्यो देवेभ्योऽग्नये स्विष्टकृतऽइत्युप
स्पृश्य पूर्ववद्बलिकर्म, नैवं कृते वृथा पाको भवति । न वृथा पा
पचेन्न वृथा पाकमश्नीयादत्र पिण्डपितृयज्ञपक्षाद्याग्रयणानि कुर्यात्
इति कात्यायनोक्तं पृष्ठोदिविविधानपरिशिष्टम् ॥

२२७. 'कुण्डसंस्कारादिकर्म.' पारस्करः—परिसमुह्योपलिप्यो
ल्लिख्योद्धृत्याभ्युक्ष्याग्निमुपसमाधाय दक्षिणतो ब्रह्मासनमास्ती
प्रणीय परिस्तीर्यार्थवदासाद्य पवित्रे कृत्वा प्रोक्षणीः संस्कृत्यार्थ
प्रोक्ष्य निरूप्याधिश्रित्य पर्यग्निं कुर्यात् स्रुवं प्रतप्य संमृज्याभ्यु
पुनः प्रतप्य निदध्यादाज्यमुद्वास्योत्पूयावेक्ष्य प्रोक्ष्य प्रोक्षणी
पूर्ववदुपयमनकुशानादाय समिधोऽभ्याधाय पर्युक्ष्य जुहुयादेष
विधिर्यत्र क्वचिद्धोमः । पर्यग्निकरणं वा कर्त्तव्यम् शृते वारत्रयस्
प्युक्तत्वात् ॥

२२८. 'अग्निहोत्रे अग्निनामानि.' ब्राह्मणसर्वस्वे हलायुधः—
वसथ्याहवनीयौदक्षिणाग्निस्तथैव च । अन्वाहार्यो गार्हपत्य इत्येते पञ्च वह्न

२२९. 'अग्निहोत्रफलम्.' गृह्यकाण्डे—नावसथ्यात्परो धर्मो
वसथ्यात्परं तपः । नावसथ्यात्परं दानं नावसथ्यात्परं धनम् ॥ ना
थ्यात्परं श्रेयो नावसथ्यात्परं यशः । नावसथ्यात्परा सिद्धिर्नावसथ्या
गतिः ॥ नावसथ्यात्परं स्थानं नावसथ्यात्परं व्रतम् ॥

२३०. अथ 'श्रौत सायंप्रातरग्निहोत्रहोमप्रयोगौ'—तत्रादौ
सायंहोमप्रयोगः । कर्ता 'स्नात्वाचम्य प्राणानायम्य' देशकालौ
ॐ तत्सत्परमेश्वरप्रीतये उद्धरणपूर्वकममुकद्रव्येण सायंप्रात

(१) अस्मिन् प्रयोगे संक्षेपेण दर्शिता मन्त्राः श्लोका वा 'श्रौतप्रातर्होमे'
(२) श्रौताचमनं तु देव्यास्त्रयः पादाः ३ । आपोहिष्ठेति नव पादाः
व्याहृतयो ७ । देवीप.दत्रय ३ । द्वेधा विभक्तं देवीशिरश्चेति २५ । चतुर्विंशति स्

होष्यामि । ) तत्रेदानीं सायमग्निहोत्रं होष्यामीति सङ्कल्प्य । गार्हपत्याग्नेः सभ्यस्य चोद्धरणं कृत्वा आहवनीयकुण्डे दक्षिणाग्निकुण्डे च पञ्च 'भूसंस्काराः' कार्याः । ते यथा —वज्रं गृहीत्वा १ दर्भैः परिसमुह्य २ गोमयोदकेनोपलिप्य ३ वज्रेणोल्लिख्य ४ अनामिकाङ्गुष्ठाभ्यामुद्धृत्य ५ उदकेनाभ्युक्ष्य । ततो गार्हपत्यकुण्डादग्निमाहवनीयदक्षिणाग्निकुण्डयोर्नयेत् । एवं गार्हपत्याहवनीयदक्षिणाग्निसभ्यसंज्ञकानां चतुर्णां ( श्रौताग्नीनां ) प्रदीपनं कृत्वानन्तरमावसथ्यस्यो ( स्मार्तस्यो ) द्धरणं कार्यम् । ततः अन्तरेणाग्निं गत्वा दक्षिणेन वा प्रदक्षिणमाहवनीयं परीत्योपविशति यजमानः पत्नी च यथादेशं ( अप आचामत उभौ ) । **वृष्टिरसि वृश्च मे पाप्मानꣳसत्येन व्रतमुपैम्यापः सत्यमयी व्रतम्** । ततो **द्विराचमनम्** । ( अपरेणाहवनीयं मकराकारकूर्चं निदधाति । ततस्तमाहवनीयाग्निं निवद्धैः कुशपरिस्तरणैः कुशैर्वा पुरस्ताद्दक्षिणतः पश्चादुत्तरतश्च प्रागुदगग्रतः परिस्तीर्य । इतरथावृत्तिः । एवं गार्हपत्यदक्षिणाग्न्योः परिस्तरणं कार्यम् । पयोहोमे गां धुक्ष्व । गार्हपत्यस्योत्तरतः पृथक्कृतेष्वङ्गारेषु तां दुग्धस्थालीमधिश्रपयति । तृणेनावज्योत्यासिच्यापः पुनरवज्योत्य त्रिरुद्वासयत्युदक् । तण्डुलहोमे तु गां धुक्ष्वेत्यादेरभावः । आदौ गार्हपत्यस्य पर्युक्षणम् । गार्हपत्यादुदकधारां निनयत्याहवनीयम् । आहवनीयं पर्युक्ष्य । वैकङ्कतꣳस्रुक्स्रुवं प्रतप्य । पाणिना संमार्ष्टि । पुनः प्रतप्य । ) **उन्नेष्यामि ॐ उन्नय** । ( यजमानस्तिष्ठन् । चतुरः स्रुवानुन्नयति । प्रथमः । द्वितीयः । तृतीयः । चतुर्थः । स्रुग्दण्डोपरि समिधं धारयन्नुत्थाय । अध्यधिगार्हपत्यादाहवनीयꣳहरति । मुखमात्रे धारयन् । मध्ये निगृह्य । उद्गृह्य । उपविश्य । समिधमादधाति । ) **अग्निं ज्योतिषं त्वा वायुमतीं प्राणवतीꣳस्वर्ग्योꣳस्वर्गायोपदधामि भास्वती** । प्रदीप्तामभिजुहोति । दक्षिणं जान्वाच्य—**ॐ सजूर्देवेन । सवित्रा सजूरात्र्येन्द्रवत्या । जुषाणोऽअग्निर्वेतु स्वाहा** । * * १$\frac{१०}{३}$ ॥

२[illegible]र्थांशं हुत्वा ) इदमग्नये न मम । ( स्रुचं कुशेषु निधाय गार्हपत्य[illegible] । होष्यन्यसिस्मिन् उत्तरां भूयसीम् ) । ॐ **उपांशु प्रजापतये** [illegible]**स्वाहा** । इदं प्रजापतये न मम । स्रुचं द्विः प्रकम्प्य कूर्चे नि[illegible] ) ॐ **नमो देवेभ्यः** । ॐ **स्वधा पितृभ्यः** । ( अप उप-

स्पृश्य । इतरयोश्च पुष्टिकामः स्थाल्या स्रुवेण )—। ॐ इह पुष्टिं पुष्टि-पतिर्दधात्विह प्रजाः रमयतु प्रजापतिः । अग्नये गृहपते रयिमते पु-ष्टिपतये स्वाहा । इदमग्नये गृहपतये रयिमते पुष्टिपतये न मम । ॐ प्रजापतये स्वाहा । इदं प्रजापतये न मम । ) दक्षिणाग्नौ ( । तू-ष्णीं समित्प्रक्षेपः ) । ॐ अग्नयेऽन्नादायान्नपतये स्वाहा । इदमग्न-येऽन्नादायान्नपतये न मम । ॐ प्रजापतये स्वाहा । इदं प्रजाप-तये न मम ॥ ( स्रुचिस्थं हुतद्रव्यशेषं पात्रान्तरे गृहीत्वा । भक्षणार्थं बहिर्गत्वा अनामिकया द्विः प्राश्नाति । पात्रस्यास्वादनं ) उत्सृज्य निर्लेढि ( आचम्य द्विः । आहवनीयसमीपमागत्य स्रुच्युदकं पूरयित्वा । उत्सिञ्चति । आहवनीयोत्तरतः ) । ॐ देवाञ्जिन्व । ( पुनः पूर्य ) ॐ पितॄञ्जिन्व । ( दक्षिणतः पुनः पूर्य । उदुक्षति ) । ॐ सप्तऋषीञ्जि-न्व । ( ईशान्ये पुनः पूर्य । कुशेषु स्थाने त्रिर्निषिञ्चति प्राक्संस्थम् ) ॐ अग्नये पृथिवीक्षिते स्वाहा । ॐ पृथिव्याऽअमृतं जुहोमि स्वाहा । ॐ अमृते ऽअमृतं जुहोमि स्वाहा ॥ ( स्रुक्स्रुवमाहवनीये प्रतप्य । कुशेषु निदधाति । समिधमादधाति । सर्वेषु यथा पर्युक्षितम् ) ॐ समिदसि समिद्धोमे ऽअग्ने दीदिहि समिद्धाते ऽअग्ने दीद्यासम् ( आहवनीयसमीपमागत्य तिष्ठत् । आदौ गार्हपत्यस्योपस्थानम् ) 'उपस्थानम्'—ॐ भूर्भुवस्वः । सुप्रजाः । प्रजाभिः स्याꣳ सुवीरो । वीरैः । सुपोषः । पोषैः * * । २ ( उपविश्य ) । महेन्द्रादाहवनीयाय नमः । ( गार्हपत्ये ) । भूर्भुवः स्वः सुप्र० । * * ३ $\frac{३७}{३}$ ॥ ( शय्यासनम् । वा पत्ये ) । ॐ यमाय राज्ञे गार्हपत्याय नमः । ( ततः पूर्ववत् धारावर्ज्यं ( पर्युक्षणम् ) वाग्विसर्जनम् ( उभौ स्वासने उपविश्य । आचम्य ॐ विद्युदसि विद्य मे पाप्मानं जह्ययपोवभृथमभ्युपैमि मयि त्यङ्गोषु मे व्रतम् । द्विराचम्य । विष्णवे नमः । ( सञ्चरविमोक्ष-र्हपत्यपश्चादुपविश्य ) ॐ नडाय नैषधाय अन्वाहार्यपचनाय अनश्नुते साङ्गमनाय सभ्याय नमः । असते पांसुपाय भस्म नमः ॥ नर्यभस्म परब्रह्म यतो मुक्तिप्रसाधकम् । तयोरेक

"घृतं च सार्षपं तैलं यत्तैलं पुष्पवासितं।
~~अन्य द्रव्य युतं तैलं~~
न दोषः पक्व तैलेषु स्नानाभ्यंगेषु नित्यशः॥"
—(यमः)

"पुत्रजन्मनि संक्रान्तौ श्राद्धे जन्मदिने तथा
नित्यस्नाने च कर्तव्ये तिथि दोषो न विद्यते॥ (गर्गः)

व्यं संसारभयनाशनम् ॥ यत्क्रमणात्य० ॥ नमस्ते गा० ॥ नमः सभ्याव० ॥ चतुर्भिं० ॥ यस्य स्मृ० ॥ 'अर्पणम्'—अनेन ( यजमानानुज्ञया ) अमुकद्रव्येण श्रौतसायंहोमाख्येन कर्मणा भगवान् श्रीयज्ञपुरुषः प्रीयतां न मम ॥ ॐ तत्सद्ब्रह्मार्पणमस्तु ॥ 'विशेषप्रार्थना'— ॐ इदं वि० । ४ $\frac{१५}{५}$ ॥ त्रीणि प० । ५ $\frac{४३}{३४}$ ॥ तद्विष्णोः० । ६ $\frac{५}{६}$ ॥ तद्विप्रा० । ७ $\frac{४४}{३४}$ ॥ विष्णो र० । ८ $\frac{२१}{५}$ ॥ त्र्यायुष० । ९ $\frac{६२}{४}$ ॥ ( भस्म ललाटे धारयेत् ) ॥ ॐ नमो ब्रह्मणे नमो अस्त्वग्नये नमः पृथिव्यै नम ओषधीभ्यः । नमो वाचे नमो वाचस्पतये नमो विष्णवे महते करोमि ॥ ॐ शान्तिः शान्तिः शान्तिः ॥ इति श्रौतः सायंहोमप्रयोगः ॥

२३१. 'अथ श्रौतः प्रातर्होमप्रयोगः'—( स्नानं कृत्वा ) 'पञ्चभूसंस्काराः'—( वज्रं गृहीत्वा । दर्भैः परिसमुह्य ) । गोमयोदकेनोपलिप्य । वज्रेणोल्लिख्य । अनामिकाङ्गुष्ठाभ्यामुद्धृत्य । उदकेनाभ्युक्ष्य । इदमाहवनीयस्य । एवं दक्षिणाग्नेः ) उद्धरेति—( यजमानो ब्रूयात् ) । (आचम्य । सुमुखश्चेत्यादि० । देशकालौ सङ्कीर्त्य ) यथा—'सङ्कल्पः'—ॐ तत्सत्परमेश्वरप्रीतये उद्धरणपूर्वकममुकद्रव्येण प्रातरग्निहोत्रं होष्यामि ॥ 'उद्धरणम्'—( अन्तरेणापराग्निं गत्वा दक्षिणेन वा प्रदक्षिणमाहवनीयं परीत्योपविशति । यजमानः पत्नी च यथादेशम् । अप आचामत उभौ ) ॐ वृष्टिरसि वृश्च मे पाप्मानꣳ सत्येन व्रतमुपैम्यापः सत्यमयी व्रतम् ॥ ततो 'द्विराचमनम्' । अपरेणाहवनीयं कूर्चं निदधाति । आहवनीयस्य परिस्तरणम् । कुशैः परिस्तरणैर्वा पुरस्ताद्दक्षिणतः पश्चादुत्तरतश्च प्रागग्रमुदगग्रं च परिस्तीर्य । एवं गार्हपत्यदक्षिणाग्न्योः परिस्तरणम् । 'पयोहोमे' गां धुक्ष्व । तण्डुलहोमे गां धुक्ष्वेत्यादेरभावः । ( केचित्तु उदकधारां निनयन्ति ) । गार्हपत्यस्योत्तरतः पृथक्कृतेष्वङ्गारेषु तां दुग्धस्थालीमधिश्रपयति । तृणेनावज्योत्य । आसिञ्चयापः । पुनरवज्योत्य । २[illegible]सयत्युदक् । ततो गार्हपत्यस्य पर्युक्षणम् । ततो दक्षिणाग्नेः पर्यु[illegible] । गार्हपत्यादुदकधारां निनयत्याहवनीयम् । आहवनीयं पर्युक्ष्य । [illegible]ꣳस्रुक् स्रुवं प्रतप्य । पाणिना संमार्ष्टि । पुनः प्रतप्य ) उ[illegible]—ॐ उन्नय । ( यजमानस्तिष्ठन् ) चतुरः स्रुवानुन्नय-

ति । प्रथमः । द्वितीयः । तृतीयः । चतुर्थः । स्रुग्दण्डोपरि समिधं धा-
रयन्नुत्थाय । अध्यधि गार्हपत्यादाहवनीयꣳहरति । मुखमात्रे धारयन् ।
मध्ये निगृह्य । उद्गृह्य । उपविश्य । समिधमादधाति । सूर्य्यो ज्योतिः
त्वा वायुमतीं स्वर्ग्याꣳ स्वर्गायोपदधामि भास्वती । प्रदीप्तामभिजु-
होति ॥ (दक्षिणं जान्वाच्य) । ॐ अग्निर्ज्ज्योतिर्ज्ज्योतिरग्निः
स्वाहा सूर्य्यो ज्ज्योतिर्ज्ज्योतिः सूर्य्यः स्वाहा । अग्निर्व-
र्चो ज्ज्योतिर्व्वर्च्चः स्वाहा सूर्य्यो वर्चो ज्ज्योतिर्व्वर्च्चः स्वाहा
ज्ज्योतिः सूर्य्यः सूर्य्यो ज्ज्योतिः स्वाहा ।१⁹⁄₃ ॥ * *।
सजूर्द्देवेन सवित्रा सजूरुषसेन्द्रवत्या । जुषाणः सूर्य्यो
वेतु स्वाहा । २⁹⁄₃॥ चतुर्थांशं हुत्वा । इदं सूर्याय न मम । (स्रुचं
कुशेषु निधाय गार्हपत्यमवेक्षते । होष्यन्यसिस्मिन् उत्तरां भूयसीम्) ॐ
उपांशु प्रजापतये उच्चैः स्वाहा । इदं प्रजापतये न मम । (स्रुचं त्रिः
प्रकम्प्य निदधाति) ॐ नमो देवेभ्यः । ॐ स्वधा पितृभ्यः । (अ
उपस्पृश्य इतरयोश्च पुष्टिकामः स्थाल्याः स्रुवेण) । ॐ इह पुष्टि
पुष्टिपतिर्दधात्विह प्रजाः रमयतु प्रजापतिः । अग्नये गृहपतये रयिमते
पुष्टिपतये स्वाहा ॥ इदमग्नये गृहपतये रयिमते पुष्टिपतये
मम । ॐ प्रजापतये स्वाहा । इदं प्रजापतये न मम । (
क्षिणाग्नौ । तूष्णीं समित्प्रक्षेपः) ॐ अग्नयेऽन्नादायान्नपतये
स्वाहा । इदमग्नयेऽन्नादायान्नपतये न मम । ॐ प्रजापतये स्वाहा
इदं प्रजापतये न मम ॥ (स्रुचिस्थं हुतद्रव्यम् । शेषं पात्रान्तरे
त्वा । भक्षणार्थं वहिर्गत्वा अनामिकया द्विः प्राश्नाति । पात्रस्या-
दनम् (उत्सृज्य निर्लेढि) । आचम्य द्विः । आहवनीयसमी-
गत्य स्रुच्युदकं पूरयित्वा उत्सिञ्चति । आहवनीयोत्तरतः) ॐ
वाञ्जिन्व । (पुनः पूर्यं) । ॐ पितॄञ्जिन्व । (दक्षिणतः पुनः
उदुक्षति) । सप्तऋषीञ्जिन्व । (ईशान्ये पुनः पूर्यं । कुशेषु स्थाने
निषिञ्चति । प्राक्संस्थम्) । ॐ अग्नये पृथिवीक्षिते स्वाहा । ॐ
व्याऽअमृतं जुहोमि स्वाहा । ॐ अमृतेऽअमृतं जुहोमि स्वा
(स्रुक्स्रुवमाहवनीये प्रतप्य । कुशेषु निदधाति । समिधमादधाति

पु यथा पर्युक्षितम् ) ॥ ॐ समिदसि समिद्धोमेऽग्नेदीदिहि समिद्धा तेऽअग्ने दीद्यासम् ॥ ( आहवनीयसमीपमागत्य तिष्ठन् । आदौ गार्हपत्यस्योपस्थानम् )—'उपस्थानम्'—ॐ भूर्भुवः स्वः सुप्रजाः प्रजाभिः स्याᳬसुवीरो वीरैः सुपोषः पोषैः । * * ॥ २$\frac{३७}{३}$ ॥ ( उपविश्य ) महेन्द्रायाहवनीयाय नमः । ( गार्हपत्य । ) ॐ भूर्भुवः स्वः सु० ॥ ३$\frac{३७}{३}$ ॥ ( शय्यासनं वा गार्हपत्ये ) । ॐ यमाय राज्ञे गार्हपत्याय नमः । ( ततः पूर्ववत् धारावर्ज्यम् पर्युक्षणम् ( वाग्विसर्जनम् ) । उभयोः । स्वासने उपविश्य । आचम्य । ) ॐ विद्युदसि विद्य मे पाप्मानं जह्ययपोवभृथमभ्युपैमि मयि सत्यङ्गोपु मे व्रतम् ॥ ( द्विराचम्य ) । विष्णवे नमः । सञ्चरविमोकः । ( गार्हपत्यपश्चादुपविश्य ) । ॐ नडाय नैषधाय अन्वाहार्यपचनाय नमः । अनश्रुते साङ्कसनाय सभ्याय नमः । असते पांसुपाय भस्मोद्वापाय नमः ॥ नर्यभस्म परब्रह्म यतो मुक्तिप्रसाधकम् । तयोरेकतरं सेव्यं संसारभयनाशनम् ॥ यत्कर्मणात्यरीरिचं यद्वान्यूनमिहाकरम् । अग्निष्टत् स्विष्टकृद्विद्वान्स्विष्टᳬ सुहुतं करोतु स्वाहा ॥ नमस्ते गार्हपत्याय नमस्ते दक्षिणाग्नये । नमऽआहवनीयाय महावेद्यै नमो नमः ॥ नमः सभ्यावसथ्याभ्यां नमस्ते परमात्मने । विश्वबोधप्रबोधाय नमस्ते श्रौतवह्नये ॥ चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पञ्चभिरेव च । हूयते च पुनर्द्वाभ्यां तस्मै यज्ञात्मने नमः ॥ यस्य स्मृत्या० ॥ 'अर्पणम्'—अनेन ( यजमानानुज्ञया ) अमुकद्रव्येण श्रौतप्रातर्होमाख्येन कर्मणा भगवान् श्रीयज्ञपुरुषः प्रीयतां न मम ॥ ॐ तत्सद्ब्रह्मार्पणमस्तु ॥ (क्षेपकम्)—'विशेषप्रार्थना'—ॐ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूढमस्य पाᳬसुरे स्वाहा । ४$\frac{१५}{८}$ ॥ त्रीणि पदा विचक्रमे विष्णुर्गोपाऽअदाभ्यः । अतो धर्माणि धारयन् । ५$\frac{४३}{३४}$ ॥ तद्विष्णोः । परमम्पदᳬ सदा पश्यन्ति सूरयः । दिवीव चक्षुराततम् । ६$\frac{५}{६}$ ॥ तद्विप्रासो विपन्यवो जागृवाᳬसः समिन्धते । विष्णो-

स्वँस्तपरमस्पदम् । ७ $\frac{४४}{३४}$ ॥ विष्णो रराटमसि विष्णोः श्नप्त्रेस्थो विष्णोः स्यूरसि विष्णोर्ध्रुवोसि । वैष्णवमसि विष्णवे त्वा । ७ $\frac{२१}{५}$ ॥ त्र्यायुषञ्जमदग्नेः कश्यपस्य त्र्यायुषम् । यद्देवेषु त्र्यायुषन्तन्नोऽअस्तु त्र्यायुषम् ॥ ९

( भस्म ललाटे धारयेत् ) ॐ । नमो ब्रह्मणे नमो अस्त्वग्नये नमः पृथिव्यै नम ओषधीभ्यः । नमो वाचे नमो वाचस्पतये नमो विष्णवे महते करोमि ॥ ११ ॥ ॐ शान्तिः शान्तिः शान्तिः ॥ ( इति क्षेपकम् ) ॥ इति श्रौतप्रातर्होमप्रयोगः ॥

२३२. 'अथ सायमौपासनपरिचरणम्.' आवसथ्ये सायं होमप्रयोगः—( स्नात्वा आचम्य प्राणानायम्य ॥ ) 'सङ्कल्पः'—ॐ तत्सत्परमेश्वरप्रीतये उद्धरणपूर्वकममुकद्रव्येण सायंप्रातरौपासनपरिचरणं करिष्यामि । तत्रेदानीं सायमौपासनपरिचरणं करिष्ये इति सङ्कल्प्य उद्धरणं कुर्यात् ॥ ( यजमानः पत्नी च यथादेशम् । आचामत उभौ ) । 'पात्रोपकल्पनम्'—( उपयमनकुशाः समिधस्तिस्रः मणिकोदकं होमद्रव्यं च । उपयमनकुशानादाय तिष्ठन् समिधोऽभ्याधाय मणिकोदकेनाग्नेः प्रदक्षिणं पर्युक्षणम् । वेणुनलिकया प्रदीपनम् ) । ॐ अग्नये स्वाहा । इदमग्नये न मम ॥ ॐ प्रजापतये स्वाहा । इदं प्रजापतये न मम ॥ ( उत्थाय ) 'उपस्थानम्' ॐ समास्त्वाग्नऽऋतवो वर्द्धयन्तु संवत्सराऽऋषयो यानि सत्या । सन्दिव्येन दीदिहि रोचनेन विश्वाऽआभाहि प्रदिशश्चतस्रः । १ $\frac{१}{२७}$ ॥ सञ्चेद्ध्यस्वाग्ने प्रच बोधये नमुच्चतिष्ठ महते सौभगाय । मा च रिषदुपसत्ता ते अग्ने ब्रह्माणस्ते यशसः सन्तु मान्ये । २ $\frac{२}{२७}$ ॥ त्वामग्ने वृणते ब्राह्मणाऽइमे शिवोऽअग्ने संवरणे भवा नः । सपत्नहानोऽ अभिमातिजिच्च स्वेगये जागृ

(१) अस्मिन्प्रयोगे संक्षेपेण दर्शिता मन्त्राः श्लोका वा प्रातरौपासनपरिचरणे द्र

प्रयुञ्जन्। ३$\frac{३}{२७}$॥ इहै वाग्नेऽअधिधारया रयिम्मात्त्वा
निक्रन्पूर्व्वचितो निकारिणः। क्षत्रमग्ने सुयममस्तु तुभ्य-
मुपसत्ता वर्द्धतान्तेऽअनिष्टृतः। ४$\frac{४}{२७}$॥ क्षत्रेणाग्ने स्वा-
युः सꣳरभस्व मित्रेणाग्ने मित्रधेये यतस्व। सजातानां-
म्मद्ध्यमस्थाऽएधि राज्ञामग्ने विहव्यो दीदिहीह।५$\frac{५}{२७}$॥
अतिनिहोऽअति स्रिधोऽत्यचित्तिमत्यरातिमग्ने। वि-
श्वा ह्यग्ने दुरिता सहस्वाथास्मभ्यꣳ सहवीराꣳ र-
यिन्दाः। ६$\frac{६}{२७}$॥ अनाधृष्यो जातवेदाऽअनिष्टृतो वि-
राडग्ने क्षत्रभृद्दीदिहीह। विश्वाऽआशाः प्रमुञ्चन्मा-
नुषीर्भियः शिवेभिरद्य परिं पाहि नो वृधे। ७$\frac{७}{२७}$॥ बृ-
हस्पते सवितर्बोधयैनꣳ सꣳशितञ्चित्सन्तराꣳ सꣳ
शिशाधि। वर्द्धयैनम्महते सौभगाय विश्वंऽएनमनु म-
दन्तु देवाः। ८$\frac{८}{२७}$॥ अमुत्र भूयादध यद्यमस्य बृह-
स्पते ऽअभिशस्तेरमुञ्चः। प्रत्यौहतामश्विना मृत्यु-
मस्माद्देवानामग्ने भिषजा शचीभिः। ९$\frac{९}{२७}$॥ सदस-
स्पतिमद्भुतम्प्रियमिन्द्रस्य काम्म्यम्। सनिम्मेधाम-
यासिषꣳ स्वाहा। १०$\frac{१३}{३२}$॥ याम्मेधान्देवगणाः पित-
रश्चोपासते। तयामामद्य मेधयाग्ने मेधाविनङ्कुरु
स्वाहा। ११$\frac{१४}{३२}$॥ मेधाम्मे वरुणो ददातु मेधामग्निः
प्रजापतिः। मेधामिन्द्रश्च वायुश्च मेधान्धाता ददातु
मे स्वाहा। १२$\frac{१५}{३२}$॥ इदम्मे ब्रह्म च क्षत्रञ्चोभे श्रियम-
श्नुताम्। मयि देवा दधतु श्रियमुत्तमान्तस्यै ते
स्वाहा। १३$\frac{१६}{३२}$॥ अग्ने नय। सुपथा रायेऽअस्मान्विश्व-

श्यानि देव व्वयुनानि व्विद्वान्। युयोद्ध्यस्म ज्जुहुराणमे-
नो भूयिष्ठान्ते नमऽउक्तिं व्विधेम । १४$\frac{३६}{५}$ ॥ तनू-
पाऽअग्नेऽसितन्तन्वम्मे पाहि । आयुर्द्दाऽअग्नेस्यायुर्म्मे
देहि । व्वर्चोदा अग्नेसि व्वर्च्चो मे देहि । ऽअग्ने यन्मे त-
न्न्वाऽऊनन्तन्मऽआपृण । १५$\frac{१७}{३}$ ॥ श्रद्धां० । १६ ॥
काण्डद्व०। १७ ॥ अपुत्राः० । १८ ॥ चतुर्भि० । १९ ॥ प्रमा-
दा० । २० ॥ काले व० ।२१॥ सर्वेपि० ।२२॥ यस्यस्मृ० ।२३॥
ॐ त्र्यायुषं० ।२४॥ भस्म ललाटे धारयेत् ॥ 'प्रार्थना'—ॐ नमो
ब्र० ॥ ॐ शान्तिः शान्तिः शान्तिः ॥ 'अर्पणम्'—अनेन
( यजमानानुज्ञया ) सायमौपासनपरिचरणाख्येन कर्मणा भगवान्
यज्ञरूपी श्रीमहाविष्णुः प्रीयतां न मम ॥ विष्णवे नम इति त्रिः ॥
इति सायमौपासनपरिचरणम् ॥

२३३. अथ 'प्रातरौपासनपरिचरणम्.' आवसथ्ये प्रातर-
मप्रयोगः—( स्नानं कृत्वा आचम्य प्रणानायम्य ) ॥ 'सङ्कल्पः'—ॐ
तत्सत्परमेश्वरप्रीत्यर्थं उदकसिद्ध्यर्थं मणिकोदकं करिष्ये ॥ ( इति
सङ्कल्प्य पश्चादुद्धरणं कुर्यात् ) 'उद्धरणम्' —( आपोरेवतीति परमे-
प्रजापतिर्ऋषिः । आपो देवता । त्रिष्टुप् छन्दः । उदकासेके विनियोगः—
ॐ आपोरेवति क्षयथा हिवस्वक्रतश्चर मृतामृतश्चराय स्वस्थश्च प-
सरस्वती वयोधाः । १ $\frac{\text{सौत्रमन्त्रः}}{\text{पा० गृ० सू०}}$ ॥आपोहिष्ठेति तिसृणां सिन्धुद्वीप
ऋषिः । आपो देवता । गायत्री छन्दः । उदकासेके विनियोगः—
आपोहि ।०। २$\frac{५०}{११}$ ॥ योवः ०। ३$\frac{५१}{११}$ ॥ तस्मा०। ४$\frac{५२}{११}$
( देशकालौ सङ्कीर्त्य ) ॐ तत्सत्परमेश्वरप्रीत्यर्थं प्रातरौपासनस्य प-
रिचरणमहं करिष्ये । ( सूर्याय स्वाहा प्रजापतये स्वाहेत्यनयोर्मन्त्र-
प्रायोमेधा ऋषिः । सूर्यप्रजापती देवते । गायत्रीत्रिष्टुप् छन्दसी । प्रातः
होमे विनियोगः—( तत्र सूर्यं प्रजापतिं तन्दुलैर्यक्ष्ये ) उत्तरतः पात्रा-
कल्पनम् । उपयमनकुशाः । समिधस्तिस्रः ।मणिकोदकम् । होमद्रव्यं

उपयमनकुशानादाय । तिष्ठन् । समिधोऽभ्याधाय । मणिकोदकेनाग्नेः प्रदक्षिणम् पर्युक्षणम् । वेणुधमन्या (नलिकया) —'प्रदीप्तकरणम्'—ॐ सूर्याय स्वाहा । इदं सूर्याय न मम ॥ ॐ प्रजापतये स्वाहा । इदं प्रजापतये न मम ॥ 'उपस्थानम्'—(विभ्राडित्यस्य विभ्राट् सूर्य ऋषिः । सूर्यो देवता । त्रिष्टुप् छन्दः । उदुत्यमिति तिसृणां प्रस्कण्व ऋषिः । सूर्योदेवता । गायत्री छन्दः । तं प्रत्नथेत्यस्य काश्यपावत्सारावृषी । सोमोदेवता । त्रिष्टुप्छन्दः । अयं वेन इत्यस्य वेनऋषिः । सोमोदेवता । त्रिष्टुप्छन्दः । चित्रमित्यस्य कुत्साङ्गिरसऋषिः । सूर्योदेवता । त्रिष्टुप्छन्दः । आन इत्यस्य अगस्त्यऋषिः । सूर्योदेवता । त्रिष्टुप्छन्दः । यदद्येत्यस्य श्रुतकक्षसुतकक्षावृषी । सूर्योदेवता । गायत्रीछन्दः । तरणिरित्यस्य प्रस्कण्वऋषिः । सूर्योदेवता । गायत्रीछन्दः । तत्सूर्यस्येति द्वयोः कुत्सऋषिः । सूर्योदेवता । त्रिष्टुप्छन्दः । बण्महाँ इति द्वयोर्जमदग्निर्ऋषिः । सूर्योदेवता । आद्यस्य बृहतीछन्दः । द्वितीयस्य सतोबृहतीछन्दः । श्रायन्त इवेत्यस्य नृमेधाऋषिः । सूर्योदेवता । बृहतीछन्दः । अद्यादेवा इत्यस्य कुत्सऋषिः । सूर्योदेवता त्रिष्टुप् छन्दः । आकृष्णेनेत्यस्य हिरण्यस्तूपाङ्गिरसावृषी । सूर्योदेवता त्रिष्टुप् छन्दः । सूर्योपस्थाने विनियोगः )—ॐ **विभ्राड्बृह० । ५ ३०/३३ ॥ उदुत्यम्० । ६ ३१/३३ ॥ येनापावक० । ७ ३३/३३ ॥ दैव्याव० । ८ ३२/३३ ॥ तम्प्रत्नथा० । ९ १२/७ ॥ अयं वेन० । १० १६/७ ॥ चित्रन्देवा० । ११ ४६/१३ ॥ आनऽइडा० । १२ ३४/३३ ॥ यदद्य० । १३ ३५/३३ ॥ तरणिर्वि० । १४ ३६/३२ ॥ तत्सूर्य्यस्य० । १५ ३७/३३ ॥ तन्मित्रस्य० । १६ ३८/३३ ॥ बण्महाँ० । १७ ३९/३३ ॥ बट्सूर्य्य० । १८ ४०/३३ ॥ श्रायन्त० । १९ ४१/३३ ॥ अद्यादेवा० । २० ४२/३३ ॥ आकृष्णेन० । २१ ४३/३३ ॥** ( एते मन्त्राः रुद्रे चतुर्थाध्याये द्रष्टव्याः ) **सदसस्पति० । २२ १३/३२ ॥ याम्मेधान्दे० । २३ १४/३२ ॥ मेधाम्मे० । २४ १५/३२ ॥ इदम्मे० । २५ १६/३२ ॥** ( एते मन्त्राः सायमौपासनपरिचरणे द्रष्टव्याः ) ॥ **तच्चक्षुर्दे० । २६ २४/३७ ॥** ( अयं मन्त्रो रुद्रे शान्त्याध्याये द्रष्टव्यः ) ॥ इदं

द्विष्णु०।२७ $\frac{१५}{५}$॥तद्विष्णो०।२८ $\frac{५}{६}$॥ ॐ तद्विप्रासो०।२९ $\frac{५}{२१}$
( एते मन्त्राः श्रौतप्रातर्होमे द्रष्टव्याः )॥ श्रद्धां मेधां यशः प्रज्ञां वि
पुष्टिं श्रियं बलम् । तेजऽआयुष्यमारोग्यं देहि मे हव्यवाह
। ३० ॥ काण्डद्वयोपपाद्याय कर्मब्रह्मस्वरूपिणे । स्वर्गापवर्गदात्रे
यज्ञेशाय नमो नमः । ३१ ॥ अपुत्राः पुत्रिणः सन्तु पुत्रिणः स
पौत्रिणः । निर्धनाः सधनाः सन्तु जीवन्तु शरदां शतम् । ३२
चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पञ्चभिरेव च । हूयते च पुनर्द्वाभ्यां त
यज्ञात्मने नमः । ३३ ॥ प्रमादात्कुर्वतां कर्म प्रच्यवेताध्वरेषु य
स्मरणादेव तद्विष्णोः सम्पूर्णं स्यादिति स्मृतिः । ३४ ॥ काले व
पर्जन्यः पृथिवी सस्यशालिनी । देशोऽयं क्षोभरहितो ब्राह्मणाः
न्तु निर्भयाः । ३५ ॥ सर्वेऽपि सुखिनः सन्तु सर्वे सन्तु नि
मयाः । सर्वे भद्राणि पश्यन्तु मा कश्चिद्दुःखमाप्नुयात् । ३
यस्यस्मृ० । ३७ ॥ॐ त्र्यायुषं० । ३८ $\frac{६१}{४}$ ॥ (भस्म ललाटे धारये
'प्रार्थना' ॐ— नमो ब्रह्मणे० ॥ ( अयं मन्त्रः श्रौते द्रष्टव्यः ॥)
शान्तिः शान्तिः शान्तिः 'अर्पणम्'—अनेन ( यजमानानुज्ञ
अमुकद्रव्येण प्रातरौपासनपरिचरणाख्येन कर्मणा भग
यज्ञरूपी श्रीमहाविष्णुः प्रीयतां न मम । ॐ तत्सद्ब्रह्मार्पणम
विष्णवे नमः इति त्रिः ॥ इति प्रातरौपासनपरिचरणम् ॥

२३४. 'नित्यदानम्.' याज्ञवल्क्यः—यत्र विद्या तपः शीलं
वर्णाचार एव च । श्रुतं वृत्तमिमे चोभे तद्धि पात्रं प्रकीर्तितम् ॥
र्वेथा प्रभवो विप्राः श्रुताध्ययनशालिनः । तेभ्यः क्रियापराः श्रे
भ्योऽप्यध्यात्मवित्तमाः ॥ गोभूतिलहिरण्यादि पात्रे दातव्यमर्चितम्
पात्रे विदुषा किञ्चिदात्मनः श्रेय इच्छता । न विद्यया केवलया
वापि पात्रता । श्रुतं वृत्तमिमे चोभे तद्धि पात्रं प्रकीर्तितम् ॥ आ
कर्मप्रकाशे—गत्वा यद्दीयते दानं तदनन्तफलं स्मृतम् । सहस्रगुण
याचिते तु तदर्धकम्॥ सङ्कीर्त्य देशकालादि तुभ्यं सम्प्रददे इति।
च सत्ताया निवृत्तिमपि कीर्तयेत् । प्रागग्रेषु स्वयं स्थित्वा दाता च
श्वरम् । ध्यात्वा स्वपुण्यमुद्दिश्य दक्षिणां प्रतिपादयेत् ॥ ब्राह्मणं
त्याथ ततः पात्रं विसर्जयेत् ॥ वसिष्ठः—नामगोत्रे समुच्चार्य सम्प्र

चात्मनः। सम्प्रदेयं प्रयच्छन्ति कन्यादाने तु पुँत्रयम्॥ वराहपुराणे—तोयं दद्याद्विजकरे दाने विधिरयं स्मृतः। सकुशोदकहस्तश्च ददामीति तथा वदेत्॥ गौतमः—मनसा पात्रमुद्दिश्य जलं भूमौ विनिक्षिपेत्। विद्यते सागरस्यान्तो दानस्यान्तो न विद्यते॥ महाभारते—एकस्मिन्नप्यतिक्रान्ते दिने दानविवर्जिते। दस्युभिर्मुषितस्येव युक्तमाक्रन्दितुं भृशम्। ('नृसिंहः'—तस्माद्विभवानुसारेण पूगीफलादिकमपि प्रत्यहं देयमिति)॥ संवर्तः—सर्वेषामेव दानानामन्नदानं परं स्मृतम्। सर्वेषामेव जन्तूनां यतस्तज्जीवितं फलम्॥ यस्मादन्नात् प्रजाः सर्वाः कल्पे कल्पेऽसृजत् प्रभुः। तस्मादन्नात् परं दानं न भूतं न भविष्यति॥

२३५. अथ 'नित्यदानप्रयोगः'—(दानकर्ता हस्तौ पादौ प्रक्षाल्याऽचम्य प्राणानायम्य)। सङ्कल्पः—अद्यपूर्वोच्चारितएवंगुणविशेषेण विशिष्टायां शुभपुण्यतिथौ ममाऽत्मनः श्रुतिस्मृतिपुराणोक्तफलप्राप्त्यर्थममुकब्राह्मणाय अमुकदानमहं करिष्ये॥ ततः 'ब्राह्मणपूजनम्'—ॐ भूर्भुवः स्वः ब्रह्मणे इदमासनं—स्वासनम्। ॐ भूर्भुवः स्वः ब्रह्मणे इदं पाद्यं—सुपाद्यम्। ॐ भूर्भुवः स्वः ब्रह्मणे इदमर्घ्यम्—अस्त्वर्घ्यम्। ॐ भूर्भुवः स्वः ब्रह्मणे इदमाचमनीयम्—अस्त्वाचमनीयम्। ॐ भूर्भुवः स्वः ब्रह्मणे गन्धाः पान्तु—सौमङ्गल्यं चास्तु। अक्षताः पान्तु—आयुष्यमस्तु। पुष्पाणि पान्तु—सौश्रियमस्तु। ताम्बूलं पातु—ऐश्वर्यमस्तु। दक्षिणाः पान्तु—बहुदेयं चास्तु। नमोऽस्त्वनन्ताय सहस्रमूर्तये सहस्रपादाक्षिशिरोरुबाहवे। सहस्रनाम्ने पुरुषाय शाश्वते सहस्रकोटीयुगधारिणे नमः॥ सकलाराधनैः स्वर्चितमस्तु। अस्तु (ब्राह्मणः स्वर्चितमिति प्रतिवदेत्)॥ इदममुकदानं सदक्षिणाकं गन्धादिभिरर्चितं अमुकप्रवरान्वितायामुकगोत्रोत्पन्नायामुकशर्मणे तुभ्यमहं सम्पददे। प्रतिगृह्यताम् (ब्राह्मणो वदेत्)—प्रतिगृह्णामीति साङ्गदानफलप्राप्त्यर्थमिमां दक्षिणां तुभ्यमहं सम्पददे॥ ब्राह्मणो वदति—प्रति गृण्हामि॥ (ततो 'ब्राह्मणाशिषो' गृह्णीयात्)—ॐ स्वस्तिनऽइन्द्रो०। १ $\frac{१९}{२८}$॥ शतं भवति शतायुर्वै पुरुषः शतेन्द्रियऽआयुरेवेन्द्रियं वीर्य्यमात्मन्धत्ते॥ २॥ स्वस्तिमन्त्रार्थाः सफलाः सन्तु॥ तथास्तु—इति यजमानो

ब्रूयात् ॥ 'अर्पणम्'—अनेन अमुकद्रव्यस्य मया कृतेन नित्यदाने श्रीपरमेश्वरः प्रीयतां न मम ॥ ॐ तत्सद्ब्रह्मार्पणमस्तु ॥ इति नित्यदानप्रयोगः ॥

२३६. 'मङ्गलपदार्थदर्शनम्.' कात्यायनः—रोचनं चन्दनं ... मृदं गां दर्पणं मणिम् । गुरुमग्निं रविं पश्येन्नमस्येत्प्रातरेव हि ॥ ना... देवः—पूर्वं च सर्पिर्दधिसर्षपांश्च धेनुं सवत्सां वृषभं सुवर्णम् । मृद्गो... स्वस्तिकमक्षतांश्च वह्निं मधु ब्राह्मणकन्यकाश्च ॥ श्वेतानि वस्त्राणि ... शमिं च हुताशनं चन्दनकल्पबीजम् । अश्वत्थवृक्षं च समालभेत तत... कुर्यान्निजधर्मकार्यम् ॥ लोकेऽस्मिन् मङ्गलान्यष्टौ ब्राह्मणो गौर्हुताशनः हिरण्यं सर्पिरादित्य आपो राजा तथाऽष्टमः ॥ एतानि सततं प... न्नमस्येदर्चयेद्बुधः । प्रदक्षिणानि कुर्वीत तस्यायुर्न च हीयते ॥ आयुर्वेदे- आदर्शालोकनं प्रोक्तं माङ्गल्यं कान्तिकारकम् । पौष्टिकं बलमायु... पापालक्ष्मिविनाशनम् ॥

२३७. 'मातृपितृवन्दनम्.' सुमन्तुः—आयुः पुमान्यशः ... कीर्तिं पुष्टिं बलं श्रियम् । पशुं सुखं धनं धान्यं प्राप्नुयात्पितृवन्दना... इति श्रीपुरन्दरोपाह्वविठ्ठलात्मजनारायणेन विरचितायां वा... सनेयाह्निकसूत्रावल्यां प्रथमभागकृत्यानि समाप्तानि ॥



# ॥ अथ द्वितीयभागकृत्यानि ॥

## ॥ स्वाध्यायाध्ययनम् ॥

पुष्पलताकुण्डिका ।



शिष्यगणः । याज्ञवल्क्यः ।



२३८. दक्षः—द्वितीये च तथा भागे वेदाभ्यासो विधीयते । वेदाभ्यासो हि विप्राणां परमं तप उच्यते ॥ ब्रह्मयज्ञः स विज्ञेयः षडङ्गसहितस्तु सः । वेदस्वीकरणं पूर्वं विचारोऽभ्यासनं जपः ॥ ततो दानं च शिष्येभ्यो वेदाभ्यासो हि पञ्चधा । समित्पुष्पकुशादीनां स कालः समुदाहृतः ॥

२३९. 'स्वाध्यायाध्ययनम्.' कात्यायनपरिशिष्टसूत्रे—अथ प्रतिज्ञा । मन्त्रब्राह्मणयोर्वेदनामधेयं तस्मिञ्छुक्ले याजुषाम्नाये माध्यन्दिनीयके मन्त्रे स्वरप्रक्रिया । हृद्यनुदात्तो मूर्ध्न्युदात्तः श्रुतिमूले स्वरित एवं जात्यादयोऽभिहिता ब्राह्मणे तूदात्तानुदात्तौ भाषिकस्वरौ तानस्वराणि छन्दोवत्सूत्राणि[1] । १ ॥ अथान्तस्थानामाद्यस्य[2] पदादिस्थस्यान्यहलसंयुक्तस्य संयुक्तस्यापि रेफोष्मान्त्याभ्यामृकारेण[3] चाविशेषेणादिमध्यावसानेषूच्चारणे जकारोच्चारणं द्विर्भावेप्येवमथापरान्तस्थास्यायुक्तान्यहल्संयुक्तस्योष्मऽऋकारैरेकारसहितोच्चारण[4]मेवं तृतीयान्तस्थस्य[5] क्वचिद्दकारस्य तु संयुक्तस्याविशेषेण सर्वत्रैवमथान्त्यस्यान्तस्थानां[6] पदादिमध्यान्तस्थस्य त्रिविधं गुरुमध्यमलघुवृत्तिभिरुच्चारणमथो मूर्द्धन्योष्मणोऽसंयुक्तस्य[7] ऋमृते संयुक्तस्य च खकारोच्चारणमध्ययनादिकर्मस्वर्थवेलायां प्रकृत्या ।२॥ अथानुस्वारस्य इत्यादेशः 'श', 'ष', स' 'ह', रेफेषु परेषु तस्य त्रैविध्यमाख्यातम् ।

---

(१) वेदाङ्गत्वात् । (२) यकारस्य । (३) हः । (४) रस्य । (५) लस्य । (६) वस्य (७) षस्य ॥

ह्रस्वदीर्घगुरुभेदैर्दीर्घात्परो ह्रस्वो ह्रस्वात्परो दीर्घो गुरौ परे गुरु-
परसवर्णेषप्रक्त्या चान्यत्र विसर्गेष्वीषद्विरामः पदाद्यस्य संयुक्ताक्षरस्येषद्दीर्घता च भवतीषद्दीर्घता च भवतीति । ३ ॥ मध्यन्दिनेन महर्षिणा याज्ञवल्क्याल्लब्धः शाखाविशेषो माध्यन्दिनः उपचारात् ऽधीयते विदन्ति वा माध्यन्दिनाः शिष्याः 'अण्' ॥ तेषामयं स्वाध्यायः वृद्धाच्छः । ततः स्वार्थे 'कन्' । प्रचयजात्यादयः स्वरितभेदाः । तान एकश्रुतिः स्वरः । उदात्तादिस्वरसंस्कारनियमे सूत्राणि छन्दोवत् । वकारस्त्रिविधो ज्ञेयः गुरुर्लघुर्लघुतरः । आदिर्गुरुर्लघुर्मध्ये पदान्ते च लघुतरः ॥ १ ॥ पदस्याद्यन्तमध्ये स्यात् खकारोच्चारणं तथा । तृतीयवर्गयोगे तु 'ष' एव स्यात्सदैव हि । २ । टुकुँयोगे तु नोभवेत् ॥ इति माध्यन्दिनशिक्षा ॥ 'षः' खष्टुमूते चेति केशवशिक्षासूत्रम्—विसर्गेषु किञ्चिद्विरामः तस्य स्पष्टोच्चारणं पदादौ संयुक्ताकारस्य दीर्घोच्चारणम् ॥ अत एवाध्यायसमाप्तौ दीर्घपाठं ब्रुवन्ति ॥ छन्दोवदित्यतिदेशात् सूत्रे विसर्गस्य स्पष्टोच्चारणं कुर्वन्नेति न विद्मः ॥ 'ड' 'ढौ' 'ळ' 'ळ्हा' वेकेषां । 'ड' 'ढौ' 'ळ' 'ळ्ह' आपद्येते ॥ स्वरमध्ये समानपदे इत्यर्थः ॥ इति कातीयप्रातिशाख्ये आश्वलायनप्रातिशाख्ये तु—जिह्वामूलं तालु चाचार्य आह स्थानं डकारस्य तु वेदमित्रः ॥ ळ्हकारतामेति स एव चास्य ढकारः सन्नूष्मणा सम्प्रयुक्तः ॥ १ ॥ द्वयोश्चास्य स्वरयोर्मध्यमेत्य सम्पद्यते डकारो ळकारः ॥ वेदमित्र आचार्यः ॥ डस्य स्थानं तालुसंयुक्तं जिह्वामूलं इत्याद्युक्तम् ॥

२४०. 'पारस्करगृह्यसूत्रे'—प्रत्यङ्मुखायोपविष्टायोपसन्नाय समीक्षमाणाय समीक्षिताय । वेदᳪ समाप्य स्नायाद्ब्रह्मचर्यं वाष्टाचत्वारिंशकं द्वादशकेऽप्येके गुरुणानुज्ञातो विधिविधेयस्तर्कश्च वेदः षडङ्गं न कल्पमात्रे कामं तु याज्ञिकस्योपसङ्गृह्य ॥ 'याज्ञवल्क्यशिक्षायां'

जटा माला शिखा रेखा ध्वजो दण्डो रथो घनः । अष्टौ विकृतयः प्रोक्ताः क्रमपूर्वा महर्षिभिः ॥ अनुलोमविलोमाभ्यां त्रिवारं पठेत्क्रमः । विलोमे पदवत्सन्धिरनुलोमे यथाक्रमम् ॥ ब्रूयात्क्र-

(१) संयुक्ताक्षरे परे ॥ (२) शल्परत्वाभावे ॥ (३) क्षकारे ॥

पर्यासावर्धर्चस्यादितोऽन्ततः। अन्तं चादिं नयेदेवं क्रमं मालेति कीर्त्यते ॥ पदोत्तरां शिखामेव शिखामार्याः प्रचक्षते । क्रमाद्द्वित्रिचतुः पञ्च पदक्रममुदाहरेत् ॥ पृथक्पृथग्विपर्यस्य लेखामाहुः पुनः क्रमात् । ब्रूयादादेः क्रमं सम्यगन्तादुत्तारयेदिति ॥ वर्गे वा ऋचि वा यत्र पठनं स ध्वजः स्मृतः। क्रममुक्त्वा विपर्यस्य पुनश्च क्रममुत्तमम् ॥ अर्धर्चादेवमेवोक्तः क्रमदण्डो विधीयते। पादशोर्धर्चशो वापि सहोक्त्या दण्डवद्रथः ॥ अन्तक्रमं पठेत्पूर्वमादिपर्यन्तमानयेत् । आदिक्रमं नयेदन्तं घनमाहुर्मनीषिण इति ॥

२४१. 'वाङ्माधुरीकरणम्.'—याज्ञवल्क्यशिक्षायाम्—खदिरश्च कदम्बश्च करवीरकरञ्जकौ । एते कण्टकिनः पुण्या क्षीरिणस्तु यशस्विनः ॥ तेनास्यकरणे सूक्ष्मं माधुर्यं चैव जायते। त्रिफलां लवणैर्युक्तां भक्षयेच्छिष्यकः सदा। क्षीणमेधा जनन्येषा स्वरवर्णकरी तथा ॥

२४२. 'अध्ययनप्रकाराः.' याज्ञवल्क्यः—उपनीय गुरुः शिष्यं महाव्याहृतिपूर्वकम् । वेदमध्यापयेदेनं शौचाचारांश्च शिक्षयेत् ॥ वाको वाक्यं पुराणं च नाराशंसीश्च गाथिकाः । इतिहासांस्तथा विद्यां योऽधीते शक्तितोऽन्वहम् ॥

२४३. आचार्यलक्षणम्. हरिहरभाष्ये—सत्यवाक् धृतिमान् दक्षः सर्वभूतदयापरः । आस्तिको वेदनिरतः शुचिराचार्य उच्यते ॥ अन्यच्च-उपनीय तु यः शिष्यं वेदमध्यापयेद्द्विजः । सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते ॥

२४४. 'उपाध्यायः' हरिहरभाष्ये—एकदेशं तु वेदस्य वेदाङ्गान्यथवा पुनः । योऽध्यापयति वृत्त्यर्थे उपाध्यायः स उच्यते ॥ वेदाध्ययनसम्पन्नो वृत्तिमान्विजितेन्द्रियः । न याजयेद्वृत्तिहीनं वृणुयाच्च न तं गुरुम् ॥ पश्चादग्नेरवस्थाप्य ब्रह्मचर्यमगामिति ॥

२४५. 'अध्ययनक्रमः.' धन्वन्तरिः—अथ शुचये कृतोत्तरासङ्गायाव्याकुलायोपस्थितायाध्ययनकाले शिष्याय यथाशक्ति गुरुरुपदिशेत्। पदं पादं श्लोकं वा ते च पदपादश्लोका भूयः क्रमेणानुसन्धेया एवमेकैकशो घटयेदात्मना चानुपठेत्। अद्रुतमविलम्बितमविशङ्कितमनुनासिकं व्यक्ताक्षरमपीडितवर्णमक्षिभ्रुवौष्ठहस्तैरनभिनीतं सुसंस्कृतं नात्युच्चैर्नातिनीचैश्च स्वरैः

पठेन्न चान्तरेण कश्चिद्व्रजेत्तयोरधीयानयोः ॥ यथा—शुचिर्गुरुपरो दक्ष स्तन्द्रानिद्राविवर्जितः । पठेदेतेन विधिना शिष्यः शास्त्रान्तमाप्नुयात् ॥ वाक्सौष्ठवेऽर्थविज्ञाने प्रागल्भ्ये कर्मनैपुणे । तदभ्यासे च सिद्धौ च यतेताध्ययनं ततः ॥ पाणिनिः—हस्तेन वेदं योऽधीते स्वरवर्णसमन्वितम् । ऋग्यजुःसामभिः पूतो ब्रह्मलोके महीयते ॥ हस्तहीनं तु योऽधीते स्वरवर्णविवर्जितम् । ऋग्यजुःसामभिर्दग्धो वियोनिमधिगच्छति ॥ व्यासः—वेदस्याध्ययनं सर्वं धर्मशास्त्रस्य चैव यत् । अजानतोऽर्थं तत्सर्वं तुषाणां कण्डनं यथा ॥ यजुर्वेदभाष्ये—स्वरो वर्णोऽक्षरं मात्रा तत्प्रयोगार्थ एव च । मन्त्रज्ञानं समासेन वेदितव्यं पदे पदे ॥

२४६. 'शिक्षायां ताडनम्.' मनुः—न निन्दां ताडने कुर्यात् पुत्रं शिष्यं च ताडयेत् । अधोभागे शरीरस्य नोत्तमाङ्गे कदाचन ॥

२४७. 'वेदाध्ययनफलम्.' योगी—वेदाभ्यासरतं श्रौतं महायज्ञक्रियापरम् । न स्पृशन्तीह पापानि महापातकजान्यपि ॥

२४८. 'अनध्यायाः'. पारस्करगृह्यसूत्रे—वातेऽमात्रास्वप्रमिति सद्योऽनध्यायः ॥ श्राद्धाशने चोल्कावꣳस्फूर्ज्जद्भूमिचलनाग्न्युत्पातेष्वृतुसन्धिषु चाऽकालमुत्सृष्टेष्वभ्रदर्शने सर्वरूपे च त्रिरात्रं त्रिसन्ध्यं च भुक्त्वार्द्रपाणिरुदके निशायाꣳसन्धिवेलयोरन्तःशवे ग्रामे ग्रामेऽन्तर्वाकीर्तिर्धावतोऽभिशस्तपतितदर्शनाश्चर्याभ्युदयेषु च तत्कालं नीहारे वादित्रशब्द आर्त्तस्वने ग्रामान्ते श्मशाने श्वगर्दभोलूकसृगालसामशब्देषु शिष्टाचरिते च तत्कालं गुरौ प्रेतेपोऽभ्यवेयाद्दशरात्रं चोपरमेत्ससतानूनत्रीणि सब्रह्मचारिणि त्रिरात्रमेकरात्रमसब्रह्मचारिण्यर्धषष्ठान्मासानधीत्योत्सृजेयुरर्धसप्तमासान्वाथेमामृचं जपत्युभा वीयुवा यो नो धर्मः परापतत् परिसख्यानि धर्मिणो विसख्यानि विसृजामहऽइति त्रिरात्रꣳसहोपविप्रतिष्ठेरन् ॥ १४ ॥ याज्ञवल्क्यः—सन्ध्यागर्जितनिर्घातभूकम्पोल्कानिपातने ॥ समाप्य वेदं द्युनिशमारण्यकमधीत्य च । पञ्चदश्यां चतुर्दश्यामष्टम्यां राहुसूतके । ऋतुसन्धिषु भुक्त्वा वा श्राद्धीकं प्रतिगृह्य च । पशुमण्डूकनकुलमार्जारश्वानमूषिकैः ॥ कृतेऽन्तरे त्वहोरात्रं शक्रपाते तथोच्छ्रये । श्वक्रोष्टुगर्दभोलूकसामबाणार्तनिःस्वने ॥ अमेध्यशवशूद्रान्त्यश्मशानपतितान्तिके । देशेऽशुचावात्मनि च

अनाध्याय: (नित्यकर्मणि ।१।२

अध्याय: = अध्ययनम्

आध्याय: = आ अध्याय:

अनाध्याय: = न आध्याय:

एवं तु सम्यगध्ययननिषेधात्
गुरुमुखात् यद् अध्ययनं क्रिय
ते तन्नैव अनाध्यायो, न तु
व्याख्यान चिन्तनादावपीति
बोद्धव्यम् ॥ वेदांगादीना
मध्ययनेऽप्यदोष एव ॥

वेदोपकरणे चैव स्वाध्याये चैव
नैत्यके ॥ नानुरोधोऽस्त्यनध्या
ये होममन्त्रेषु चैव हि ॥

७ विद्याकृत्योगेव ३२०।५६ यमः -
"आगतं चातिथिं दृष्ट्वा नाधीयीतैव
बुद्धिमान्॥ अभ्यनुज्ञापिते तस्मि
न्नध्येतव्यं न संशयः॥
(अभ्यनुज्ञापिते = अनुमति कारिते)

द्युत्स्तनितसम्प्लवे ॥ भुक्त्वार्द्रं पाणिरम्भोऽन्तरर्धरात्रेऽतिमारुते। पांसुवर्षे दिशां दाहे सन्ध्यानीहारभीतिषु ॥ धावतः पूतिगन्धे च शिष्टे च गृहमागते। खरोष्ट्रयानहस्त्यश्वनौवृक्षेरिणरोहणे ॥ सप्तत्रिंशदनध्याया न तांस्तात्कालिकान् विदुः ॥ उशनः—अयने विषुवे चैव शयने बोधने तथा। अनध्यायं प्रकुर्वीत मन्वादिषु युगादिषु ॥

२४९. 'देवपूजा.' कात्यायनपरिशिष्टसूत्रे—ब्राह्मवैष्णवरौद्रसावित्रमैत्रावरुणैस्तल्लिङ्गैर्मन्त्रैरर्चयेत् ॥ योगीश्वरः—ब्राह्मवैष्णवरौद्रैस्तु सावित्रैर्मित्रवारुणैः। तल्लिङ्गैरेव मन्त्रैस्तु अर्चयेत्सुसमाहितः ॥ बृहत्पाराशरसंहितायाम्—ब्रह्माणं वैधसैर्मन्त्रैर्विष्णुं स्वैः शङ्करं स्वकैः। अन्यानपि तथा देवानर्चयेत्स्वीयमन्त्रकैः। मन्त्रन्यासांस्तान्पुरा कृत्वा स्वदेहे देवतासु च ॥ ब्रह्मीभूतः शुचिः शान्तो देवयागमुपक्रमेत् ॥

२५०. 'कालविशेषे पूज्यदेवताः.' स्कान्दे—ब्रह्मा कृतयुगे देवस्त्रेतायां भगवान् रविः। द्वापरे भगवान् विष्णुः कलौ देवो महेश्वरः ॥ अन्यत्र—कलौ विष्णुसूर्यादीनामपि पूजोक्ता ॥ (एतेन कलौ सर्वेषामपि देवानां पूज्यत्वं विधीयत एवेति सिद्धान्तः) ॥ कौर्मे—ब्रह्माणं शङ्करं सूर्यं तथैव मधुसूदनम्। अन्यांश्चाभिमतान्देवान् भक्त्या त्वक्रोधनो नरः। स्वमन्त्रैस्त्वर्चयेन्नित्यं पत्रैः पुष्पैस्तथाम्बुभिः ॥

२५१. 'पूजाविधिः.' नागदेवः—हस्तावारभ्य देवस्य मूर्धान्तं चैव षोडशैः। षोडशाङ्गानि सम्पूज्य ततो देवाग्रतो जपेत् ॥ हुत्वा षोडशभिर्मन्त्रैः षोडशाज्यस्य चाहुतीः। शेषं निवेदयेत्तस्मित् दद्यादाचमनं ततः ॐकारपूर्वकैर्मन्त्रैः षड्भिर्दशभिरेव च ॥

२५२. 'पूजनप्रकाराः.' योगीश्वरः—ध्यात्वा प्रणवपूर्वं तु देवताश्च पृथक् पृथक्। नमस्कारेण मन्त्रेण पुष्पाणि तु निवेदयेत् ॥ (अत्रानेकानामप्येकस्य मुख्यस्यावाहनादिनमस्कारान्तं पूजनं कृत्वा ततः क्रमादन्येषां पूजेत्येवं काण्डानुसमयः। मुख्ये पुष्पाञ्जलिं दत्वा गणेशाद्यर्चनं भवेत् ॥ गणेश एव मुख्यश्चेत्तत्र सूर्यक्रमाद्भवेदिति वचनक्रमाभिधानात्) ॥ नृसिंहपुराणे—मन्त्रा वैदिका नाममन्त्रा वा ग्राह्याः। ब्राह्मे—ॐकारादिसुसंयुक्तं नमस्कारान्तकीर्तितम्। स्वनाम सर्वसत्त्वानां मन्त्र इत्यभिधीते ॥ अनेनैव विधानेन गन्धं पुष्पं निवेदयेत्। एकैकस्य प्रकुर्वीत यथो-

द्दिष्टक्रमेण तु ॥ तत्रैव—मन्त्राच्छतगुणं प्रोक्तं भक्त्या लक्षगुणोत्तरम् । भक्तिमन्त्रसमेतं तु कोटिकोटिगुणोत्तरम् ॥

२५३. 'देवस्पर्शेऽनधिकारः.' नारदीये—स्त्रीणामनुपनीतानां शूद्राणां च नराधिप । स्पर्शने नाधिकारोऽस्ति विष्णोर्वा शङ्करस्य वा ॥ शूद्रो वाऽनुपनीतो वा स्त्री वापि पतितोऽपि वा । केशवं वा शिवं वा स्पृष्ट्वा नरकमश्नुते ॥ ( अत एव देवालये शिवलिङ्गदेव्यादिमूर्तीनां पर्युषित निर्माल्योत्सर्जनपूर्वकं प्रथमपूजनादौ नियुक्ताः 'शूद्रा' ( 'गुरवा' ) इत्यभिधानाः सन्तीति साम्प्रदायः प्रवृत्तः ) ॥

२५४. 'देवार्चनकालः.' मात्स्ये—प्रातर्मध्यन्दिने सायं देवार्चां समारभेत् । अशक्तौ विस्तरेणैव प्रातः सम्पूज्य केशवम् । मध्याह्ने सायं च पुष्पाञ्जलिमपि क्षिपेत् ॥ नृसिंहपुराणे—जलदेवं नमस्कृत्य गच्छेद्गृहं बुधः । पौरुषेण च सूक्तेन ततो विष्णुं समर्चयेत् ॥ मरीचिः—विधाय देवतापूजां प्रातर्होमादनन्तरम् । गुरूक्तेन तु मार्गेण मूल जपेद्बुधः ॥

२५५. 'मध्याह्ने भुक्तस्यापि रात्रौ पञ्चोपचारपूजाप्रका शारदातिलके—आसनस्नानवस्त्राणि भूषणं च विवर्जयेत् । रात्रौ चेने तैश्च पदार्थैः पञ्चभिस्तथा । स्नाने वस्त्रे तथा भक्ष्ये दद्यादाच यकम् ॥

२५६. 'गृहे देवताप्रतिमाविचारः' मात्स्ये—सौवर्णी वापि ताम्री रत्नमयी तथा । शैली दारुमयी वापि लोहसङ्कमयी[1] अङ्गुष्ठपर्वादारभ्य वितस्ति यावदेव तु । गृहेषु प्रतिमा कार्या शस्यते बुधैः ॥ स्मृत्यन्तरे—एका मूर्तिर्न पूज्यैव गृहिणा स्वेष्टमि अनेकमूर्तिसम्पन्नः सर्वान्कामानवाप्नुयात् ॥ गृहे लिङ्गद्वयं नार्च्यं त्रितयं तथा । शङ्खद्वयं तथा सूर्यौ नार्च्यौ शक्तित्रयं तथा ॥ द्वारकायाश्च शालिग्रामशिलाद्वयम् । तेषां तु पूजनेनैव उद्वेगं द्रुही ॥ रविर्विनायकश्चण्डी ईशो विष्णुस्तथैव च । अनुक्रमेण व्युत्क्रमे तु महद्भयम् ॥ अथर्वणरहस्ये हारीतः—शालिग्राम विष्णुर्बाणस्तु शशिशेखरः । चण्डिका काञ्चनी प्रोक्ता स्वर्णमाक्षी तु

(१) लोहसङ्कः पञ्चधातुरसः

नार्मदेयो विघ्नहरो लोहितः प्रस्तरः शुभः । अर्ककान्तस्तु तरणिर्ग्राह्या ह्येवं समासतः ॥ पञ्चानामपि देवानां यथाभागं क्रमेण वा । स्थापनं कारयेद्भक्त्या मुनिभिस्तत्त्वदर्शिभिः ॥ चक्राङ्कमिथुनं पूज्यं शालिग्रामशिलाग्रतः ॥ स्कान्दे—भक्त्या वा यदि वाभक्त्या कलौ मुक्तिमवाप्नुयात् ।

२५७. 'देवप्रतिमाप्रतिष्ठाविचारः'. स्कान्दे–शालिग्रामशिलायास्तु प्रतिष्ठा नैव विद्यते ॥ भविष्ये—बाणलिङ्गानि राजेन्द्र ख्यातानि भुवनत्रये । न प्रतिष्ठा न संस्कारस्तेषां चावाहनं तथा ॥ **भरतमालायां मार्कण्डेयोक्तिः**—कम्बुश्चक्रं शैलभवा नार्मदेयाऽब्जिनीपती । बाणो विष्णुशिला चैषां प्रतिष्ठां नैव कारयेत् ॥ **नाममालायां वृद्धपराशरः**—शैलीं दारुमयीं हैमीं धात्वाद्याकारसम्भवाम् । प्रतिष्ठां वै प्रकुर्वीत प्रासादे वा गृहे नृप ॥ **कालिकासङ्ग्रहे लौगाक्षिः**—गृहे चलार्चा विज्ञेया प्रासादे स्थिरसंज्ञिका । इत्येते कथिता मार्गा मुनिभिः कर्मवादिभिः ॥ **कर्मयोगे भगवद्वाक्यम्**—ये त्वेतदभ्यसूयन्तो नानुतिष्ठन्ति मे मतम् । सर्वज्ञानविमूढांस्तान्विद्धि नष्टानचेतसः ॥

२५८. 'पञ्चायतनदेवताः.' वाचस्पतौ—आदित्यं गणनाथं च देवीं रुद्रं च केशवम् । पञ्चदैवत्यमित्युक्तं सर्वकर्मसु पूजयेत् ॥ तत्रादौ 'शालिग्रामः'. स्कान्दे—शिलाप्यामलकीतुल्या पूज्या सूक्ष्मैव या भवेत् । यथा यथा शिला सूक्ष्मा तथा स्यात्तु महत्फलम् ॥ 'शिवबाणः.' पुराणसङ्ग्रहे—पक्वजम्बूफलाकारं कुक्कुटाण्डसमाकृति । भुक्तिमुक्तिप्रदं चैव बाणलिङ्गमुदाहृतम् ॥ 'गणेशः'—शुण्डादण्डेन दन्ताभ्यां शोभनायामलङ्कृता । एकेन वाथ दन्तेन रक्तबिन्दुभिरन्विता ॥ पार्श्वभागैकवना वक्राभ्यां शोभिता च या । गणेशमूर्ति सा ज्ञेया विघ्नाद्यौघविनाशिनी ॥ 'सूर्यः'—बाह्ये वाभ्यन्तरे वापि चक्रद्वादशसंयुता । सूर्यमूर्तिरिति ख्याता सर्वव्याधिविनाशिनी ॥ 'देवी'—गर्ते वा गर्तमध्ये वा योन्याकारेण चिह्निता । योनेरुपरि मध्ये वा कुण्डलीभूतसर्पवत् ॥ अर्धाङ्किका त्रिरेखाभिर्भूषिता या शिला शुभा । शक्तिकुण्डलिनी सा तु देवानामपि दुर्लभा ॥ शक्तिकुण्डलिनी देवी नित्यं यः पूजयेन्नरः । इन्द्रादिदुर्लभान्भोगान् भुक्त्वा निर्वाणमाप्नुयात् ॥

३ विष्णुपं०



२ शिवपं०



१ गणपतिपं०



४ देवीपं०



५ सूर्यपं०



२५९. 'पञ्चायतनदेवतास्थापनविचारः.' ज्ञानमालायाम्- 'गणेशपञ्चायतनम्'—हेरम्बं तु यदा मध्ये ऐशान्यामच्युतं यजे आग्नेय्यां पञ्चवक्त्रं तु नैर्ऋत्यां द्युमणिं यजेत्। वायव्यामम्बिकां चैव नित्यमतन्द्रितः॥ (ग.ना.शं.सू.दे.) ॥ 'शिवपञ्चायतनम्'—यदा शङ्करं मध्ये ऐशान्यां श्रीपतिं यजेत्। आग्नेय्यां च तथा हंसं नैर्ऋ पार्वतीसुतम्॥ वायव्यां च सदा पूज्या भवानी भक्तवत्सला॥ (शं, र,ग,दे.)॥ 'विष्णुपञ्चायतनम्'—यदा तु मध्ये गोविन्दमीश शङ्करं यजेत्। आग्नेय्यां गणनाथं च नैर्ऋत्यां तपनं तथा॥ वायव्य म्बिकां चैव यजेन्नित्यं समाहितः॥ (ना,शं,ग,र,दे.)॥ 'देवीपञ्चा तनम्'—भवानी तु यदा मध्ये ऐशान्यां माधवं यजेत्। आग्नेय्यां वर्तीनाथं नैर्ऋत्यां गणनायकम्॥ प्रद्योतनं तु वायव्यामाचार्यस्तु प्र येत्॥ (दे,ना,शं,ग,र.)॥ 'सूर्यपञ्चायतनम्'—सहस्रांशुर्यदा ऐशान्यां पार्वतीपतिम्। आग्नेय्यामेकदन्तं च नैर्ऋत्यामच्युतं त वायव्यां पूजयेद्देवीं भोगमोक्षैकभूमिकाम्॥ (सू,शं,ग.ना,दे.)॥ देवः—शम्भौ मध्यगते हरीनहरभूदेव्यो हरौ शङ्करेभास्येनागसुता हरगणेशाजाम्बिकाः स्थापिताः। देव्यां विष्णुहरैकदन्तरवयो लम्बो

जेश्वरेनार्याः शङ्करभागतोऽतिसुखदा व्यस्तास्तु ते हानिदाः ॥ अन्यच्च—स्वस्थानवर्जिता देवाः शोकदुःखभयप्रदाः इति ॥

२६०. 'सदाशिवपार्श्वकाः'.—ग्रन्थान्तरे—बाणरावणचण्डीशनन्दीभृङ्गीरटादयः । सदाशिवप्रसादं ते सर्वे गृह्णन्तु शाम्भवाः ॥ अन्यच्च—बाणरावणचण्डश्च नन्दी भृङ्गीरिटादयः । सदाशिवप्रसादं वै सर्वे गृह्णन्तु शाम्भवाः ॥

२६१. 'विष्णुपार्श्वकाः'.— ग्रन्थान्तरे— विष्वक्सेनोद्धवाक्रूराः सनकाद्याः शुकादयः । महाविष्णुप्रसादं ते सर्वे गृह्णन्तु वैष्णवाः ॥ अन्यच्च—रमाब्रह्मादयो देवाः सनकाद्याः शुकादयः । नारायणप्रसादं वै सर्वे गृह्णन्तु वैष्णवाः ॥

२६२. 'गणेशपार्श्वकाः'.—ग्रन्थान्तरे—गणेशो गालवो गार्ग्यो मङ्गलश्च सुधाकरः । गणेशश्च प्रसादं ते सर्वे गृह्णन्तु गाणपाः ॥ अन्यच्च—गणपो गालवश्चैव मुद्गलश्च सुधाकरः । गणेशस्य प्रसादं वै सर्वे गृह्णन्तु गाणपाः ॥

२६३. 'सूर्यपार्श्वकाः'.—ग्रन्थान्तरे—माठरः पिङ्गलो दण्डः चण्डांशोः परिपार्श्वकाः । प्रभाकरप्रसादं ते सर्वे गृह्णन्तु पार्षदाः ॥

२६४. 'महादेवीपार्श्वकाः'.—ग्रन्थान्तरे—शक्तिरुच्छिष्टचाण्डाली गणेशसविताशशी । महादेवीप्रसादं ते सर्वे गृह्णन्तु पार्षदाः ॥

२६५. 'देवताप्रतिमाप्रतिष्ठाविचारः'.— प्रतिष्ठामयूखे— चैत्रे वा फाल्गुने वाऽपि ज्येष्ठे वा माधवे तथा । माघे वा सर्वदेवानां प्रतिष्ठा शुभदा सिते ॥ ( रिक्ताऽन्यतिथिषु स्यात् सा वारे भौमान्यके तथेति ) ॥ आषाढे द्वे तथा मूलमुत्तरात्रयमेव च । ज्येष्ठाश्रवणरोहिण्यः पूर्वाभाद्रपदा तथा ॥ हस्तोऽश्विनी रेवती च पुष्यो मृगशिरस्तथा । अनुराधा तथा स्वाती प्रतिष्ठासु प्रशस्यते ॥ नारसिंहे तु—तथा महाश्विनो मास उत्तमः सर्वकामदः । देवी तत्र सदा शक्र पांसुनाऽपि प्रतिष्ठिता ॥ भवते फलदा पुंसां कर्कस्थे च वृषस्थिते । न तिथिर्न च नक्षत्रं नोपवासोऽत्र कारणम् ॥ मातृभैरववाराहनारसिंहत्रिविक्रमाः । महिषासुरहन्त्र्यश्च स्थाप्या वै दक्षिणायने ॥ क्वचिन्निषेधः—आर्द्रादिके स्वातिविरामकाले नक्षत्रवृन्दे दशके स्थितेऽर्के । विवाहचौलव्रतबन्धदीक्षासुरप्रतिष्ठादि न कार्यमेव ॥ मुहूर्तमार्तण्डे—जन्माङ्गर्क्षदशेशसद्ग्रहकुजैः सार्कैर्बलिष्ठैर्मृदुक्षिप्रेन्द्रध्रुवभैः स्थिरर्धि-

नूतनौ व्याराह्विभूपस्थितिः । स्वस्वर्क्षैः समृदुध्रुवर्क्षचरभक्षिप्रैः सुरस्था
प्रोचुर्माघयुगे च राधयुगले व्याराह्वि पूर्वाह्णके ॥

२६६. 'नवग्रहादिप्रतिमाः.' याज्ञवल्क्यः—ताम्रकात्स्फटि
द्रक्तचन्दनात्स्वर्णकादुभौ । रजतादयसः सीसात्कार्याः सर्वे 'ग्रहाः'
मात् ॥ 'मूर्तिलक्षणानि.' मात्स्ये—पद्मासनः पद्मकरः पद्मगर्भ
द्युतिः । सप्ताश्वरथसंस्थश्च द्विभुजः स्यात्सदा 'रविः' ॥ श्वेतः श्वेताम्ब
धरो दशाश्वः श्वेतभूषणः । द्विभुजश्च गदापाणिः कर्तव्यो वरदः 'शशी'
रक्तमाल्याम्बरधरः । शक्तिशूलगदाधरः । चतुर्भुजो मेषगमो वरदः स्या
'द्धरासुतः' ॥ पीतमाल्याम्बरधरःकर्णिकारदलद्युतिः । खड्गचर्मगदा
पाणिः सिंहस्थो वरदो 'बुधः' ॥ 'देवदैत्यगुरू' (गुरुशुक्रौ) तद्वत्
तश्वेतौ चतुर्भुजौ । दण्डिनौ वरदौ कार्यौ साक्षसूत्रकमण्डलू ॥ इन्द्रनी
द्युतिः शूली वरदो गृध्रवाहनः । बाणबाणासनधरः कर्तव्योऽर्कसु
'शनिः' ॥ करालवदनः खड्गचर्मशूली वरप्रदः । नीलः सिंहासनस्थ
'राहु' रत्र प्रशस्यते ॥ धूम्रा द्विबाहवः सर्वे गदिनो विकृताननाः ।
ध्रासनगता नित्यं 'केतवः' स्युर्वरप्रदाः ॥ सर्वे किरीटिनः कार्या
लोकसुखावहाः । स्वाङ्गुलेनोच्छ्रिताः सर्वे शतमष्टोत्तरं सदा ॥

२६७. 'गृहे देवागारम्.' नारदपुराणे—स्नानागारं दिशि
च्यामाग्नेय्यामग्निमन्दिरम् । अवाच्यां शयनागारं नैर्ऋत्यां वस्त्रमन्दिर
प्रतीच्यां भोजनागारं वायव्यां पशुमन्दिरम् । भाण्डकोशं तूत्तरस्यामैशा
देवमन्दिरम् । देवानां हि मुखं कार्यं पश्चिमायां सदा बुधैः ॥ अन्य
( गृहे देवागारं वास्तुपुरुषसन्निधौ स्थापयन्ति । किञ्च—देवपूजासमये
स्तुपुरुषस्याप्यर्चनं गन्धाक्षतपुष्पैः कुर्वन्तीति साम्प्रदायः ) ॥

२६८. 'राजोपचाराः.' संस्कारभास्करे—ततः पञ्चामृताभ्य
ङ्गस्योद्वर्तनं तथा । मधुपर्के परिमलद्रव्याणि विविधानि च । पादुका
लनादर्शौ व्यजनं छत्रचामरे । वाद्यार्तिक्यं नृत्यगीतशय्याराजोपचारका

२६९. 'पञ्चोपचाराः.' जाबालिः—ध्यानमावाहनं चैव भ
यच्च निवेदनम् । नीराजनं प्रणामश्च पञ्चपूजोपचारकाः ॥ अन्य
गन्धपुष्पे धूपदीपौ नैवेद्यः पञ्च ते क्रमात् ॥

२७०. 'दशोपचाराः.' ज्ञानम.ञायाम्—अर्घ्यं पाद्यं चा
स्नानं वस्त्रनिवेदनम् । गन्धादयो नैवेद्यान्ता उपचारा दश क्रमात् ॥

२७१. 'षोडशोपचाराः.' ज्ञानमालायाम्—आसनं स्वागतं चार्घ्यं पाद्यमाचमनीयकम् । मधुपर्कार्पणं स्नानं वसनाभरणानि च ॥ सुगन्धः सुमनोधूपौ दीपो नैवेद्य एव च । माल्यानुलेपने चैव नमस्कारो विसर्जनम् ॥ नागदेवः—आवाहनासने पाद्यमर्घ्यमाचमनीयकम् । स्नानं वस्त्रोपवीते च गन्धमाल्यादिभिः क्रमात् ॥ धूपं दीपं च नैवेद्यं नमस्कारं प्रदक्षिणाम् । उद्वासनं षोडशकमेवं देवार्चने विधिः ॥

२७२. 'अष्टत्रिंशदुपचाराः.' ज्ञानमालायाम्—अर्घ्यं पाद्यमाचमनं मधुपर्कमुपस्पृशम् । स्नानं नीराजनं वस्त्रमाचामं चोपवीतकम् ॥ पुनराचमनं भूषा दर्पणालोकनं ततः । गन्धपुष्पे धूपदीपौ नैवेद्यं च ततः क्रमात् ॥ पानीयं तोयमाचामं हस्तवासस्ततः परम् । ( हस्तवासः करोद्वर्तनम् ) । ताम्बूलमनुलेपं च पुष्पदानं ततः पुनः ॥ गीतं वाद्यं तथा नृत्यं स्तुतिं चैव प्रदक्षिणाः ॥ पुष्पाञ्जलिनमस्कारावष्टत्रिंशत्समीरिताः ॥

२७३. 'षोडशोपचारपूजामन्त्राः.' बृहत्पाराशरसंहितायाम्—आद्ययावाहयेद्देवमृचा तु पुरुषोत्तमम् । द्वितीययासनं दद्यात्पाद्यं चैव तृतीयया ॥ अर्घ्यश्चतुर्थ्या दातव्यः पञ्चम्याऽचमनं तथा । षष्ठ्या स्नानं प्रकुर्वीत सप्तम्या वस्त्रधौतकम् ॥ यज्ञोपवीतं चाष्टम्या नवम्या गन्धमेव च । पुष्पं देयं दशम्या तु एकादश्या च धूपकम् ॥ द्वादश्या दीपकं दद्यात्त्रयोदश्या निवेदनम् । चतुर्दश्या नमस्कारं पञ्चदश्या प्रदक्षिणाः ॥ षोडश्योद्वासनं कुर्याच्छेषकर्माणि पूर्ववत् । तच्च सर्वं जपेद्भूयः पौरुषं सूक्तमेव च ॥

२७४. 'वाजसनेयिनां षोडशोपचारपूजाक्रमः.'—१—सहस्रशीर्षेत्यावाहनम् । २—पुरुषऽएवेत्यासनम् । ३—एतावानस्येति पाद्यम् । ४—त्रिपादूर्ध्वमित्यर्घ्यम् । ५—ततोविराडजायतेत्याचमनीयम् । ६—तस्माद्यज्ञादिति स्नानम् । ७—तस्माद्यज्ञात्सर्वहुत इति वस्त्रम् । ८—तस्मादश्वा इति यज्ञोपवीतम् ।९—तंयज्ञमिति गन्धम् । १०—यत्पुरुषमिति पुष्पम् । ११—ब्राह्मणोस्येति धूपम् । १२—चन्द्रमामनस इति दीपम् । १३—नाभ्याऽआसीदिति नैवेद्यम् । १४—यत्पुरुषेणेति द-

(१) यजुर्वेदिनः—चतुर्दश्यां तु ताम्बूलम् ॥ (२) यजुर्वेदिनः—षोडश्या मन्त्रपुष्पयुक्तं नमस्कारश्च सह ॥

क्षिणायुक्तताम्बूलम् । १५—सप्तास्या इति आरार्तिकपूर्वकप्रदक्षिणाः १६—यज्ञेनयज्ञमिति मन्त्रपुष्पयुक्तो नमस्कारः ॥ एवं वाजसनेयिनां षोडशोपचारपूजाप्रकारः ॥

२७५. 'स्नानादिपात्रेषु पदार्थनिक्षेपः.' मन्त्रतन्त्रप्रकाशे—अ क्षतागन्धपुष्पाणि स्नानपात्रे तथा त्रयम् । द्रव्याऽभावे प्रदातव्याः क्षालिता स्तण्डुलाः शुभाः ॥ तण्डुलान्प्रक्षिपेत्तेषु द्रव्याऽभावे तु तत्स्मरन् ॥ अग स्त्यसंहितायाम्—तथाचमनपात्रेऽपि दद्याज्जातीफलं मुने । लवङ्गं कङ्कोलं शस्तमाचमनीयके ॥ शारदातिलके—गन्धतैलमथो दद्यादेक प्रतिमन्त्रतः । दूर्वां च विष्णुक्रान्तं च श्यामाकं पद्ममेव च ॥ पाद्याङ्गा च चत्वारि कथितानि समासतः । कर्पूरमगरुं पुष्पं द्रव्याण्याचमनीय कम् ॥ सिद्धार्थमक्षतांश्चैव दूर्वां च तिलमेव च । यवगन्धफलं पुष्पमष्टा त्वर्घ्यमुच्यते ॥

२७६. 'न्यासाः.' सर्वानुक्रमसूत्रे—यजुषामनियताक्षरत्वादे षां छन्दो न विद्यते । द्रष्टारो ऋषयः स्मर्तारः परमेष्ठ्यादयो दे ताः । मन्त्रान्तरभूताऽग्न्यादिका हविर्भाजः स्तुतिभाजो वा इति

२७७. 'पञ्चाङ्गन्यासाः.' ऋग्विधाने—हृदयं च शिरः शिखा वचं चास्यमेव च । यथा देहे तथा देवे न्यासं कुर्याद्यथाविधि ॥

२७८. 'अथ षडङ्गन्यासप्रयोगः.'—आचम्य[1] प्राणानायम सङ्कल्पः—अद्यपूर्वोच्चारितएवंगुणविशेषेण विशिष्टायां शुभपुण्य थौ ममाऽऽत्मनः श्रुतिस्मृतिपुराणोक्तफलप्राप्त्यर्थममुककर्माङ्गत्वेन डङ्गन्यासांश्च करिष्ये ॥ मनोजूतिरिति मन्त्रस्य । बृहस्पतिर्ऋषिः । बृह स्पतिर्देवता । बृहती छन्दः । हृदयन्यासे जपे विनियोगः—ॐ मनो तिर्ज्जुषतामाज्ज्यस्य बृहस्प्पतिर्य्यज्ञमिमन्तनोत्त्वरिष्टं य ञ्ःसमिमन्दधातु । व्विश्वेदेवासऽइहमादयन्तामो म्प्रतिष्ठ । १ १३/२ ॥ ॐ हृदयाय नमः ॥ अबोध्यग्निरिति स्य । बुधगविष्ठिरा ऋषिः । अग्निर्देवता । त्रिष्टुप् छन्दः । शिरोन्यासे विनियोगः—ॐ अबोद्ध्यग्ग्निःसमिधा जनानाम्प्रति धे मिवायतीमुषासम् । यह्वाऽइव प्प्रवयामुज्जिहानाः

(१) पृष्ठे (४६ परिच्छेद १७१) दर्शितक्रमेण 'आचमनादि' कृत्वा ॥

भानवं÷सिख्वतु नाकुमध्ये । २ २४/१५ ॥ ॐ शिरसे स्वाहा ॥ मूर्द्धानमिति मन्त्रस्य । भरद्वाज ऋषिः । अग्निर्देवता । त्रिष्टुप् छन्दः । शिखान्यासे जपे विनियोगः—ॐ मूर्द्धानन्दिवोऽअरतिम्पृथिव्व्या वैश्वानुरमृतऽआजातमुग्निम् । कुविᳪसुम्राजुमतिथिञ्जनानामासन्ना पात्रञ्जनयन्त देवाः ॥ ३ २४/७ ॥ ॐ शिखायै वषट् ॥ मर्माणि त इति मन्त्रस्य । अप्रतिरथ ऋषिः । मर्माणि देवता विराट् छन्दः । कवचन्यासे जपे विनियोगः—ॐ मर्म्माणि ते वर्म्मणा छादयामि सोमस्त्वा राजामृतेनानुवस्ताम् । उुरोर्व्वरीयो वरुणस्ते कृणोतु जयन्तन्त्वानु देवामदन्तु । ४ ४९/१७ ॥ ॐ कवचाय हुम् ॥ विश्वतश्चक्षुरिति मन्त्रस्य । विश्वकर्मा भौवन ऋषिः । विश्वकर्मा देवता । त्रिष्टुप् छन्दः । नेत्रन्यासे जपे विनियोगः—ॐ विश्वतश्चक्षुरुत । विश्वतोमुखो विश्वतोबाहुरुत विश्वतस्पात् । सम्बाहुब्भ्यान्धमति सम्पतत्रैर्द्यावाभूमी जनयन्देवऽएकः । ५ १९/१७ ॥ ॐ नेत्रत्रयाय वौषट् ॥ मानस्तोक इति मन्त्रस्य । परमेष्ठी ऋषिः । एकरुद्रो देवता । जगती छन्दः । अस्त्रन्यासे जपे विनियोगः—ॐ मा नस्तोके । तनये मा नऽआयुषि मा नो गोषु मा नोऽअश्वेषु रीरिषः । मा नो वीरान्नुद्र भामिनो वधीर्हविष्मन्तः सदमित्त्वा हवामहे । ६ १६/१६ ॥ ॐ अस्त्राय फट् 'अर्पणम्'—अनेन यथाशक्त्याऽमुककर्माङ्गत्वेन कृतेन षडङ्गन्यासाख्येन कर्मणा श्रीअमुकदेवता प्रीयताम् । न मम ॥ ॐ तत्सद्ब्रह्मार्पणमस्तु ॥ इति षडङ्गन्यासप्रयोगः ॥

२७९. 'षोडशाङ्गन्यासाः' बृहत्पाराशरसंहितायम्—अर्चनं सम्प्रवक्ष्यामि विष्णोरमिततेजसः । यत्कृत्वा मुनयः सर्वे परं निर्वाणमाप्नुयुः ॥ अनुष्टुभश्च सूक्तस्य त्रिष्टुबन्तस्य देवताः । पुरुषो यो जगद्बीजं ऋषिर्नारायणः स्मृतः ॥ प्रथमां विन्यसेद्वामे द्वितीयां दक्षिणे करे ॥ तृतीयां वामपादे च चतुर्थीं दक्षिणे न्यसेत् । पञ्चमीं वामजानौ तु षष्ठीं वै दक्षिणे न्यसेत् ॥ सप्तमीं वामकट्यां तु दक्षिणस्यां तथाष्टमीं । नवमीं नाभिमध्ये तु दशमीं

हृदये तथा ॥ एकादशीं वामकुक्षौ द्वादशीं दक्षिणे न्यसेत् । कण्ठे त्रयोद
न्यस्य तथा वक्रे चतुर्दशीम् ॥ अक्ष्णोः पञ्चदशीं चैव विन्यसेन्मू
षोडशीम् । एवं न्यासविधिं कृत्वा पश्चात्पूजां समारभेत् ॥

२८०. अथ 'षोडशाङ्गन्यासप्रयोगः'—आचम्य[1] प्राणानाय
सङ्कल्पः—अद्यपूर्वोच्चारित एवंगुणविशेषेण विशिष्टायां शुभपुण्य
थौ ममाऽऽत्मनः श्रुतिस्मृतिपुराणोक्तफलप्राप्त्यर्थममुककर्माङ्गत्वेन
डशाङ्गन्यासांश्च करिष्ये—ॐसहस्रशीर्षेति[2] षोडशर्चपुरुषसूक्तस्य
नारायणः पुरुषऋषिः । जगद्बीजं पुरुषोदेवता । आद्यानां प
दशानामनुष्टुप् । अन्त्यायास्त्रिष्टुप् । न्यासपूजनाभिषेकेषु विनियोगः
ॐ सहस्रशीर्षा० । १ १/३१ ॥ इति वामकरे ॥ ॐ पुरुष ए०
२ २/३१ ॥ इति दक्षिणकरे ॥ ॐ एतावान्० । ३ ३/३१ ॥ इति वामपादे
ॐ त्रिपादूर्ध्व० । ४ ४/३१ इति दक्षिणपादे ॥ ॐ ततो विराड
५ ५/३१ ॥ इति वामजानौ ॥ ॐ तस्माद्यज्ञात्स० । ६ ६/३१ ॥
दक्षिणजानौ ॥ ॐ तस्माद्यज्ञात्सर्वहुतऽऋचः सा० । ७
इति वामकट्याम् ॥ ॐ तस्मादश्वा० । ८ ८/३१ ॥ इति दक्षि
ट्याम् ॥ ॐ तं यज्ञम्ब० । ९ ९/३१ ॥ इति नाभौ ॥ ॐ यत्पुरु
ष्य० । १० १०/३१ ॥ इति हृदये ॥ ॐ ब्राह्मणो० । ११ ११/३१
इति वामकुक्षौ ॥ ॐ चन्द्रमामनसो० । १२ १२/३१ ॥ इति दक्षिणकु
ॐ नाभ्याऽआ० । १३ १३/३१ इति कण्ठे ॥ ॐ यत्पुरुषे
१४ १४/३१ ॥ इति वक्रे ॥ ॐ सप्तास्यास० । १५ १५/३१ ॥ अक्ष्णोः
ॐ यज्ञेन यज्ञ० ॥ १६ १६/३१ ॥ इति मूर्ध्नि ॥ ( एवं षोड
न्यासान् कृत्वा पूजां समारभेत् ) ॥ 'अर्पणम्'—अनेन षोडशाङ्गन्या
सरूपेण कर्मणा कृतेन अमुकदेवता प्रीयताम् । न मम ॥ ॐ
ब्रह्मार्पणमस्तु ॥ इति षोडशाङ्गन्यासप्रयोगः ॥

( १ ) अस्यां सूत्रावल्यां ( परिच्छेद १७१ पृष्ठ ४६ ) दर्शितक्रमेण आचमन
मादि कार्यम् ॥ ( २ ) अत्र संक्षेपेण दर्शिता मन्त्रा रुद्रे द्रष्टव्याः ॥

२८१. 'पुरुषसूक्तपठनात्फलम्.' योगियाज्ञवल्क्यः—दद्यात्पुरुषसूक्तेन यः पुष्पाण्यप एव वा। अर्चितं स्याज्जगदिदं तेन सर्वं चराचरम्॥ पुष्करः—प्रतिवेदं महाभाग यत्सूक्तं पौरुषं स्मृतम्। सर्वकर्मकरं पुण्यं पवित्रं पापसूदनम्॥ एकैकया ऋचा राम स्नातो दत्त्वा जलाञ्जलिम्। पौरुषेण च सूक्तेन मुच्यते सर्वकिल्बिषात्॥ अन्तर्जलगतो जप्त्वा तथा सूक्तं तु पौरुषम्। सर्वकिल्बिषनिर्मुक्तो यथेष्टां लभते गतिम्॥ अकामः पौरुषं सूक्तं जप्त्वा नित्यमतन्द्रितः। नरो याति महाभाग तद्विष्णोः परमं पदम्॥

२८२. 'भूतादिशुद्धिः.' रामतापिन्याम्—देवो भूत्वा यजेद्देवं नादेवो देवमर्चयेत्। देवार्चायोग्यताप्राप्त्यै भूतशुद्धिं समाचरेत्॥ भूतशुद्धिं विधायैव प्राणस्थापनमाचरेत्। एवं प्राणान्प्रतिष्ठाप्य मातृकान्यासमाचरेत्॥ (भूतादिशुद्धिमाराध्यदेवतायां कुर्यादिति साम्प्रदायः)॥ अन्यच्च—भूशुद्धिः षोडशन्यासा नैव कार्याः सदा बुधैः। नूतनायां तथा मूर्तावथवा पर्ववासरे॥

२८३. अथ 'भूशुद्ध्यादिप्रयोगाः'. 'तत्रादौ भूशुद्धिः'—आचमनम्'—ॐ नमो भगवते रुद्रायेति दशाक्षरमन्त्रस्य। प्रजापतिर्ऋषिः। रुद्रो देवता। विराट् छन्दः। आचमने विनियोगः—ॐ नमो भगवते रुद्राय स्वाहा। ॐ नमो भगवते रुद्राय स्वाहा। ॐ नमो भगवते रुद्राय स्वाहा। 'हस्तप्रक्षालनम्'—ॐ नमो भगवते रुद्राय॥ 'प्राणायामः'—ॐ नमो भगवते रुद्राय। ॐ नमो भगवते रुद्राय। ॐ नमो भगवते रुद्राय॥ 'सङ्कल्पः'—अद्यपूर्वोच्चारितएवंगुणविशेषेण विशिष्टायां शुभपुण्यतिथौ ममाऽऽत्मनः श्रुतिस्मृतिपुराणोक्तफलप्राप्त्यर्थं अशेषपापक्षयकामो धर्मार्थकाममोक्षाणामन्यतमकामो वाऽहं श्रीअमुकदेवतापूजाङ्गत्वेन भूशुद्धिभूतशुद्धिप्राणप्रतिष्ठाऽन्तर्मातृकाबहिर्मातृकान्यासांश्च करिष्ये॥ 'नमस्कारः'—(दक्षिणे)— ॐ सरस्वत्यै नमः। ॐ शङ्खनिधये नमः (वामभागे)—ॐ लक्ष्म्यै नमः॥ ॐ पद्मनिधये नमः॥ 'आसनम्'—पृथिवि त्वयेति मन्त्रस्य। मेरुपृष्ठ ऋषिः। कूर्मो देवता सुतलं छन्दः। आसने विनियोगः—ॐ पृथिवि त्वया धृता लोका देवि त्वं विष्णुना धृता। त्वं च धारय मां देवि पवित्रं कुरु चासनम्॥ 'प्रार्थना'—ॐ विश्वशक्त्यै नमः। ॐ महाशक्त्यै (माया-

शक्त्यै ) नमः । ॐ कूर्मासनाय नमः । ॐ योगासनाय नमः
ॐ अनन्तासनाय नमः । ॐ विमलासनाय नमः । 'मध्ये'—
ॐ परमसुखासनाय नमः । ॐ भूर्भुवःस्वः आत्मासनाय नमः।
(अनेन मन्त्रेण पुष्पादिना आत्मनः आसनदानम् )॥ 'शिखाबन्धनम्'—
ऊर्ध्वकेशि विरूपाक्षि मांसशोणितभोजने । तिष्ठ देवि शिखाबन्धे
चामुण्डे चापराजिते । विष्णोर्नामसहस्रैस्तु शिखाबन्धं करोम्यहम्
इति शिखाबन्धनम् ॥ 'अथ दिग्बन्धः'—अपसर्पन्तु ते भूता
भूता भूमिसंस्थिताः । ये भूता विघ्नकर्त्तारस्ते नश्यन्तु शिवाज्ञया
अपक्रामन्तु भूतानि पिशाचाः सर्वतोदिशम् । सर्वेषामविरोधेन ब्र
ह्मकर्म समारभे । तीक्ष्णदंष्ट्र महाकाय कल्पान्तदहनोपम । भैरवा
नमस्तुभ्यमनुज्ञां दातुमर्हसि ॥ 'तालत्रयकरणम्'— ॐ सर्वभूतनि
वारकाय शार्ङ्गाय सशराय सुदर्शनायाऽस्त्रराजाय हुं फट् स्वाहा
( अनेन मन्त्रेण तालत्रयं कृत्वा ) ॥ ( स्वस्य परितः सर्वदिक्षु) अस्त्रमु
प्रदर्शयेत् । ततः स्वदक्षिणभागे ) ॐ गुरुभ्यो नमः । ॐ परमगु
रुभ्यो नमः । ॐ परमेष्ठीगुरुभ्यो नमः । ॐ पूर्वसिद्धेभ्यो नमः
ॐ आचार्येभ्यो नमः । ( स्ववामभागे ) ॐ गणेशाय नमः ।
दुर्गायै नमः । ॐ क्षेत्रपालाय नमः । ॐ योगिनीभ्यो नमः ।
क्षेत्रेशाय नमः ॥ 'भूमिताडनम्'—अपसर्पन्तु ते भूता ये भूता
मिसंस्थिताः । ये भूता विघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया । अ
क्रामन्तु भूतानि पिशाचाः सर्वतोदिशम् । सर्वेषामविरोधेन श
द्ध्यादि समारभे ॥ ( स्ववामपार्ष्णिना त्रिवारं भूमिं ताडयेत् )
शुद्धिः'—भूरसीत्यस्य प्रजापतिर्ऋषिः । मातृका देवता । प्रस्ता
पङ्क्तिश्छन्दः । भूशुद्धौ विनियोगः ।—(भूमौ हस्तौ कृत्वा । पश्चाद्भू
यथा )—ॐ भूरसि भूमिरस्यदितिरसि विश्वधाया
श्वस्य भुवनस्य धर्त्री । पृथिवीं यच्छ पृथिवीन्दृꣳह
थिवीम्माहिꣳसीः । १ १८/१३॥ 'भैरवनमस्कारः'—यो भूता
मित्यस्य कौण्डिण्य ऋषिः । नारायणो देवता । अनुष्टुप् छन्दः
भैरवनमस्कारे विनियोगः—ॐ यो भूतानामधिपतिर्यस्मि

न्लोकाऽअधिश्श्रिताः । यऽईशे महतो महाँस्तेन गृह्णामि त्वामहम्मयि गृह्णामि त्वामहम् । २ ३२/२० ॥ इति भूशुद्धिः ॥

२८४. अथ 'भूतशुद्धिः'—(मूलाधारात्समुत्थाप्य कुण्डलीं परदेवताम् । सुषुम्नामार्गमाश्रित्य ब्रह्मरन्ध्रगतां स्मरेत् ॥ जीवं ब्रह्मणि संयोज्य हंसमन्त्रेण साधकः । ) ॥ ॐ हंसः सोऽहम् ॥ 'मातृकोपसंहारः'—स च । 'क्ष' लयो—'ह' कारे । 'ह' लयः—'स' कारे । 'स' लयः—'ष' कारे । 'ष' लयः—'श' कारे । 'श' लयो—'व' कारे । (इत्यादि प्रकारेण अकारपर्यन्तं 'लयं' भावयित्वा ॥ अकारः सहस्राम्बुजे ब्रह्मरन्ध्रे परमात्मनि 'लयम्' गत इति भावयेत् ॥ ) तच्च—'भावनम्'—ॐ 'क्ष' कारम्—'ह' कारे उपसंहरामि । ॐ 'ह' कारम्—'स' कारे उप० । ॐ 'स' कारम्—'ष' कारे उप० । ॐ 'ष' कारम्—'श' कारे उप० । ॐ 'श' कारम्—'व' कारे उप० । ॐ 'व'कारम्—'ल' कारे उप० । ॐ 'ल'कारम्—'र' कारे उप० । ॐ 'र'कारम्—'य' कारे उप० । ॐ 'य'कारम्—'म' कारे उप० । ॐ 'म'कारम्—'भ'कारे उप० । ॐ 'भ'कारम्—'ब' कारे उप० । ॐ 'ब'कारम्—'फ'कारे उप० । ॐ 'फ'कारम्—'प' कारे उप० । ॐ 'प'कारम्—'न'कारे उप० । ॐ 'न'कारम्—'ध' कारे उप० । ॐ 'ध'कारम्—'द'कारे उप० । ॐ 'द'कारम्—'थ' कारे उप० । ॐ 'थ'कारम्—'त'कारे उप० । ॐ 'त'कारम्—'ण' कारे उप० । ॐ 'ण'कारम्—'ढ' कारे उप० । ॐ 'ढ'कारम्—'ड' कारे उप० । ॐ 'ड'कारम्—'ठ' कारे उप० । ॐ 'ठ'कारम्—'ट' कारे उप० । ॐ 'ट'कारम्—'ञ' कारे उप० । ॐ 'ञ'कारम्—'झ' कारे उप० । ॐ 'झ'कारम्—'ज'कारे उप० । ॐ 'ज'कारम्—'छ' कारे उप० । ॐ 'छ'कारम्—'च'कारे उप० । ॐ 'च'कारम्—'ङ' कारे उप० । ॐ 'ङ'कारम्—'घ'कारे उप० । ॐ 'घ'कारम्—'ग' कारे उप० । ॐ 'ग'कारम्—'ख'कारे उप० । ॐ 'ख'कारम्—'क' कारे उप० । ॐ 'क'कारम्—'अः'कारे उप० । ॐ 'अः'कारम्—'अं' कारे उप० । ॐ 'अं'कारम्—'औ'कारे उप० । ॐ 'औ' कारम्—

'ओ' कारे उप०। ॐ 'ओ' कारम्—'ऐ' कारे उप०। ॐ 'ऐ' कारम्—'ए' कारे उप०। ॐ 'ए' कारम्—'ॡ' कारे उप०। ॐ 'ॡ' कारम्—'ऌ' कारे उप०। ॐ 'ऌ' कारम्—'ॠ' कारे उप०। ॐ 'ॠ' कारम्—'ऋ' कारे उप०। ॐ 'ऋ' कारम्—'ऊ' कारे उप०। ॐ 'ऊ' कारम्—'उ' कारे उप०। ॐ 'उ' कारम्—'ई' कारे उप०। ॐ 'ई' कारम्—'इ' कारे उप०। ॐ 'इ' कारम्—'आ' कारे उप०। ॐ 'आ' कारम्—'अ' कारे उप०। ॐ 'अ' कारः' (सहस्रदलाम्बुजाकारे ब्रह्मरन्ध्रे परमात्मनि 'लयम्' गत ... भावयेत्)॥ 'भूतोपसंहारः'—(पादादिजानुपर्यन्तं चतुष्कोणं सवज्र-कम्॥ लम्बीजाढ्यं स्वर्णवर्णं स्मरेदवनिमण्डलम्॥ जान्वोरानाभि चन्द्रार्ध-निभं पद्मद्वयाकृति। वँ बीजयुक्तं श्वेताभं मँ सोमं मण्डलं स्मरेत्॥ नाभे-र्हृदयपर्यन्तं त्रिकोणं स्वस्तिकासनम्। रँ बीजेन युतं रक्तं स्मरेत्पावकम-ण्डलम्॥ हृदो भ्रूमध्यपर्यन्तं वृत्तं षड्बिन्दुलाञ्छितम्। यँ बीजयुक्तं धूम्राभं वायव्यं मण्डलं (नभस्वत्) स्मरेत्॥ आब्रह्मरन्ध्रं भ्रूमध्याद्वृत्तं स्व-मनोहरम्। हँ बीजयुक्तमाकाशमण्डलं च विचिन्तयेत्॥ एवं भूतानि सं-चिन्त्य प्रत्येकं प्रविलापयेत्। भुवं जले जलं वह्नौ वह्निं वायौ नभस्यमुं विलाप्य 'खमहङ्कारे' महत्तत्त्वेप्यहंकृतम्। महान्तं प्रकृतौ मायामात्म-नि प्रविलापयेत्॥ शुद्धसच्चिन्मयो भूत्वा चिन्तयेत्पापपूरुषम्। वामकुक्षिस्थितं कृष्णमङ्गुष्ठपरिमाणकम्॥ विप्रहत्याशिरोयुक्तं कनकस्तेयबाहुकम्। मदि-रापानहृदयं गुरुतल्पकटीयुतम्॥ तत्संयोगिपदद्वन्द्वमुपपातकरोमकम्। ख-ड्गचर्मधरं दुष्टमधोवक्त्रं च दुःसहम्॥ वायुबीजं स्मरन्वायुं सम्पूर्यैनं विशोषये-त् यथा—यँ, यँ, यँ, यँ, यँ, यँ, यँ, यँ, यँ, यँ, यँ, यँ, यँ, यँ, यँ, यँ, (इति षोडश, (१६) वारं जपित्वा॥ वह्निबीजं (स्मरन्नित्यं निर्दहेत्पापपूरुषम्) रँ, रँ, रँ, रँ, रँ, रँ, रँ, रँ, रँ, रँ, रँ, रँ, रँ, रँ, रँ, रँ, रँ, रँ, रँ, रँ, रँ, रँ, रँ, रँ, रँ, रँ, रँ, रँ, रँ, रँ, रँ, रँ, रँ, रँ, रँ, रँ, रँ, रँ, रँ, रँ, रँ, रँ, रँ, रँ, रँ, रँ, रँ, रँ, रँ, रँ, रँ, रँ, रँ, रँ, रँ, रँ, रँ, रँ, रँ, रँ, रँ, रँ, रँ, रँ, (इति चतुः-षष्टि (६४) वारं जपित्वा)॥ वायुबीजेन (तद्भस्मं बहिर्निष्कास्य यथा) यँ, यँ, यँ, यँ, यँ, यँ, यँ, यँ, यँ, यँ, यँ, यँ, यँ, यँ, यँ, यँ, यँ, यँ, यँ, यँ, यँ, यँ, यँ, यँ, यँ, यँ, यँ, यँ, यँ, यँ, यँ, यँ, (इति द्वात्रिंश-(३२) जपित्वा)॥ सुधाबीजेन (देहोत्थं भस्मसंप्लावयेत्सुधीः)। वँ

वँ, वँ, वँ, वँ, वँ, वँ, वँ, वँ, वँ, वँ, वँ, वँ, वँ, वँ, (इति षोडश (१६) वारं जपित्वा)॥ भूबीजेन (घनीकृत्य भस्म तत्कनकाण्डवत्) लँ, लँ, लँ, लँ, लँ, लँ, लँ, लँ, लँ, लँ, लँ, लँ, लँ, लँ, लँ, लँ, (इति षोडश (१६) वारं जपित्वा॥ विशुद्धमुकुराकारं ब्रह्मरन्ध्रगतं स्मरेत्)॥ आकाशादीनि भूतानि पुनरुत्पादयेत्ततः। अखण्डं ब्रह्म तस्मात्स्यात्प्रेरकः पुरुषस्तथा॥ प्रकृतेर्महदाकारस्ततोऽहं त्रिगुणात्मकः। तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः। आकाशाद्वायुः। वायोरग्निः। अग्नेरापः। अद्भ्यः पृथिवी। पृथिव्या ओषधयः। ओषधीभ्योऽन्नम्। अन्नाद्रेतः। रेतसः पुरुषः। स वा ऽएष पुरुषोऽन्नरसमयः। हँ सः सोऽहम्। कुण्डली जीवमादाय परसङ्गात्सुधामयीम्। संस्थाप्य हृदयाम्भोजे मूलाधारगतं स्मरेत्॥ इति भूतशुद्धिः॥

२८५. अथ 'प्राणप्रतिष्ठा.'—अस्य श्रीप्राणप्रतिष्ठामन्त्रस्य। ब्रह्मविष्णुमहेश्वरा ऋषयः। ऋग्यजुःसामानि छन्दांसि। जगत्स्रष्टिः प्राणशक्तिर्देवता। आँ बीजम्। ह्रीँ शक्तिः। क्रौँ कीलकम्। प्राणप्रतिष्ठापने विनियोगः—ॐ ब्रह्मविष्णुमहेश्वरऋषिभ्यो नमः—शिरसि। ऋग्यजुःसामच्छन्दोभ्यो नमः—मुखे। जगत्स्रष्ट्यै प्राणशक्त्यै नमः—हृदये। आँम् बीजाय नमः—लिङ्गे। ह्रीँ शक्तये नमः—पादयोः। क्रौँ कीलकाय नमः—सर्वाङ्गेषु। एवं न्यासं कृत्वा। ॐ अँ, कँ, खँ, गँ, घँ, ङँ, आँ—पृथिव्यप्तेजोवाय्वाकाशात्मने अङ्गुष्ठाभ्यां—नमः। ॐ इँ, चँ, छँ, जँ, झँ, ञँ, ईँ—शब्दस्पर्शरूपरसगन्धाऽत्मने तर्जनीभ्यां—नमः। ॐ उँ, टँ, ठँ, डँ, ढँ, णँ, ऊँ—त्वक्चक्षुःश्रोत्रजिह्वाघ्राणाऽत्मने मध्यमाभ्यां—नमः। ॐ एँ, तँ, थँ, दँ, धँ, नँ, ऐँ—वाक्पाणिपादपायूपस्थात्मने अनामिकाभ्यां—नमः। ॐ ओँ, पँ, फँ, बँ, भँ, मँ, औँ—वचनादानगतिविसर्गानन्दाऽत्मने कनिष्ठिकाभ्यां—नमः। ॐ अँ, यँ, रँ, लँ, वँ, शँ, षँ, सँ, हँ, क्षँ, अः—मनोबुद्ध्यहङ्कारचित्तज्ञानाऽत्मने करतलकरपृष्ठाभ्यां—नमः। एवं हृदयादि। (नाभेरारभ्य पादान्तम्। 'आँ' इति) पाशबीजम्। (हृदयादारभ्य नाभ्यन्तं 'ह्रीँ' इति) शक्तिबीजम्। (म-

स्तकादारभ्य हृदयान्तम् 'क्रौँ' इति) अङ्कुशबीजम् न्यसेत् ॥ अ
'ध्यानम्'—रक्ताम्भोधिस्थपोतोल्लसदरुणसरोजाधिरूढा कराब्जैः
पाशं कोदण्डमिक्षूद्भवमथ गुणमप्यङ्कुशं पञ्चबाणान् । बिभ्राणा
सृक्कपालं त्रिनयनलसिता पीनवक्षोरुहाढ्या देवी बालार्कवर्णा
वतु सुखकरी प्राणशक्तिः परा नः ॥ (शिरसि तथा हृदि
दत्वा) ॥ ॐ आँ, ह्रीँ, क्रौँ, यँ, रँ, लँ, वँ, शँ, षँ, सँ, हँ, सः
सोऽहम् प्राणा इह प्राणाः । ॐ आँ, ह्रीँ, क्रौँ, यँ, रँ, लँ, वँ,
षँ, सँ, हँ, सः—जीव इह स्थितः । ॐ आँ, ह्रीँ, क्रौँ, यँ, रँ,
वँ, शँ, षँ, सँ, हँ, सः—सर्वेन्द्रियाणि वाङ्मनस्त्वक्चक्षुःश्रोत्रजिह्वा
णवाक्पाणिपादपायूपस्थानीहैवागत्य सुखं चिरं तिष्ठन्तु स्वाहा
ॐ, ॐ, ॐ, ॐ, ॐ, ॐ, ॐ, ॐ, ॐ, ॐ, ॐ, ॐ, ॐ, ॐ,
(इति प्रणवस्य पञ्चदशावृत्तीः (१५) कृत्वा) अनेन मम देहस्य प
दशसंस्काराः सम्पद्यन्ताम् । (इत्युक्त्वा पश्चात् 'ॐ. नमो भग
रुद्राय' (इति त्रीन्प्राणायामान्कृत्वा ॥ यथा पर्वतधातूनां दोषान्द
पावकः । एवमन्तर्गतं पापं प्राणायामेन दह्यते ॥) इति प्राणप्रतिष्ठा

२८६. 'अथान्तर्मातृकान्यासाः'—अस्य श्रीअन्तर्मातृ
न्त्रस्य । ब्रह्मा ऋषिः । मातृका सरस्वती देवता । गायत्री छन्द
हलो बीजानि । स्वराः शक्तयः । 'क्षँ' कीलकं मातृकान्यास
विनियोगः—अं ब्रह्मऋषये नमः—आं शिरशि । इं गायत्री
न्दसे नमः—ईं वदने । उं मातृकासरस्वतीदेवतायै नमः—
हृदये । एं हल्भ्यो वीजेभ्यो नमः—ऐं गुह्ये । ओं स्वरशक्ति
नमः—औं—पादयोः । अं, क्षं—कीलकाय नमः—अः
सर्वाङ्गेषु । इति मातृकाऋष्यादिन्यासाः ॥ ॐ अँ, कँ, खँ, गँ,
ङँ, आम्—अङ्गुष्ठाभ्यां—नमः । ॐ इँ, चँ, छँ, जँ, झँ, ञँ, ईं
तर्जनीभ्यां—नमः । ॐ उँ, टँ, ठँ, डँ, ढँ, णँ, ऊँ—मध्यमा
नमः । ॐ एँ, तँ, थँ, दँ, धँ, नँ, ऐँ—अनामिकाभ्यां—नमः
ओँ, पँ, फँ, बँ, भँ, मँ, औँ—कनिष्ठिकाभ्यां—नमः । ॐ
यँ, रँ, लँ, वँ, शँ, षँ, सँ, हँ, अः—करतलकरपृष्ठाभ्यां—नमः
हृदयादि ॥ अथ 'ध्यानम्'—पञ्चाशल्लिपिभिर्विभज्य मुखदोः

वक्षस्थलां भास्वन्मौलिनिबद्धचन्द्रशकलामापीनतुङ्गस्तनीम् । मुद्रामक्षगुणं सुधाढ्यकलशं विद्यां च हस्ताम्बुजैर्बिभ्राणां विशदप्रभां त्रिनयनां वाग्देवतामाश्रये । (ततो दक्षिणकनिष्ठिकायाः आद्यं पर्वारभ्य वामाङ्गुष्ठाद्यपर्वपर्यन्तं षोडशसु पर्वसु षोडश स्वरान्विन्यस्य वामतर्जनीमारभ्य दक्षिणतर्जन्यन्तमङ्गुल्यग्रेषु चतुरश्चतुरो वर्णान् क्रमेण कादिसान्तान्विन्यस्याङ्गुष्ठयोः "हलौ" सर्वाङ्गुल्यग्रेषु क्षकारं विन्यसेत्)। यथा—ॐ अँ, आँ, इँ, ईँ, उँ, ऊँ, ऋँ, ॠँ, ऌँ, ॡँ, एँ, ऐँ, ओँ, औँ, अँअः। कँ, खँ, गँ, घँ, ङँ, । चँ, छँ, जँ, झँ, ञँ, । टँ, ठँ, डँ, ढँ, णँ, । तँ, थँ, दँ, धँ, नँ, । पँ, फँ, बँ, भँ, मँ, । यँ, रँ, लँ, वँ, शँ, षँ, सँ, हँ, ळँ, क्षँ, ॥ (इत्युक्त्वा पुनः पूर्वोक्तं मातृकान्यासं कुर्यात्) ॥ ॐ अँ, आँ, इँ, ईँ, उँ, ऊँ, ऋँ, ॠँ, ऌँ, ॡँ, एँ, ऐँ, ओँ, औँ, अँ, अः—इति षोडशपत्रके—कण्ठे । ॐ कँ, खँ, गँ, घँ, ङँ, चँ, छँ, जँ, झँ, ञँ, टँ, ठँ—इति द्वादशपत्रके—हृदि । ॐ डँ, ढँ, णँ, तँ, थँ, दँ, धँ, नँ, पँ, फँ—इति दशपत्रके—नाभौ । ॐ बँ, भँ, मँ, यँ, रँ, लँ—इति षट्पत्रके—लिङ्गे । ॐ वँ, शँ, षँ, सँ,—इति चतुष्पत्रके—गुदे । ॐ हँ, क्षँ—द्विपत्रके—भ्रुवोर्मध्ये ॥ 'अथ ध्यानम्'—आधारे लिङ्गनाभौ प्रकटितहृदये तालुमूले ललाटे द्वे पत्रे षोडशारे द्विदशदशदले द्वादशार्द्धे चतुष्के । वासान्ते बालमध्ये ड—फ—क—ठसहिते कण्ठदेशे स्वराणां हं, क्षं,—तत्त्वार्थयुक्तं सकलदलगतं वर्णरूपं नमामि ॥ १ ॥ इति अन्तर्मातृकाः ॥

२८७. अथ 'बहिर्मातृकाः'—ॐ अँ नमः—केशान्ते । आँ—नमः—मुखे । ॐ इँ नमः—दक्षिणनेत्रे । ॐ ईँ नमः—वामनेत्रे । ॐ उँ नमः—दक्षिणकर्णे । ॐ ऊँ, नमः—वामकर्णे । ॐ ऋँ नमः—दक्षिणनासापुटे । ॐ ॠँ नमः—वामनासापुटे । ॐ ऌँ नमः—दक्षिणगण्डे । ॐ ॡँ नमः—वामगण्डे । ॐ एँ नमः—ऊर्ध्वोष्ठे । ॐ ऐँनमः—अधरोष्ठे । ॐ ओँ नमः—ऊर्ध्वदन्तपङ्क्तौ । ॐ औँ नमः—अधोदन्तपङ्क्तौ । ॐ अँ नमः—मूर्ध्नि । ॐ अः नमः—आस्ये । ॐ कँ नमः—दक्षिणबाहुमूले । ॐ खँ नमः—दक्षिणकूर्परे । ॐ गँ नमः—दक्षिणमणिबन्धे । ॐ घँ नमः—द-

क्षिणकराङ्गुलिमूले । ॐ ङँ नमः—दक्षिणकराङ्गुल्यग्रे । ॐ
नमः—वामबाहुमूले । ॐ छँ नमः—वामकूर्परे । ॐ जँ नमः—
वाममणिबन्धे । ॐ झँ नमः—वामाङ्गुलिमूले । ॐ ञँ नमः—
वामकराङ्गुल्यग्रे । ॐ टँ नमः—दक्षिणपादमूले । ॐ ठँ नमः—
दक्षिणजानुनि । ॐ डँ नमः—दक्षिणगुल्फे । ॐ ढँ नमः—द
क्षिणपादाङ्गुलिमूले । ॐ णँ नमः—दक्षिणपादाङ्गुल्यग्रे । ॐ
नमः—वामपादमूले । ॐ थँ नमः—वामजानुनि । ॐ दँ नमः—
वामगुल्फे । ॐ धँ नमः—वामपादाङ्गुलिमूले । ॐ नँ नमः—
वामपादाङ्गुल्यग्रे । ॐ पँ नमः—दक्षिणकुक्षौ । ॐ फँ नमः—
वामकुक्षौ । ॐ बँ नमः—पृष्ठे । ॐ भँ नमः—नाभौ । ॐ
नमः—उदरे । ॐ यँ त्वगात्मने नमः—हृदि । ॐ रँ असृगात्म
नमः—दक्षिणांसे । ॐ लँ मांसात्मने नमः—ककुदि । ॐ
मेदात्मने नमः—वामांसे । ॐ शँ अस्थ्यात्मने नमः—हृदया
वामहस्ताग्रान्तम् । ॐ षँ मज्जात्मने नमः—दक्षिणपादाग्रान्त
ॐ सँ शुक्रात्मने नमः—हृदयादि पादान्तम् । ॐ हँ आत्म
त्तयात्मने नमः—हृदयादि जठरे । ॐ ळँ जीवात्मने नमः—
ऱ्यादि हृदयान्तम् । ॐ क्षँ परमात्मने नमः—हृदयादि मस्त
न्तम् । ॐ छन्दःपुरुषाय नमः शिरसि ॥ इति बहिर्मातृका
'अर्पणम्—अनेन यथाशक्त्या कृतेन भूशुद्धिभूतशुद्धिप्राणप्र
ष्ठान्तर्मातृकाबहिर्मातृकान्यासाख्यकर्मणा अमुककर्माङ्गदेवतास्व
परमेश्वरः प्रीयतां न मम ॥ ॐ तत्सद्ब्रह्मार्पणमस्तु ॥ इति भूशु
भूतशुद्धिप्राणप्रतिष्ठान्तर्मातृकाबहिर्मातृकाप्रयोगः ॥

२८८. अथ '(नूतनमूर्तिषु) प्राणप्रतिष्ठाप्रयोगः'—(सुवर्णरौप्यताम्रादिस
पाषाणादिमूर्तीनां पार्थिवमूर्तीनां वा प्राणप्रतिष्ठां कारयेत् ॥ तत्रादौ
मानः यथोचितकाले स्नानसन्ध्यादिविधिं सम्पाद्य अनन्तरं स्थाने उप
नूतनमूर्तीनां प्रतिष्ठापनं कार्यम् ।) तद्यथा—'आचमनप्राणायाम
कृत्वा' सङ्कल्पः कार्यः यथा—'सङ्कल्पः'—अद्य पूर्वोच्चारित

(१) 'आचमनादि' पृष्ठ ४६ परिच्छेद १७१ दर्शितक्रमेण ज्ञेयम् ॥

गुणविशेषेण विशिष्टायां शुभपुण्यतिथौ ममाऽत्मनः श्रुतिस्मृतिपुराणोक्तफलप्राप्त्यर्थं मम सकलकुटुम्बानां क्षेमस्थैर्यायुरारोग्यैश्वर्याभिवृद्ध्यर्थं ममाऽत्मनः अक्षय्यसुखप्राप्त्यर्थं पितृतो मातृतश्च दशपूर्वान्दशापरान् एकविंशतिपुरुषानुद्धर्तुं धर्मार्थकाममोक्षचतुर्विधपुरुषार्थसिध्यर्थं परमपदप्राप्तये आसां अमुकनूतनमूर्तीनां टङ्कघनादिदोषपरिहारार्थं मृत्तिकासंघट्टनादिदोषपरिहारार्थं वा अग्न्युत्तारणपूर्वकं आसां अमुकनूतनमूर्तीनां जातकर्मादिपञ्चदशसंस्कारपूर्वकदेवकलासान्निध्यार्थं प्राणप्रतिष्ठां करिष्ये ॥ (पश्चात् नूतनमूर्तीः ताम्रपात्रे यथोचितस्थाने वा निधाय पुष्पेण घृतेनाभ्यज्य उपरि जलधारां अधोलिखितमन्त्रैः कुर्यात् ॥ (पार्थिवमूर्तीनां तु पुष्पेण किञ्चिज्जलेनाऽभिषिञ्चेत्) ॥ 'अभिषिञ्चनम्.'—ॐ समुद्रस्य त्वा वं कयाग्ने परि व्ययामसि । पावकोऽअस्मभ्यं शिवो भव । १$\frac{४}{१७}$ ॥ हिमस्य त्वा । जरायुणाग्ने परिव्ययामसि । पावको ऽअस्मभ्यं शिवो भव । २$\frac{५}{१७}$ ॥ उपज्ज्मन्नुपवेतसेवतरन्नदीष्ष्वा । अग्ने पित्तमपामसि मण्डूकिताभिरागहि सेमन्नो यज्ञम्पावकवर्णं शिवं कृधि । ३$\frac{६}{१७}$ ॥ अपामिदन्न्ययनं समुद्रस्य निवेशनम् । अन्याँस्तेऽअस्मत्तपन्तु हेतयः पावकोऽअस्मभ्यं शिवो भव । ४$\frac{७}{१७}$ ॥ अग्ने पावक । रोचिषा मन्द्रया देव जिह्वया । आदेवान्वक्षि यक्षि च । ५$\frac{८}{१७}$॥ सनः पावक दीदिवोग्ने देवाँ ॥ ऽइहावह । उपयज्ञं हविश्च नः । ६$\frac{९}{१७}$ ॥ पावक यासश्चितयन्त्या कृपा क्षामन्रुरुचऽउषसो न भानुना । तूर्वन्न यामन्नेतशस्य नूरण ऽआयो घृणेन ततृषाणोऽअजरः । ७$\frac{१०}{१७}$ ॥ नमस्ते हरसे शोचिषे नमस्तेऽअस्त्वर्च्चिषे । अन्याँस्तेऽअस्मत्तपन्तु हेतयः पावकोऽअस्मभ्यं शिवो भव । ८$\frac{११}{१७}$ ॥ नृषदेवेडप्सु-

यदेवेष्विहिंष देवेष्विनु स देवे द्विविदे वेद । *९ ३२/१७ ॥
देवा देवानां म्भुज्ञिया युज्ञियानां संवत्सुरीणमुपभा-
गमासते । अहुतादो हुविषो युज्ञेऽअस्मिन्त्स्वयम्पि-
बन्तु मधुनो घृतस्य । १० ३३/१७ ॥ ये देवा देवेष्वधि देव-
त्वमायन्ये ब्रह्मणः पुरऽएतारोऽअस्य । येभ्यो नऽऋते
पवते धाम किञ्चन न ते दिवो न पृथिव्याऽअधिस्नुषु
११ ३४/१७ ॥ प्राणदाऽअपानुदा व्यानुदा वर्चोदा वरि-
वोदाः । अन्याँस्तेऽअस्मत्तपन्तु हेतयः पावको ऽअ-
स्मभ्यं शिवो भव । १२ ३५/१७ ॥ 'प्राणप्रतिष्ठा'— अस्य
श्रीप्राणप्रतिष्ठामन्त्रस्य । ब्रह्मविष्णुमहेश्वरा ऋषयः । ऋग्यजुःसामा-
थर्वाणि च्छन्दांसि । क्रियामयवपुः प्राणाख्या देवता । आँ—बी-
जम् । ह्रीं—शक्तिः । क्रौं—कीलकम् । अस्यां नूतनमूर्तौ प्राण-
प्रतिष्ठापने विनियोगः— ॐ आँ, ह्रीँ, क्रौँ, यँ, रँ, लँ, वँ, शँ, षँ,
सँ, हँ, सः—सोऽहम् । आसां नूतनमूर्तीनां प्राणा इह प्राणाः ।
पुनः—ॐ आँ, ह्रीँ, क्रौँ, यँ, रँ, लँ, वँ, शँ, षँ, सँ, हँ, क्षँ, हँ,
सः—सोऽहम् । आसां नूतनमूर्तीनां जीव इह स्थिताः ॥ पुनः—
ॐ आँ, ह्रीँ, क्रौँ, यँ, रँ, लँ, वँ, शँ, षँ, सँ, हँ, क्षँ, हँ, सः—
सोऽहम् । आसां नूतनमूर्तीनां सर्वेन्द्रियाणि वाङ्मनस्त्वक्चक्षुःश्रोत्र-
जिह्वाघ्राणपाणिपादपायूपस्थानि इहैवागत्य सुखं चिरं तिष्ठन्तु
स्वाहा ॥ ॐ मनो जूतिर्ज्जुषतामाज्ज्यस्य बृहस्पति-
र्यज्ञमिमन्तनो त्वरिष्टं य्यज्ञ समिमन्दधातु । विश्वे
वासऽइहमादयन्तामो३म्प्रतिष्ठ । १३ १३/२ ॥ एष वै प्र-
तिष्ठानाम यज्ञो यत्रैतेन यज्ञेन यजन्ते सर्वमेव प्रतिष्ठितं
भवति ।१४॥ ब्राह्मणमन्त्रः॥ सुप्रतिष्ठितो भव ॥ देवसव्यकर्णे गायत्रीं
जपिला ॥ 'नेत्रोन्मीलनम्'— ॥ * ॐ वृत्रस्यासि कनी-
नकश्चक्षुर्दाऽअसि चक्षुर्म्मे देहि । १५ ३/४॥ (नूतनमूर्तौ गन्ध-

पञ्चोपचारान् दत्त्वा पश्चात् संस्कारसिद्धये पञ्चदशप्रणवावृत्तीः कारयेत्) ॥ यथा—ॐ, ॐ, ॐ, ॐ, ॐ, ॐ, ॐ, ॐ, ॐ, ॐ, ॐ, ॐ, ॐ, ॐ, ॐ, ॥ अनेन आसां अमुकनूतनमूर्तीनां जातकर्मगर्भाधानादि पञ्चदश संस्कारान् सम्पादयामि (इति वदेत्) ॥ 'प्रार्थना'—स्वागतं देव देवेश मद्भाग्यात्त्वमिहाऽगतः। प्राकृतं त्वमदृष्ट्वा मां बालवत्परिपालय। १ ॥ धर्मार्थकामसिद्ध्यर्थं स्थिरो भव शुभाय नः। सान्निध्यं तु सदा देव स्वार्चायां परिकल्पय। २ ॥ भगवन्देव देवेश त्वं पिता सर्वदेहिनाम्। येन रूपेण भगवन् त्वया व्याप्तं चराचरम्। ३ ॥ ज्ञानतोऽज्ञानतो वाऽपि यावद्विधिरनुष्ठितः। स सर्वस्त्वत्प्रसादेन समग्रो भवतां मम। ४ ॥ "अर्पणम्"—अनेन अमुकनूतनमूर्तौ प्राणप्रतिष्ठादिकर्मकृतेन तेन श्रीअमुकदेवता प्रीयतां न मम ॥ ॐ तत्सद्ब्रह्मार्पणमस्तु ॥ (एवं प्राणप्रतिष्ठां नूतनमूर्तौ कुर्यात् पश्चात् तस्याः षोडशोपचारादिपूजां कुर्यात्) ॥ इति प्राणप्रतिष्ठाप्रयोगः ॥

२८९. 'कलशादिपूजा.' धर्मसारे—कलशं शङ्खघण्टे च पाद्यार्घ्याचमनीयकम्। सम्पूज्य प्रोक्ष्य चाऽत्मानं पूजासम्भारमेव च ॥ ध्यायेदभिमतां देवमूर्तिं सम्पूजयेत्ततः ॥ पूजासागरे—सुवासितजलैः पूर्णं सव्ये 'कुम्भं' सुपूजयेत्। कलशस्येति मन्त्रेण तीर्थान्यावाहयेत्ततः ॥ शङ्खमद्भिः पूरयित्वा प्रणवेन च दक्षिणे। सम्पूज्य त्वं पुरेत्यादि मन्त्रेण प्रार्थयेत्ततः ॥ तन्त्रान्तरे—महाभिषेकं सर्वत्र शङ्खेनैव प्रकल्पयेत्। सर्वत्रैव प्रशस्तोऽब्जः शिवसूर्यार्चनं विना ॥ मम नामाङ्कितां 'घण्टां' सुदर्शनयुतां यदि। ममाऽग्रे स्थापयेद्यस्तु तस्य देहे वसाम्यहम् ॥ घण्टां सम्पूज्य मध्ये त्वागमार्थमिति वादयेत्। जलैः पाद्यादिपात्राणि गायत्र्यादौ प्रपूजयेत् ॥ यामले—निवेशयेत्पुरोभागे गन्धं पुष्पं च भूषणम्। 'दीपं' दक्षिणतो दद्यात्पुरो नैव तु वामतः। वामतस्तु तथा धूपमग्रे वा न तु दक्षिणे ॥ कालिकापुराणे—स्नाने धूपे तथा दीपे नैवेद्ये भूषणे तथा। घण्टानादं प्रकुर्वीत तथा नीराजनेपि च ॥ विष्णुधर्मोत्तरे—धूपे नीराजने स्नाने पूजाकाले विलेपने। ममाऽग्रे वादयन् घण्टामुत्तमं लभते फलम् ॥ गौतमीये—उत्तोल्य दृष्टिपर्यन्तं घण्टां वामदिशि स्थिताम्। वादयन्वामहस्तेन दक्षहस्तेन चार्चयेत् ॥

२९०. 'ध्यानम्.' वाचस्पतौ—ध्यानं तु द्विविधं प्रोक्तं सरूपारूपभेदतः। अरूपं तत्र यद्ध्यानमवाङ्मनसगोचरम्। अव्यक्तं सर्वतो व्याप्तमिदमित्यविवर्जितम् ॥ याज्ञवल्क्यः—समाहितेन मनसा चैतन्यान्तरवर्तिना। आत्मनोऽभीष्टदेवानां ध्यानं ध्यानमिहोच्यते ॥

२९१. 'आवाहनम्.' वाचस्पतौ—कुर्यादावाहनं मूर्तौ मृन्मय्यां सर्वदैव हि । प्रतिमायां जले वह्नौ नावाहनविसर्जने ॥

२९२. 'पूजायां मुद्रालक्षणम्.' ज्ञानमालायाम्—देवता च सन्तुष्टा सर्वदा संमुखी भवेत् । अङ्गुष्ठौ निक्षिपेत्सेयं मुद्रा त्वावाहनी मता ॥ सङ्कुथ्य निक्षिपेत्सेयं मुद्रा त्वावाहनी स्मृता । अधोमुखी लिं चेत्स्यात्स्थापनी मुद्रिका मता ॥ प्रसृताङ्गुलिकौ हस्तौ मिथः श्लिष्टौ तु सं मुखौ । कुर्यात्स्वहृदयं सेयं मुद्रा प्रार्थनसंज्ञिका । इत्येवं सर्वदेवानां पूजे षट् प्रदर्शयेत् ॥

२९३. 'आसनम्.' कालिकापुराणे—आसनं प्रथमं दद्यात्पौ दारुजमेव वा । वास्त्रं वा चार्मणं कौशं मण्डलस्योत्तरेऽर्पयेत् ॥

२९४. 'आचमनम्.' आह्निककारिकासु—स्नाने वस्त्रे च नैवे दद्यादाचमनं तथा इति ॥

२९५. 'देवप्रतिमायां नित्यस्नानविचारः' प्रयोगपारिजाते—प्रतिमापट्टयन्त्राणां नित्यस्नानं न कारयेत् । कारयेत्पर्वदिवसे यदा वा लधारणम् ॥

२९६. 'पञ्चनद्यः.' वाचस्पतौ—भागीरथी समाख्याता यमुना सरस्वती । किरणा धूतपापा च पञ्च नद्यः प्रकीर्तिताः ॥

२९७. 'पञ्चगव्यम्.' कृत्यकल्पतरौ—पञ्चगव्यं पवित्रं तु आ हरेत्ताम्रभाजने । ( १ ) गायत्र्या चैव गोमूत्रं ( २ ) गन्धद्वारेण गो यम् । ( ३ ) आप्यायस्वेति च क्षीरं ( ४ ) दधिक्राव्णेति वै दधि ( ५ ) तेजोसि शुक्रमित्याज्यं ( ६ ) देवस्य त्वा कुशोदकम् ॥

२९८. 'पञ्चगव्यसंमेलनमन्त्राः.'—ॐ तत्सवितु० । १ ॐ गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् । ईश्वरीं सर्व तानां तामिहोपह्वये श्रियम् । २ (श्रीसूक्तमन्त्रः ) ॥ ॐ आप्याय स्व । समेतु ते विश्वतः सोम वृष्ण्यम् । भवा वाज सङ्गथे । ३१ $\frac{११२}{१२}$॥ ॐ दधि क्राव्णोऽअकारिषञ्जि

(१) अयं नियमस्तु षडङ्गुलोर्ध्वप्रतिमादिषु बोद्धव्यः । यदि षडङ्गुलन्यूना प्रतिमा तर्हि तां नित्यमेव स्नापयेत् ॥ (२) जाताशौचान्ते मृताशौचान्ते उपाकर्मादिवै ककर्मारम्भे च शरीरशुद्ध्यर्थं पञ्चगव्यप्राशनं कार्यम् ॥

रश्वस्य वाजिनः । सुरभिनो मुखाकरत्प्रणऽआयूंषि तारिषत् । ४ $\frac{32}{23}$ ॥ * * ॐ तेजोसि शुक्रमस्यमृतमसि धामनामासि । प्रियन्देवानामनाधृष्टन्देवयजनमसि । ५ $\frac{31}{1}$ ॥ ॐ देवस्य त्वा । सवितुः प्रसवेश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् । * * ६ $\frac{10}{1}$ ॥

२९९. 'पञ्चगव्यप्राशनमन्त्रः.'—यत्त्वगस्थिगतं पापं देहे तिष्ठति मामके ॥ प्राशनात्पञ्चगव्यस्य दहत्यग्निरिवेन्धनम् ॥ १ ॥

३००. 'पञ्चामृतम्.' धन्वन्तरिः—गव्यमाज्यं दधि क्षीरं माक्षिकं शर्करान्वितम् । एकत्र मिलितं ज्ञेयं दिव्यं पञ्चामृतं परम् ॥

३०१. 'उद्वर्तनम्.'—रजनी सहदेवी च शिरीषं लक्ष्मणापि च । सहभद्रा कुशाग्राणि उद्वर्तनमिहोच्यते ॥

३०२. 'सौभाग्यद्रव्यम्.'—हरिद्रा कुङ्कुमं चैव सिन्दूरादिसमन्वितम् । कज्जलं कण्ठसूत्रादि सौभाग्यद्रव्यमुच्यते ॥

३०३. 'देवेष्वभिषेकविचारः.' रुद्रकल्पद्रुमे—साङ्गमादौ जपेद्रुद्रं केवलाङ्गानि चान्तरे । साङ्गं सशीर्षकं चान्ते निरङ्गमिति केचन ॥ अन्यच्च—हेमाद्रौ कौशिकबौधायनौ—सद्यादि पञ्चवक्त्रांश्च रुद्रानेकादशैव तु । जपित्वा सर्वरुद्रांश्च चमकाद्यं ततो जपेत् ॥ पुनरेतज्जपेत्सर्वं द्वितीयं चमकं तथा । 'रुद्रैकादशिनी' त्येषा सर्वकामफलप्रदा ॥ सर्वपापक्षयकरी सर्वशान्तिप्रदायिनी । एकादशगुणा सैव 'रुद्र' इत्यभिधीयते ॥ द्वानेकादशगुण 'स्वतिरुद्र' इहोच्यते । रुद्रं महातिरुद्रं च जपेत्कार्यस्य गौरवात् ॥ शातातपः—षडङ्गैकादशिनीरुद्रो रुद्र एकादशरुद्रतः। एकादशभिरेताभि 'र्महारुद्र'श्च कथ्यते॥ एकादशमहारुद्रै 'रतिरुद्र' इति स्मृतः ॥ शान्तिरत्नाकरे बौधायनः—(नमस्ते रुद्रमन्यव इत्येकादशानामनुवाकानामेकमेकं जपेदिति । सर्वनमकान्पठित्वा एकैकं चमकानुवाकं पठेत् । तेनैकरूपे सर्वचमकजपो न तु विभागः । तैरेकादशरुद्रैः 'रुद्री' त्युच्यते । सैव 'लघुरुद्रः' रुद्रैकादशिनीति चोच्यते । ताभिरेकादशभि 'र्महारुद्रः' । तैरेकादशावृत्तै 'रतिरुद्र' इति ॥ परं च—हेमाद्रौ रुद्रविधिः—माध्यन्दिनकण्वादिशाखिनां तु चमके एकादशानुवाकाऽभावाच्चमकानेकादशधा विभज्यैकैकभागं नमकेषु योज्यैकादशिनीं कुर्यात् ) ॥ गणपतौ—गणपत्यथ-

र्वशीर्षेण ॥ देव्यां—अथर्वणवेदीयलक्ष्मीसूक्तेन देव्यथर्वशीर्षेण वा विष्णौ—नारायणाथर्वशीर्षेण ॥ सूर्ये—सूर्याथर्वशीर्षेण ॥ एतान्यथर्वशीर्षाणि पठित्वा धारापात्रेण जलधारयाऽनेकप्रकारेणोक्त 'यैकादशिन्या' अथवा—एकाऽवर्तनेनै 'वाभिषेकं' कुर्यात् ॥ विघ्नशान्त्यर्थं तु एकादशिन्या रुद्राभिषेकं कुर्यात् ॥ विष्ण्वादिदेवानां महाभिषेकविधिः— एकादशिन्याद्यभिषेककरणात्पूर्वं विष्ण्वाद्याराध्यदेवतायाः पूर्वोक्तप्रकारेण पूर्वपूजां समाप्य निर्माल्यं विसृस्याभिषेकाङ्गत्वेन पञ्चोपचारपूजां कृत्वा तत्तद्देवताप्रियस्य गङ्गाजलदुग्धेक्षुरसरञ्जिकापञ्चामृतादिद्रव्यस्याविच्छिन्नधारया एकादशिनीं पठन्नभिषेकं कुर्यात् । तत्र विष्णोर्नारायणाथर्वशीर्षस्य षोडशावृत्तिकरणम् । गणपतेर्गणपत्यथर्वशीर्षस्यैकविंशतिसंख्याकावृत्तिकरणम् । सूर्यस्य सूर्याथर्वशीर्षस्य द्वादशावृत्तिकरणम् । शङ्करस्य रुद्राध्यायस्यैकादशावृत्तिकरणम् । देव्याश्चाथर्ववेदोक्तलक्ष्मीसूक्तस्य देव्यथर्वशीर्षस्य नवावृत्तिकरणमित्येकादशिनीकरणसाम्प्रदायो वर्तते । [ केचित्तु शिवे रुद्रैकादशिनीं कृत्वाऽनन्तरं रुद्राथर्वशीर्षं सकृत्पठित्वाभिषेकं कुर्वन्ति । तथापि रुद्राथर्वशीर्षं विनैव रुद्राध्यायेन महाभिषेककरणस्य बहूनां सम्प्रदायः ] ॥ संक्षिप्तपूजायां तु सर्वदेवानां तत्तदथर्वशीर्षादेः सकृदावर्तनेनाभिषेकं कुर्यात् । केचित्तु पूर्वोक्तप्रकारेणैव तत्तद्देवतानामेकादशिनीं कृत्वाऽभिषेकं कुर्वन्ति । अभिषेकोत्तरं पूजाप्रकारः पूर्वोक्त एव द्रष्टव्यः ॥

३०४. 'वस्त्राद्यर्पणम्.' ग्रन्थान्तरे—स्नानान्ते चार्पयेद्वस्त्रं देवप्रीतये सदा । ब्रह्मसूत्रं च दातव्यं पूजाफलमभीप्सुना ॥

३०५. 'देवे गन्धानुलेपनम्.' कालिकापुराणे वाचस्पतौ— चूर्णीकृतो वा घृष्टो वा दाहकर्षित एव वा । रसः संमर्दजो वापि प्राण्यङ्गोद्भव एव वा ॥ गन्धः पञ्चविधः प्रोक्तो देवानां प्रीतिदायकः । गन्धचूर्णं गन्धपत्रचूर्णं सुमनसां तथा ॥ प्रशस्तगन्ध उक्तानि पत्रचूर्णानि यानि च । तानि गन्धाह्वयानि स्युः स गन्धः 'प्रथमः' स्मृतः ॥ घृष्टो मलयजो गन्धः सरलश्च नमेरुणा । अगरुप्रभृतिश्चापि यस्य पङ्कः प्रदीयते ॥ घृष्टा स तु गन्धोऽयं 'द्वितीयः' परिकीर्तितः । देवदार्वगुरुब्रह्मसालसारान्तचन्दनादीनां च यो दग्ध्वा गृह्यते दाहजो रसः । स दाहाकर्षितो गन्ध 'स्तृतीयः' परिकीर्तितः ॥ सगन्धः कारवी बिल्वं गन्धिनी तिलकं तथा । प्रभृतीनां

१ देवानां 'गन्धं नित्यमनामिकयाऽनुलेपयेत् ॥

योसौ निष्पीड्य परिगृह्यते ॥ स संमर्दोद्भवो गन्धः 'संमर्दज' इतीर्यते । मृगनाभिसमुद्भूतस्तत्कोशोद्भव एव वा ॥ गन्धः प्राण्यङ्गजः प्रोक्तो मोददः स्वर्गवासिनाम् ।कर्पूरगन्धसाराद्याः क्षौद्रे घृष्टे च संस्थिताः॥चन्द्रभागादयश्चापि रसे पङ्के च सङ्गताः । गन्धसारस्तु सर्वत्र संसर्गादौ प्रयुज्यते ॥ मृगनाभिर्भवेद्धृष्टश्चूर्णोऽप्यन्यस्य योगतः । एवं सर्वस्तु सर्वत्र गन्धो भवति पञ्चधा ॥ सर्वेषु गन्धजातेषु प्रशस्तो मलयोद्भवः। तस्मात्सर्वप्रयत्नेन दद्यान्मलयजं सदा ॥ कृष्णागुरुः सकर्पूरः सहितो मलयोद्भवैः । वैष्णवप्रीतिदो गन्धः कामाख्यायाश्च भैरवौ ॥ कुङ्कुमागरुकस्तूरीचन्द्रभागैः समीकृतैः । त्रिदशप्रीतिदो गन्धस्तथा चण्ड्याश्च शम्भुना ॥ गन्धेन लभते कामं गन्धो धर्मप्रदः सदा । अर्थानां साधको गन्धो गन्धे मोक्षः प्रतिष्ठितः ॥

३०६. **'पुष्पार्पणप्रकारः.'** **कालिकापुराणे**—पत्रं वा यदि वा पुष्पं फलं वापि तथैव च । केशवार्थे शिवार्थे वा यथोत्पन्नं तथार्पयेत् ॥ मध्यमाऽनामिकामध्ये पुष्पं सङ्गृह्य पूजयेत् । अङ्गुष्ठतर्जनीभ्यां तु निर्माल्यमपनोदयेत् ॥

३०७. **'तुलसीग्रहणविचारः.'** **वायुपुराणे**—अस्नात्वा तुलसीं छित्वा यः पूजां कुरुते नरः। सोऽपराधी भवेत्सत्यं तत्सर्वं निष्फलं भवेत्॥ **पाद्मे**—देवार्थे तुलसीछेदो होमार्थे समिधां तथा। इन्दुक्षये न दुष्येत गवार्थे तु तृणस्य च ॥ पूर्णिमायाममायां च द्वादश्यां रविसङ्क्रमे । तैलाभ्यङ्गे च स्नातेन मध्याह्ने निशि सन्ध्ययोः ॥ अशौचेऽशुचिकाले च रात्रिवासान्वितेऽपि वा । तुलसीं ये च चिन्वन्ति ते छिन्दन्ति हरेः शिरः ॥ **वाचस्पतौ** शालग्रामशिलार्चार्थं प्रत्यहं तुलसीक्षितौ । तुलसीं ये विचिन्वन्ति धन्यास्ते करपल्लवाः ॥ सङ्क्रान्त्यादौ निषिद्धेऽपि तुलस्यवचयः स्मृतः ॥ **स्कान्दे**—मन्त्रेणानेन यः कुर्यात्तुलसीदलसञ्चयम् । पूजनं वासुदेवस्य लक्षकोटिफलं लभेत् ॥

३०८. **'तुलसीपत्रग्रहणमन्त्रः'**—तुलस्यमृतजन्मासि सदा त्वं केशवप्रिया । केशवार्थे चिनोमि त्वां वरदा भव शोभने ॥ त्वदङ्गसम्भवैः पत्रैः पूजयामि यथा हरिम् । तथा कुरु पवित्राङ्गि कलौ मलविनाशिनी ॥

३०९. **'बिल्वपत्रम्.'** पटले—त्रिजटापत्रकैकेन हेरम्बं हरिमर्चयेत् । कैवल्यं तस्य तेनैव शक्तिपूजा विशेषतः ॥ पत्रं पुष्पं फलं तोयं नैवेद्यं धूपदीपकौ । दत्त्वा यद्यत्फलं प्राप्यं तस्मात्कोटिगुणं भवेत् ॥ पत्रं वा यदि

वा पुष्पं फलं नेष्टमधोमुखम्। यथोत्पन्नं तथा देयं बिल्वपत्रमधोमुखम्। षण्मासानन्तरं बिल्वपत्रं पर्युषितं भवेत्। पूज्या एतेन वै देवाः सूर्यलम्बो दरौ विना॥

३१०. 'पूजायां ग्राह्यपुष्पाणि.' स्मृत्यन्तरे—समित्पुष्पकुशादीनि ब्राह्मणः स्वयमाहरेत्। पङ्कजं पञ्चरात्रं स्याद्दशरात्रं च बिल्वकम्। एका दशाहं तुलसी नैव पर्युषिता भवेत्। जाती शमी कुशाः कङ्कु मल्लिका करवीरजम्॥ नागपुन्नागकाऽशोकरक्तनीलोत्पलानि च। चम्पकं बकुलं चैव पद्म बिल्वं पवित्रकम्॥ एतानि सर्वदेवानां सङ्ग्राह्याणि समानि च। अन्यच्च—बिल्वाऽपामार्गजातीतुलसिशमिशताकेतकीभृङ्गदूर्वामान्दाभोज हिदर्भामुनितिलतगरब्रह्मकह्लारमह्वचः। चम्पाश्वारातिकुम्भीदमनमरुक बिल्वतोहानिशस्ताश्त्रिशरूयेकार्यरीशोदधिनिधिवसुभूर्भूयमा भूय एवम्। 'देवतानामतिप्रियाणि पुष्पाणि पत्राणि वा'—शङ्करस्य बिल्वपत्रम् विष्णोस्तुलसी। गणेशस्य दूर्वाङ्कुरः। अम्बाया नानाविधपुष्पाणि। सूर्यस्य रक्तं करवीरपुष्पम्॥

३११. 'पञ्चपुष्पाणि.' देवीपुराणे—चम्पकाम्रशमीपद्मकरवीरैः पञ्चकम्॥

३१२. 'पुष्पाऽभावे.' भविष्ये—अलाभे तु सुपुष्पाणां पत्राणि निवेदयेत्। पत्राणामप्यलाभे तु तृणगुल्मौषधीरपि॥ औषधीनामलाभे भक्त्या भवति पूजनम्। यत्पुण्यं प्रतिपुष्पे तु तद्दशधा स्वर्णनिर्मिते॥

३१३. 'वर्ज्यपुष्पाणि.' भविष्ये—कृमिकीटावपन्नानि शीर्णप र्युषितानि च॥ स्वयं पतितपुष्पाणि त्यजेदुपहितानि च मुकुलैर्नार्चयेद्देवमपक्कं न निवेदयेत्॥ शूद्रानीतैः क्रयक्रीतैः कुर्वन्पतत्यधः। तद्धारी चैव नान्यान्वै निर्माल्यं तद्धवेत्तयोः॥ तथा दे परि धृतं वामहस्ते धृतं च यत्। अधोवस्त्रधृतं चैव जलेन क्षालितं यत्। देवतास्तन्न गृह्णन्ति पुष्पं निर्माल्यतां गतम्॥ वार्तिके—नाङ्गुष्ठे दर्शयेद्देवं नाऽधःपुष्पैः समर्चयेत्। कुशाग्रैर्न क्षिपेत्तोयं वज्रपातसमं भवेत् न शुष्कैः पूजयेद्देवं कुसुमैर्न महीगतैः। न विशीर्णदलैः शिष्टैर्नाऽशुभै विकाशितैः॥ पूतिगन्धोग्रगन्धीनि स्वल्पगन्धीनि वर्जयेत्॥ हारीतः—

(१) नित्यपूजार्थं परोपवनादेरपि ग्राह्याणि न च तच्चौर्यम्॥ (२) उपार्जितैः मलादिभिः॥

कृत्वा तु यत्किञ्चित्पुष्पं गृह्णन्ति वै द्विजाः ।[1] पितरस्तन्न गृह्णन्ति न गृह्णन्ति च देवताः ॥ उक्तं च—वस्त्रानीतं करानीतं स्वयं पतितमेव च । एरण्डपत्रैरानीतं न तस्य फलभाग्भवेत् ॥ भट्टिः—अक्षतैर्नार्चयेद्विष्णुं न तुलस्या विनायकम् ॥ न दूर्वया यजेद्दुर्गां नोन्मत्तेन दिवाकरम् ॥ ज्ञानमालायाम्—नाक्षतैरर्चयेद्विष्णुं न तुलस्या गणाधिपम् । न दूर्वया यजेद्देवीं बिल्वपत्रैश्च भास्करम् ॥ उन्मत्तमर्कपुष्पं च विष्णोर्वर्ज्यं सदा बुधैः । फलं च कृमिसंयुक्तं प्रयत्नात्तद्विवर्जयेत् ॥

३१४. 'पञ्चरत्नानि.' धन्वन्तरीयनिघण्टे—नीलकं वज्रकं चेति पद्मरागश्च मौक्तिकम् । प्रवालं चेति विज्ञेयं पञ्चरत्नं मनीषिभिः ॥ अन्यच्च-सुवर्णं रजतं मुक्ता राजावर्तं प्रवालकम् । एतानि रत्नपञ्चकमाख्यातमिति ॥ कनकं हीरकं नीलं पद्मरागश्च मौक्तिकमिति ॥ अभावे सर्वरत्नानां हेम सर्वत्र योजयेत् ॥

३१५. 'पञ्चपल्लवानि.' ग्रन्थान्तरे—आम्रजम्बूकपित्थानां बीजपूरकबिल्वयोः । गन्धकर्मणि सर्वत्र पत्राणि पञ्चपल्लवम् ॥ शब्दचन्द्रिकायाम्—अश्वत्थोदुम्बरप्लक्षचूतन्यग्रोधपल्लवाः । पञ्चपल्लवमित्युक्तं सर्वकर्मणि शोभनम् । तान्त्रिककर्मणि तु—पनसाम्रं तथाश्वत्थं वटं बकुलमेव च इति ॥

३१६. 'धूपः.' वामने—हिरुका कङ्कणं दारु मल्लिकाऽगुरुवासिता । शङ्खजातीफलं श्रीमत्प्रिया धूपा हरेरिमे ॥ आयुर्वेदे—घृतगुग्गुलुपाटीरहेगरू ( अगरु ) शीरचन्दनम् । घनं लाक्षाकुष्ठनखं दशाङ्गः प्रोच्यते बुधैः ॥ शारदायाम्—गुग्गुलं सरलं दारु पत्रं मलयसम्भवम् । न्हीबेरमगुरुं कुष्ठं गुडं सर्जरसं घनम् ॥ हरीतकीं नखीं लाक्षां जटामांसीं च शैलजाम् । षोडशाङ्गं विदुर्धूपं दैवे पैत्र्ये च कर्मणि ॥ यथा गन्धं तथा देवि धूपं दद्याद्विचक्षणः । मध्यमानामिकाङ्गुल्योर्मध्यभागे विधारयेत् ॥ अङ्गुष्ठाऽग्रेण देवेशि धृत्वा धूपं निवेदयेत् । तथा समर्पयेद्धूपं घण्टावाद्यजयस्वनैः ॥

३१७. 'दीपम्.' कालिकापुराणे—न मिश्रीकृत्य दद्यात्तु दीपं स्नेहे घृतादिकम् । घृतेन दीपकं नित्यं तिलतैलेन वा पुनः ॥ ज्वालयेन्मुनिशार्दूल सन्निधौ जगदीशितुः । कार्पासवर्तिका ग्राह्या न दीर्घा न च सूक्ष्मका ॥

(१) शुष्कवस्त्रपरिधानाद्भस्मादिधारणाच्च पूर्वमिति शेषः ।

३१८. 'नैवेद्यपात्रम्.' पाद्मे—हैरण्यं राजतं कांस्यं ताम्रं मृ-
मेव च। पालाशं पद्मपत्रं वा पात्रं त्रिष्णोरतिप्रियम्॥

३१९. 'देवतानैवेद्यार्पणविधिः.' आश्वलायनः—वैश्वदेवं
कृत्वा नित्ये चाभ्युदये तथा। स्वाभीष्टदेवतादिभ्यो नैवेद्यं च निवेद-
अकृत्वा वैश्वदेवं तु नैवेद्यं यो निवेदयेत्। तदन्नं न च गृह्णन्ति देवा
ष्णवादयो ध्रुवम्॥ स्कान्दे—नानाव्यञ्जनसंयुक्तं रसषट्कैस्तु संस्कृत
निवेद्याऽन्नं समाप्नोति फलं यज्ञाधिकं द्विजः॥ ब्रह्मसंहितायाम्—तु
गन्धपुष्पैश्च सम्पूज्याऽन्नं हरेः प्रियम्। सम्प्रोक्ष्यार्घ्यजलेनैव संरक्ष्या
सर्वदा। धेनुमुद्रां प्रदर्श्याथ ततो देवं निवेदयेत्॥ गौतमः—अथाऽ
पस्तरणमसि स्वाहार्पयेज्जलम्। चन्द्रिकायाम्—प्राणापानव्यानोदानस-
नास्तारपूर्वकाः। चतुर्थ्याग्निवधूयुक्ताः प्राणमन्त्राः स्मृता इति॥ भविष्ये-
पानीयं चामृतीकृत्य परेशाय निवेदयेत्। मूलमन्त्रं (गायत्रीमन्त्रं) जं
ततो नारायणात्मकम्॥ अष्टोत्तरशतं चैव अष्टाविंशतिमेव वा। क्षणं
स्मृश्य मतिमान् दद्यादाचमनं ततः। पाद्मे—हविः शाल्योदनं दिव्यमा
युक्तं च शर्कराम्। नैवेद्यं देवदेवाय यावकं पायसं तथा। नैवेद्यवस्त्र
तु फलानि च निवेदयेत्। फलानामप्यलाभे तु तोयान्यपि निवेदयेत्

३२०. देवताघृतशर्करादिनैवेद्यार्पणविधिः—ततः नै
'नाभ्याआसी'दिति मन्त्रेण तुलसीदलेन सम्प्रोक्ष्य नैवेद्योपरि तत्तुल
निधाय धेनुमुद्रां प्रदर्श्य सव्यहस्तस्याङ्गुलयः समानाः कृत्वा नैवेद्यमर्प
तद्यथा—ॐ प्राणाय स्वाहा। ॐ अपानाय स्वाहा। ॐ व्या
स्वाहा। ॐ समानाय स्वाहा। ॐ उदानाय स्वाहा। इति सम
नैवेद्यमध्ये पानीयं दत्वा हस्तप्रक्षालनं मुखप्रक्षालनं करोद्व
चन्दनं च समर्पयेत्॥

३२१. सिद्धान्नसोपस्करनैवेद्यार्पणविधिः वैश्वदेवप्रयोगे द्रष्ट

३२२. 'नैवेद्यभक्षणविचारः.' पाद्मे—द्रव्यमन्नं फलं तोयं
स्वं न स्पृशेत्क्वचित्। लङ्घयेन्नैव निर्माल्यं कूपे सर्वं परित्यजेत्॥
मन्नं तुलसीविमिश्रं विशेषतः पादजलेन सिक्तम्। योऽश्नाति नित्यं
मुरारेः प्राप्नोति लक्षाऽयुतकोटिपुण्यम्॥ शिवनारदसंवादे—बाणा
चण्डांशोर्न च निर्माल्यकल्पना। सर्वं बाणार्पितं ग्राह्यं शक्त्या भक्त्या

(१) नित्यशः पूजासमये शर्कराखण्डखाद्यादि नैवेद्यं समर्प्य॥ (२) ॐ
नमः इति केचित्॥

न्यथा ॥ ग्राह्याग्राह्यविचारोऽयं बाणलिङ्गे न विद्यते । तदर्पितं जलं चाऽन्नं ग्राह्यं प्रसादसंज्ञया ॥ बाणलिङ्गे स्वयम्भूते चन्द्रकान्ते हृदि स्थिते । चान्द्रायणसमं ज्ञेयं शम्भोर्नैवेद्यभक्षणम् ॥ पाद्मे—मक्षिकापादमात्रं यः शिवस्वमुपजीवति । लोभान्मोहात्स पच्येत कल्पान्तं नरके नरः ॥ पाद्मस्कान्दब्राह्मपुराणसङ्ग्रहेषु—अनर्हं मम नैवेद्यं पत्रं पुष्पं फलं जलम् । शालग्रामशिलालग्नं सर्वं याति पवित्रताम् । नैवेद्यं मे नरो भुक्त्वा शुद्धौ चान्द्रायणं चरेत् ॥

३२३. 'ताम्बूलम्.' पाद्मे—सुपूगं च सुपत्रं च चूर्णेन च समन्वितम् । दद्यात्तु द्विजदेवेभ्यस्ताम्बूलं प्रीतिपूर्वकम् ॥

३२४. 'प्रदक्षिणाः.' बह्वृचपरिशिष्टे—एकां विनायके कुर्याद्द्वे सूर्ये तिस्र ईश्वरे । चतस्रः केशवे कुर्यात्सप्ताश्वत्थे प्रदक्षिणाः ॥ अन्यत्र तु—एका चण्ड्या रवेः सप्त तिस्रः कार्या विनायके । हरेश्चतस्रः कर्तव्याः शिवस्यार्धप्रदक्षिणा ॥ वृषं चण्डं वृषं चैव सोमसूत्रं पुनर्वृषम् । चण्डं च सोमसूत्रं च पुनश्चण्डं पुनर्वृषम् । अपसव्यं यतीनां तु सव्यं तु ब्रह्मचारिणाम् । सव्याऽपसव्यं गृहिणामेवं शम्भोः प्रदक्षिणा ॥ तथाग्नेय्ये—सव्यं व्रजेत्ततोऽसव्यं प्रनालं नैव लङ्घयेत् ॥

३२५. 'मन्त्रपुष्पम्.' देवपूजाविधिः—नानासुगन्धपुष्पाणि यथाकालोद्भवानि च । पुष्पाञ्जलिः शुभा देया देवताप्रीतये सदा ॥

३२६. 'साष्टाङ्गनमस्कारः.' ग्रन्थान्तरे—उरसा शिरसा दृष्ट्या मनसा वचसा तथा । पद्भ्यां कराभ्यां जानुभ्यां प्रणामोऽष्टाङ्ग उच्यते ॥

३२७. 'देवतीर्थविचारः.' हलायुधे—शिला ताम्रं तथा तोयं शङ्खः पुरुषसूक्तकम् । गन्धं घण्टा च तुलसीत्यष्टाङ्गं तीर्थमुच्यते ॥ स्कान्दे—कुङ्कुमं चन्दनं पत्रं नैवेद्यं सुसमं जलम् । शालग्रामशिलालग्नं तीर्थं कोटिशताधिकम् ॥ भविष्ये—विष्णुपादाभिषिक्तं यः पात्रेणैव पिबेज्जलम् । सर्वपापविनिर्मुक्तः स याति परमां गतिम् ॥ यः पादसलिलं विष्णोः करेण पिबते यदि । स मूढो नरकं याति यावदिन्द्राश्चतुर्दश ॥ पुलस्त्यः—शालग्रामशिलावारि सोमपानं दिने दिने । पात्रान्तरेण तद्ग्राह्यं करेण सुरया समम् ॥ अगस्त्यः—शालग्रामशिलातोयमपीत्वा यस्तु मस्तके । प्रक्षेपणं प्रकुर्वीत ब्रह्महा स निगद्यते ॥ गरुडपुराणे—जलं न येषां तुलसीविमिश्रं पादोदकं चक्रशिलासमुद्भवम् । नित्यं त्रिसन्ध्यं प्लवते च गात्रं खगेन्द्र ते धर्मबहिष्कृता नराः ॥ पादोदकं पिबेन्नित्यं नैवेद्यं भक्षयेद्धरेः । शेषं मस्तके धार्यमिति वेदानुशासनम् ॥

३२८. 'निर्माल्यग्रहणविचारः.' पाद्मे—विष्णुदेयपरामृष्टं पापहरं स्मृतम् । यो नरः शिरसा धत्ते स याति हरिमञ्जसा । ब्राह्मं ब्रह्माञ्जलग्नं विप्रेभ्यो वैष्णवं च प्रदीयते । रुद्राञ्जलग्नमग्नौ तु देहल्यां तत्क्षणात् । शिष्टेभ्यस्त्वथ देवेभ्यो दत्तं दीनेषु निक्षिपेत् ॥

३२९. 'नवविधाभक्तिः.' पिप्पलायनः—श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम् । अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम् ॥ पुंसाऽर्पिता विष्णौ भक्तिश्चेन्नवलक्षणा । क्रियते भगवत्यद्धा सोऽपि याति परां गतिम् ॥

३३०. 'उत्तरपूजाप्रकारः.' ब्राह्मणसर्वस्वे हलायुधः—नारायणमन्त्रस्य उत्तरनारायणऋषिः । पुरुषो देवता । आद्यास्तिस्त्रस्त्रिष्टुभोऽन्त्ये अनुष्टुभौ । उत्तरपूजने विनियोगः—ॐ अद्भ्यः सम्भृत इत्यादि श्रीश्च ते लक्ष्मीश्च पत्न्यावित्यन्तैः षण्मन्त्रैरुत्तरपूजा कर्तव्या ॥ (एते षण्मन्त्रा रुद्रे द्वितीयाध्याये द्रष्टव्याः ) ॥

३३१. 'पूजाफलम्.' शम्भुरहस्ये—स्वयं यजति चेद्देवमुत्तमा दरात्मजैः । मध्यमा या यजेद्भृत्यैरधमा याजनक्रिया ॥ भविष्ये—जितधनक्रीतैर्यः कुर्यात्केशवार्चनम् । उद्धरेत्स्वेन सहितान्दशपूर्वान् परान् ॥ महाभारते—कलौ कलिमलध्वंसं सर्वपापहरं हरिम् । ये यजन्ति नरा नित्यं तेपि वन्द्या यथा हरिः ॥

देवागारम्.




३३२. 'अथ देवपूजाप्रयोगः.'— '[१]आचम्य प्राणानायम्य 'सुशान्तिर्भवतु' ॥ 'मङ्गलोचारणम्'—ॐ स्वस्ति न॒ऽइ

(१) अस्याःसूत्रावल्यां १७१ परिच्छेद ४६ पृष्ठे दर्शितक्रमेण 'आचमनप्राणायामादि' ज्ञेयम् ॥

वृद्धश्श्रवाऽस्वस्ति नः पूषा विश्ववेदाः । स्वस्ति नस्तार्क्ष्योऽअरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु । १ १९/२५ ॥ भद्रङ्कर्णेभिः शृणुयाम देवा भद्रम्पश्येमाक्षभिर्यजत्राः । स्थिरैरङ्गैस्तुष्टुवाꣳसस्तनूभिर्व्यशेमहि देवहितं यदायुः । २ २१/२५ ॥ तम्पत्नीभिरनुगच्छेम देवाः पुत्रैर्भ्रातृभिरुत वा हिरण्यैः । नाकङ्गृभ्णानाः सुकृतस्य लोके तृतीये पृष्ठेऽअधि रोचने दिवः । ३ ५०/१५ ॥

'नमस्काराः'—श्रीमन्महागणाधिपतये नमः । इष्टदेवताभ्यो नमः । कुलदेवताभ्यो नमः । ग्रामदेवताभ्यो नमः । स्थानदेवताभ्यो नमः । वास्तुदेवताभ्यो नमः । वाणीहिरण्यगर्भाभ्यां नमः । श्रीलक्ष्मीनारायणाभ्यां नमः । श्रीउमामहेश्वराभ्यां नमः । शचीपुरन्दराभ्यां नमः । मातापितृचरणकमलाभ्यां नमः । सर्वेभ्यो देवेभ्यो नमः । सर्वेभ्यो ब्राह्मणेभ्यो नमो नमः । निर्विघ्नमस्तु ॥ सुमुखश्चैकदन्तश्च कपिलो गजकर्णकः । लम्बोदरश्च विकटो विघ्ननाशो गणाधिपः ॥ धूम्रकेतुर्गणाध्यक्षो भालचन्द्रो गजाननः । द्वादशैतानि नामानि यः पठेच्छृणुयादपि ॥ विद्यारम्भे विवाहे च प्रवेशे निर्गमे तथा । सङ्ग्रामे सङ्कटे चैव विघ्नस्तस्य न जायते ॥ शुक्लाम्बरधरं देवं शशिवर्णं चतुर्भुजम् । प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये ॥ अभीप्सितार्थसिद्ध्यर्थं पूजितो यः सुरासुरैः । सर्वविघ्नहरस्तस्मै गणाधिपतये नमः ॥ सर्वमङ्गलमाङ्गल्ये शिवे सर्वार्थसाधिके । शरण्ये त्र्यम्बके गौरि नारायणि नमोऽस्तु ते ॥ सर्वदा सर्वकार्येषु नास्ति तेषाममङ्गलम् । येषां हृदिस्थो भगवान्मङ्गलायतनं हरिः ॥ तदेव लग्नं सुदिनं तदेव ताराबलं चन्द्रबलं तदेव । विद्याबलं दैवबलं तदेव लक्ष्मीपते तेऽङ्घ्रियुगं स्मरामि ॥ लाभस्तेषां जयस्तेषां कुतस्तेषां पराजयः । येषामिन्दीवरश्यामो हृदयस्थो जनार्दनः ॥ यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः । तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम ॥ सर्वेष्वारम्भकार्येषु त्रयस्त्रिभुवनेश्वराः । देवा दिशन्तु नः

सिद्धिं ब्रह्मेशानजनार्दनाः ।। विनायकं गुरुं भानुं ब्रह्मविष्णुमहेश्वरान् । सरस्वतीं प्रणौम्यादौ सर्वकार्यार्थसिद्धये ।। 'सङ्कल्पः'[1]—विष्णुर्विष्णुर्विष्णुः श्रीमद्भगवतो महापुरुषस्य विष्णोराज्ञया प्रवर्त्तमानस्य अद्य ब्रह्मणः द्वितीये परार्द्धे श्रीश्वेतवाराहकल्पे वैवस्वतमन्वन्तरे अष्टाविंशतितमे कलियुगे कलिप्रथमचरणे भारतवर्षे (भारतखण्डे) जम्बुद्वीपे रामक्षेत्रे परशुरामाश्रमे दण्डकारण्यदेशे श्रीगोदावर्याः पश्चिमदिग्भागे श्रीमल्लवणाब्धेरुत्तरे तीरे श्रीशालिवाहनशाके बौद्धावतारे अस्मिन्वर्तमाने अमुकनामसंवत्सरे अमुकायने अमुकर्तौ अमुकमासे अमुकपक्षे अमुकवासरे अमुकतिथौ अमुकनक्षत्रे अमुकराशिस्थिते चन्द्रे अमुकराशिस्थिते श्रीसूर्ये अमुकराशिस्थिते देवगुरौ शेषेषु ग्रहेषु यथायथाराशिस्थानस्थितेषु सत्सु एवंगुणविशेषेण विशिष्टायां शुभपुण्यतिथौ ममाऽऽत्मनः श्रुतिस्मृतिपुराणोक्तफलप्राप्त्यर्थं [मम ऐश्वर्याभिवृद्ध्यर्थम् । अप्राप्तलक्ष्मीप्राप्त्यर्थम्। प्राप्तलक्ष्म्याश्चिरकालसंरक्षणार्थम्। सकलमनईप्सितकामनासंसिद्ध्यर्थम्। लोके वा सभायां राजद्वारे वा सर्वत्र यशोविजयलाभादिप्राप्त्यर्थम् । इह जन्मनि जन्मान्तरे वा सकलदुरितोपशमनार्थम् ।। तथा मम सभार्यस्य सपुत्रस्य सबान्धवस्य अखिलकुटुम्बसहितस्य सपशोः समस्तभयव्याधिजरापीडामृत्युपरिहारद्वारा आयुरारोग्यैश्वर्याभिवृद्ध्यर्थम् । तथा मम जन्मराशेरखिलकुटुम्बस्य वा जन्मराशेः सकाशाद्ये केचिद्विरुद्धचतुर्थाष्टमद्वादशस्थानस्थितक्रूरग्रहास्तैः सूचितं सूचयिष्यमाणं च यत्सर्वारिष्टं तद्विनाशद्वारा एकादशस्थानस्थितवच्छुभफलप्राप्त्यर्थम्। पुत्रपौत्रादिसन्ततेरविच्छिन्नवृद्ध्यर्थम्। आदित्यादिनवग्रहानुकूलतासिद्ध्यर्थम्। तथा इन्द्रादिदशदिक्पालप्रसन्नतासिद्ध्यर्थम् । आधिदैविकाऽधिभौतिकाऽध्यात्मिकत्रिविधतापोपशमनार्थम् । धर्मार्थकाममोक्षफलाप्त्यर्थं च] ॐ भूर्भुवः स्वः श्रीअमुकपञ्चायतनदेवताप्रीत्यर्थं यथाज्ञानेन यथामिलितोपचारद्रव्यैः पुरुषसूक्तेन ध्यानाऽऽवाहनादि षोडशोपचारैः पूजनमहं करिष्ये ।। तत्रादौ (षडङ्गन्यासपूर्वकं पुरुषसूक्त...

(१) अयं सङ्कल्पः देशविशेषेण ग्राह्यः ।। (२) एतत् ध्यानावाहनन्यासादि ... कृतमस्ति । विशेषस्तु शिवविष्ण्वम्बादिदैवतोपयोगी यथायथा ग्राह्यध्यानावाहन... सन्ति ते च यथाविधि पठनीया इति ।। (३) 'षडङ्गन्यासाः' तथा 'षोडशाङ्गन्यासाः' अनुक्रमेण (११०) तथा (११२) पृष्ठे द्रष्टव्याः ।।

षोडशाङ्गन्यासपूर्वकं वा ) कलशादिपूजनं च करिष्ये ॥ 'कलशपूजनम्' तत्रादौ—'कलशाऽवाहनम्'—(सर्वे समुद्राः सरितस्तीर्थानि जलदा नदाः । आयान्तु देवपूजार्थं दुरितक्षयकारकाः । कलशस्य मुखे विष्णुः कण्ठे रुद्रः समाश्रितः । मूले तत्र स्थितो ब्रह्मा मध्ये मातृगणाः स्मृताः । कुक्षौ तु सागराः सर्वे सप्तद्वीपा वसुन्धरा । ऋग्वेदोऽथ यजुर्वेदः सामवेदो ह्यथर्वणः । अङ्गैश्च सहिताः सर्वे कलशं तु समाश्रिताः ॥)—ततो—'वरुणाऽवाहनम्'—ॐ तत्त्वा । यामि ब्रह्मणा व्वन्दमानस्तदाशास्ते यजमानो हविर्भिः । अहेडमानो व्वरुणे हबोध्युरुशꣳ समानऽआयुः प्रमोषीः । ४$\frac{४३}{१८}$ ॥ ( अस्मिन्कलशे वरुणं साङ्गं सपरिवारं साऽयुधं सशक्तिकमावाहयामि ॥) ततः—'कलशप्रार्थना'—देवदानवसंवादे मथ्यमाने महोदधौ । उत्पन्नोऽसि सदा कुम्भ विधृतो विष्णुना स्वयम् । त्वत्तोये सर्वतीर्थानि देवाः सर्वे त्वयि स्थिताः । त्वयि तिष्ठन्ति भूतानि त्वयि प्राणाः प्रतिष्ठिताः । शिवः स्वयं त्वमेवाऽसि विष्णुस्त्वं च प्रजापतिः । आदित्या वसवो रुद्रा विश्वेदेवाः सपैतृकाः । त्वयि तिष्ठन्ति सर्वेपि यतः कामफलप्रदाः । त्वत्प्रसादादिमां पूजां कर्तुमीहे जलोद्भव । सान्निध्यं कुरु मे देव प्रसन्नो भव सर्वदा । प्रसन्नो भव । वरदो भव ॥)—ॐ भूर्भुवःस्वः कलशस्थवरुणाय नमः आवाहयामि सर्वोपचारार्थे गन्धाक्षतपुष्पाणि समर्पयामि । नमस्करोमि ॥ अनन्तरं कलशोदकेन पूजाद्रव्याणि तथाऽत्मानं च 'अपवित्र' 'आपोहिष्ठा' इत्यादिमन्त्रेण वा सम्प्रोक्ष्य यथा—अपवित्रः पवित्रो वा सर्वावस्थां गतोऽपि वा । यः स्मरेत्पुण्डरीकाक्षं स बाह्याभ्यन्तरः शुचिः ॥ ॐ आपोहि । ष्ठा मयो भुवस्तानꣳ ऽऊर्ज्जे दधातन । महेरणाय चक्षसे । ५$\frac{१४}{३६}$ ॥ यो वः शिवतमो रसस्तस्य भाजयतेह नः । उशतीरिव मातरः । ६$\frac{१५}{३६}$ ॥ तस्माऽअरङ्गमामवो यस्य क्षयाय जिन्वथ । आपोजनयथा च नः । ७$\frac{१६}{३६}$ ॥ पश्चात्क-

(१) तत्रादौ कलशे जलं सम्पूर्य तत्र देवता आवाहयेत् ॥

लशमुद्रां प्रदर्श्य ॥ 'शङ्खपूजनम्'—( शङ्खादौ चन्द्रदैवत्यं कुक्षौ वरुण-
देवता । पृष्ठे प्रजापतिश्चैव अग्रे गङ्गा सरस्वती । त्रैलोक्ये यानि तीर्थानि
वासुदेवस्य चाज्ञया । शङ्खे तिष्ठंति विप्रेन्द्र तस्माच्छङ्खं प्रपूजयेत् । त्वं पुरा
सागरोत्पन्नो विष्णुना विधृतः करे । निर्मितः सर्वदेवैश्च पाञ्चजन्य नमोऽस्तु
ते । पाञ्चजन्याय विद्महे पावमानाय धीमहि । तन्नः शङ्खः प्रचोदयात् ॥)—

ॐ अ॒ग्निरृषि॑ः॒पव॑मान॒ः पाञ्च॑जन्यः पु॒रोहि॑तः । तमी॑-
महे महाग॒यम् * * । ८ $\frac{९}{२६}$ ॥ ॐ भूर्भुवः स्वः शङ्खस्थदे-
तायै नमः आवाहयामि सर्वोपचारार्थे गन्धपुष्पाणि समर्पयामि
नमस्करोमि । शङ्खमुद्रां प्रदर्श्य ॥ 'घण्टापूजनम्'—(आगमार्थं तु देवानां
गमनार्थं तु रक्षसाम् । घण्टानादं प्रकुर्वीत पश्चाद् घण्टां प्रपूजयेत् ॥)—

ॐ सु॒प॒र्णो॑ऽसि । ग॒रुत्म॑ाँस्त्रि॒वृत्ते॒ शिरो॑ गाय॒त्रञ्चक्षु॑र्बृ॒ह-
द्र॒थन्त॒रे प॒क्षौ । स्तोम॑ऽआ॒त्मा छन्दा॑ᳪंस्यङ्गा॑नि॒ यजू॑-
षि॒ नाम॑ । साम॑ ते त॒नूर्वा॑मदे॒व्यं य॑ज्ञाय॒ज्ञियं॒ पुच्छं॒
धिष्ण्या॑ः श॒फाः ॥ सु॒प॒र्णो॑ऽसि ग॒रुत्मा॒न्दिवं॑ गच्छ॒ स्वः॑
। ९ $\frac{४}{१२}$ ॐ भूर्भुवः स्वः घण्टास्थाय गरुडाय नमः आवाहयामि
सर्वोपचारार्थे गन्धपुष्पाणि समर्पयामि नमस्करोमि । घण्टामुद्रां प्र-
दर्श्य ॥ [अथ 'क्षेपकम्'—ततो—'दीपपूजनम्'—(भक्त्या दीपं प्रयच्छा-
मि देवाय परमात्मने । त्राहि मां निरयाद्घोराद्दीपज्योतिर्नमोऽस्तु ते ॥)—

ॐ अ॒ग्निर्ज्योति॒र्ज्योति॑र॒ग्निः स्वाहा॒ सूर्यो॒ ज्यो-
ति॒र्ज्योति॒ः सूर्य॒ः स्वाहा॑ । अ॒ग्निर्वर्चो॒ ज्योति॒र्वर्च॒ः
स्वाहा॒ सूर्यो॒ वर्चो॒ ज्योति॒र्वर्च॒ः स्वाहा॑ । ज्योति॒ः सूर्य॒ः
सूर्यो॒ ज्योति॒ः स्वाहा॑ । १० $\frac{३}{९}$ ॥ ॐ भूर्भुवः स्वः दीपस्थदे-
तायै नमः आवाहयामि सर्वोपचारार्थे गन्धाक्षतपुष्पाणि सम-
र्पयामि नमस्करोमि ॥ 'पञ्चायतनध्यानम्—तत्रादौ—'गणपति-
ध्यानम्'—( श्वेताङ्गं श्वेतवस्त्रं सितकुसुमगणैः पूजितं श्वेतगन्धैः
क्षीराब्धौ रत्नदीपैः सुरनरतिलकं रत्नसिंहासनस्थम् । दोर्भिः पाशाङ्कु-

(१) कलशमुद्राः (५१) पृष्ठे द्रष्टव्याः ॥ (२) शङ्खे जलपूरणानन्तरं भूयात् ॥ (३)
'शङ्खमुद्राः' ( ५२ ) पृष्ठे द्रष्टव्याः ॥ ( ४ ) 'घण्टामुद्राः' ( ५२ ) पृष्ठे द्रष्टव्याः ॥

ज्ञाभयवरमनंसं चन्द्रमौलिं त्रिनेत्रं ध्यायेच्छान्त्यर्थमीशं गणपतिममलं श्रीसमेतं प्रसन्नम् ॥)—ॐ नमो गुणेभ्यो । गुणपतिभ्यश्च वो नमो नमो व्रातेभ्यो व्रातपतिभ्यश्च वो नमो नमो गृत्सेभ्यो गृत्सपतिभ्यश्च वो नमो नमो विरूपेभ्यो विश्वरूपेभ्यश्च वो नमो नमः सेनाभ्यः ।११ २५/१६ ॥ 'देवीध्यानम्'—(नमो देव्यै महादेव्यै शिवायै सततं नमः । नमः प्रकृत्यै भद्रायै नियताः प्रणताः स्म ताम् ॥)—ॐ मनसः कामुमाकूतिं वाचः सत्यमशीय । पशूनाꣳ रूपमन्नस्य रसो यशः श्रीः श्रयतां मयि स्वाहा । १२ ४/३२ ॥ 'विष्णुध्यानम्'—(शान्ताकारं भुजगशयनं पद्मनाभं सुरेशं विश्वाधारं गगनसदृशं मेघवर्णं शुभाङ्गम् । लक्ष्मीकान्तं कमलनयनं योगिभिर्ध्यानगम्यं वन्दे विष्णुं भवभयहरं सर्वलोकैकनाथम् ॥)—ॐ विष्णो रराटमसि विष्णोः श्नप्त्रे स्थो विष्णोः स्यूरसि विष्णोर्ध्रुवोसि । वैष्णवमसि विष्णवे त्वा । १३ २१/५ ॥ 'शिवध्यानम्'—(ध्यायेन्नित्यं महेशं रजतगिरिनिभं चारुचन्द्रावतंसं रत्नाकल्पोज्ज्वलाङ्गं परशुमृगवराभीतिहस्तं प्रसन्नम् । पद्मासीनं समन्तात्स्तुतममरगणैर्व्याघ्रकृत्तिं वसानं विश्वाद्यं विश्ववन्द्यं निखिलभयहरं पञ्चवक्त्रं त्रिनेत्रम् ॥)—ॐ नमस्ते रुद्र मन्यव उतो त इषवे नमः । बाहुभ्यामुत ते नमः । १४ १/१६ ॥ 'सूर्यध्यानम्'—ध्येयः सदा सवितृमण्डलमध्यवर्ती नारायणः सरसिजासनसन्निविष्टः । केयूरवान्मकरकुण्डलवान्किरीटी हारी हिरण्मयवपुर्धृतशङ्खचक्रः॥)—ॐ सूर्य्य रश्मिर्हरिकेशः पुरस्तात्सविता ज्योतिरुदयाँ२ ॥ अजस्रम् । तस्य पूषा प्रसवे याति विद्वान्त्सम्पश्यन्विश्वा भुवनानि गोपाः । १५ ५८/१७ ॥ 'पञ्चायतनदेवतावाहनम्'—तत्र 'गणपतेरावाहनम्'—(आवाहयेत्तं गणराजदेवं रक्तोत्पलाभासमशेषवन्द्यम् । विघ्नान्तकं विघ्नहरं गणेशं भजामि रौद्रं सहितं च सिद्ध्या ॥)—ॐ गणानान्त्वा । गणपतिꣳ हवामहे प्रियाणान्त्वा प्रियपतिꣳ हवामहे निधीनान्त्वा नि-

धिपतिᳬहवामहे व्वसो मम । आहमजानि गर्ब्भधमा त्वमजासि गर्ब्भधम् । १६ ॥ 'देव्या आवाहनम्'—(स मार्ङ्गीं शशिशेखरां निजकरैर्दानं च रक्तोत्पलं रत्नाढ्यं कलशं परं भय सम्बिभ्रतीं शाश्वतीम् । मुक्ताहारलसत्पयोधरनतां नेत्रत्रयोल्लासिनीमा हेत्सुरपूजितां हरवधूं रक्तारविन्दस्थिताम् ॥)—ॐ * अम्बेऽअम्बि केम्बालिके नमा नयति कश्चन । स सस्त्यश्वकः सु भद्रिकाङ्काम्पीलवासिनीम् । १७ ॥ 'विष्णोरावाहनम्' (आवाहयेत्तं गरुडोपरि स्थितं रमार्धदेहं सुरराजवन्दितम् । कंसान्तकं चक्रगदाब्जहस्तं भजामि देवं वसुदेवसूनुम् ॥)—ॐ इदं व्विष्णुर्व्विचक्र त्रेधा निदधे पदम् । स मूढमस्य पाᳬसुरे स्वाहा ॥ १८ 'शिवस्यावाहनम्'—(एह्येहि गौरीश पिनाकपाणे शशाङ्कमौले वृष धिरूढ । देवाधिदेवेश महेश नित्यं गृहाण पूजां भगवन्नमस्ते ॥) । नमः शम्भवाय । च मयो भवाय च नमः शङ्कराय मयस्कराय च नमः शिवाय च शिवतराय च ॥ १९ 'सूर्यावाहनम्'—(आवाहयेत्तं द्विभुजं दिनेशं सप्ताश्ववाहं द्युमणिं ग्रहेश सिन्दूरवर्णप्रतिमावभासं भजामि सूर्यं कुलवृद्धिहेतोः ॥)—ॐ आकृ रजसा वर्त्तमानो निवेशयन्नमृतम्मर्त्त्यञ्च । हिरण्य सविता रथेनादेवो याति भुवनानि पश्यन् । २० ॐ भूर्भुवः स्वः श्रीअमुकपञ्चायतनदेवताभ्यो नमः आवा समर्पयामि ॥ इति क्षेपकम्] ॥ 'आवाहनम्'—(आगच्छ भग स्थाने चात्र स्थिरो भव । यावत्पूजां करिष्यामि तावत्त्वं सन्निधौ ॐ सहस्रशीर्षा पुरुषः । सहस्राक्षः सहस्रपात् । भिᳬसर्वतस्पृत्वात्त्यतिष्ठद्दशाङ्गुलम् । २१ ॥ भूर्भुवः स्वः श्रीअमुकपञ्चायतनदेवताभ्यो नमः आवाह ध्यानं समर्पयामि ॥ 'आसनम्'—(रम्यं सुशोभनं दिव्यं सर्वसौ शुभम् । आसनं च मया दत्तं गृहाण परमेश्वर ॥ )—ॐ पुरुषएवे

सर्व्वं स्यद्भूतं यच्च भाव्यम् । उतामृतत्त्वस्येशानो यदन्नेनातिरोहति । २२$\frac{२}{३१}$ ॥ ॐ भूर्भुवः स्वः श्रीअमुकपञ्चायतनदेवताभ्यो नमः आसनं समर्पयामि ॥ 'पाद्यम्'—(उष्णोदकं निर्मलं च सर्वसौगन्ध्यसंयुतम् । पादप्रक्षालनार्थाय दत्तं ते प्रतिगृह्यताम् ॥)—ॐ एतावानस्य । महिमा तो ज्ज्यायाँश्च पूरुषः । पादोऽस्य व्विश्वा भूतानि त्रिपादस्या मृतन्दिवि । २३$\frac{३}{३१}$ ॥ ॐ भूर्भुवः स्वः श्रीअमुकपञ्चायतनदेवताभ्यो नमः पाद्यं समर्पयामि ॥ 'अर्घ्यम्'—अर्घ्यं गृहाण देवेश गन्धपुष्पाक्षतैः सह । करुणाकर मे देव गृहाणार्घ्यं नमोऽस्तु ते ॥)—ॐ त्रिपादूर्ध्व उदैत्पुरुषः पादोऽस्येहा भवत्पुनः । ततो व्विष्वङ् व्व्यक्रामत्साशनानशने अभि । २४$\frac{४}{३१}$ ॥ ॐ भूर्भुवः स्वः श्रीअमुकपञ्चायतनदेवताभ्यो नमः अर्घ्यम् समर्पयामि ॥ 'आचमनम्'—सर्वतीर्थसमायुक्तं सुगन्धि निर्मलं जलम् । आचम्यतां मया दत्तं गृहीत्वा परमेश्वर ॥)—ॐ ततो व्विराडजायत व्विराजो अधिपूरुषः । स जातो अत्त्यरिच्यत पश्चाद्भूमिमथो पुरः । २५$\frac{५}{३१}$ ॥ ॐ भूर्भुवः स्वः श्रीअमुकपञ्चायतनदेवताभ्यो नमः आचमनीयं समर्पयामि ॥ 'स्नानम्'—(गङ्गासरस्वतीरेवापयोष्णीनर्मदाजलैः । स्नापितोऽसि मया देव तथा शान्तिं कुरुष्व मे ॥)—ॐ तस्माद्यज्ञात्सर्व्वहुतः सम्भृतम्पृषदाज्ज्यम् । पशूँस्ताँश्चक्रे व्वायव्व्यानारण्याग्ग्राम्याश्च ये । २६$\frac{६}{३१}$ ॥ ॐ भूर्भुवः स्वः श्रीअमुकपञ्चायतनदेवताभ्यो नमः स्नानं समर्पयामि ॥ [अथ 'क्षेपकम्'—'पञ्चामृतस्नानम्'—(एकमन्त्रेण पञ्चामृतस्नानम्)—(पयो दधि घृतं चैव मधु च शर्करायुतम् । पञ्चामृतं मयानीतं स्नानार्थं प्रतिगृह्यताम् ॥)—ॐ पञ्चनद्यः सरस्वतीमपियन्ति स स्रोतसः । सरस्वती तु पञ्चधा सो देशे भवत्सरित् । २७$\frac{११}{३४}$ ॥ ॐ भूर्भुवः स्वः श्रीअमुकपञ्चायतनदेवताभ्यो नमः पञ्चामृतस्नानं समर्पयामि ॥ पञ्चामृतस्नानान्ते शुद्धोदकस्नानं समर्पयामि । शुद्धोदकस्नानान्ते आचम-

नीयं समर्पयामि॥ अथवा 'पृथग्मन्त्रेण पञ्चामृतस्नानम्'—तत्र—'पयःस्नानम्'—(कामधेनुसमुत्पन्नं सर्वेषां जीवनं परम्। पावनं यज्ञहेतुश्च पयः स्नानार्थमर्पितम्॥)—ॐ पयः पृथिव्यां पयऽओषधीषु पयो दिव्यन्तरिक्षे पयो धाः। पयस्वतीः प्रदिशः सन्तु मह्यम्॥२८ $\frac{३६}{१८}$॥ ॐ भूर्भुवः स्वः श्रीअमुकपञ्चायतनदेवताभ्यो नमः पयःस्नानं समर्पयामि । पयःस्नानान्ते शुद्धोदकस्नानं समर्पयामि । शुद्धोदकस्नानान्ते आचमनीयं समर्पयामि ॥ 'दधिस्नानम्'—(पयसस्तु समुद्भूतं मधुराम्लं शशिप्रभम्। दध्यानीतं मया देव स्नानार्थं प्रतिगृह्यताम्॥) ॐ दधिक्राव्णोऽअकारिषं जिष्णोरश्वस्य वाजिनः । सुरभि नो मुखाकरत्प्रणऽआयूँषि तारिषत् । २९ $\frac{३२}{२३}$ ॥ ॐ भूर्भुवः स्वः श्रीअमुकपञ्चायतनदेवताभ्यो नमः दधिस्नानं समर्पयामि । दधिस्नानान्ते शुद्धोदकस्नानं समर्पयामि । शुद्धोदकस्नानान्ते आचमनीयं समर्पयामि ॥ 'घृतस्नानम्'—(नवनीतसमुत्पन्नं सर्वसन्तोषकारकम् । घृतं तुभ्यं प्रदास्यामि स्नानार्थं प्रतिगृह्यताम् ॥)—ॐ घृतं मिमिक्षे । घृतमस्य योनिर्घृते श्रितो घृतम्वस्य धाम । अनुष्वधमावह मादयस्व स्वाहाकृतं वृषभ वक्षि हव्यम् । ३० $\frac{८८}{१७}$ ॥ ॐ भूर्भुवः स्वः श्रीअमुकपञ्चायतनदेवताभ्यो नमः घृतस्नानं समर्पयामि । घृतस्नानान्ते शुद्धोदकस्नानं समर्पयामि । शुद्धोदकस्नानान्ते आचमनीयं समर्पयामि ॥ 'मधुस्नानम्'—(तरुपुष्पसमुद्भूतं सुस्वादु मधुरं मधु । तेजःपुष्टिकरं दिव्यं स्नानार्थं प्रतिगृह्यताम् ॥)—ॐ मधु वाताऽऋतायते मधु क्षरन्ति सिन्धवः । माध्वीर्नः सन्त्वोषधीः । ३१ $\frac{२७}{१३}$ ॥ मधु नक्तमुतोषसो मधुमत्पार्थिवँ रजः । मधु द्यौरस्तु नः पिता । ३२ $\frac{२८}{१३}$ ॥ मधुमान्नो वनस्पतिर्मधुमाँ२ऽअस्तु सूर्यः । माध्वीर्गावो भवन्तु नः । ३३ $\frac{२९}{१३}$ ॥ ॐ भूर्भुवः स्वः श्रीअमुकपञ्चायतनदेवताभ्यो नमः मधुस्नानं स-

र्पयामि । मधुस्नानान्ते शुद्धोदकस्नानं समर्पयामि । शुद्धोदकस्नानान्ते आचमनीयं समर्पयामि ॥ 'शर्करास्नानम्'—(इक्षुसारसमुद्भूता शर्करा पुष्टिकारिका । मलापहारिका दिव्या स्नानार्थं प्रतिगृह्यताम् ॥)— ॐ अपाᳬरसमुद्वयसᳩ सूर्ये सन्तᳩ समाहितम् । अपाᳬरसस्य यो रसस्तं वो गृह्णाम्युत्तममुपयाम गृहीतोसीन्द्राय त्वा जुष्टं गृह्णाम्येष ते योनिरिन्द्राय त्वा जुष्टतमम् ॥३४॥ ॐ भूर्भुवः स्वः श्रीअमुकपञ्चायतनदेवताभ्यो नमः शर्करास्नानं समर्पयामि । शर्करास्नानान्ते शुद्धोदकस्नानं समर्पयामि । शुद्धोदकस्नानान्ते आचमनीयं समर्पयामि ॥ 'षष्ठेन गन्धोदकस्नानम्'—(मलयाचलसम्भूतं चन्दनागरुसम्भवम् । चन्दनं देवदेवेश स्नानार्थं प्रतिगृह्यताम् ॥)—ॐ गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् ॥ ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् ॥३५॥(लक्ष्मीसूक्तमन्त्रः) ॐ भूर्भुवः स्वः श्रीअमुकपञ्चायतनदेवताभ्यो नमः षष्ठेन गन्धोदकस्नानं समर्पयामि ॥ षष्ठेनगन्धोदकस्नानान्ते शुद्धोदकस्नानं समर्पयामि । शुद्धोदकस्नानान्ते आचमनीयं समर्पयामि ॥ 'उद्वर्तनस्नानम्'—(नानासुगन्धिद्रव्यं च चन्दनं रजनीयुतम् । उद्वर्तनं मया दत्तं स्नानार्थं प्रतिगृह्यताम् ॥)—ॐ अᳩशुना तेᳩशुः पृच्यतां परुषा परुः । गन्धस्ते सोममवतु मदाय रसोऽअच्युतः ॥ ३२ $\frac{२७}{२०}$ ॥ ॐ भूर्भुवः स्व श्रीअमुकपञ्चायतनदेवताभ्यो नमः उद्वर्तनस्नानं समर्पयामि ॥ उद्वर्तनस्नानान्ते शुद्धोदकस्नानं समर्पयामि । शुद्धोदकस्नानान्ते आचमनं समर्पयामि । 'विशेषम्'— ॐ भूर्भुवः स्वः श्रीअमुकपञ्चायतनदेवताभ्यो नमः पञ्चामृतादिस्नानान्ते शुद्धोदकस्नानं समर्पयामि । शुद्धोदकस्नानान्ते आचमनीयं समर्पयामि ॥ ततो— 'पञ्चामृतादिस्नानाङ्गपूजा'— ॐ भूर्भुवः स्वः श्रीअमुकपञ्चायतनदेवताभ्यो नमः वस्त्रोपवस्त्रार्थे अक्षतान् समर्पयामि । यज्ञोपवीतार्थेऽक्षतान् समर्पयामि । गन्धं समर्पयामि । नानापरिमलसौभाग्यद्रव्याणि समर्पयामि । यथा ऋतुकालोद्भवपुष्पाणि समर्पयामि ।

धूपं दर्शयामि । दीपं दर्शयामि । 'शर्करोपहारनैवेद्यम्'—ॐ प्राणाय स्वाहा । ॐ अपानाय स्वाहा । ॐ व्यानाय स्वाहा । ॐ समानाय स्वाहा । ॐ उदानाय स्वाहा । नैवेद्यं समर्पयामि । नैवेद्यान्ते हस्तप्रक्षालनं मुखप्रक्षालनं च समर्पयामि । करोद्वर्तनार्थे चन्दनं समर्पयामि । मुखवासार्थं पूगिफलताम्बूलं समर्पयामि । हिरण्यमुद्रादक्षिणां समर्पयामि । कर्पूरारार्तिक्यं दर्शयामि । प्रदक्षिणाः समर्पयामि । मन्त्रपुष्पयुक्तनमस्कारं समर्पयामि । 'विशेषार्घ्यः'—रक्ष रक्ष गणाध्यक्ष रक्ष त्रैलोक्यरक्षक । भक्तानामभयं कर्ता त्राता भव भवार्णवात् । वरद त्वं वरं देहि वाञ्छितं वाञ्छितार्थद । अनेन सफलार्घ्येण फलदोऽस्तु सदा मम ॥ प्रार्थनां समर्पयामि ॥ 'अर्पणम्'—अनेन पञ्चामृतादिस्नानाङ्गभूतपूजाकृतेन ॐ भूर्भुवः स्वः श्रीअमुकपञ्चायतनदेवताः प्रीयंतां न मम ॥ (निर्माल्यं विसृज्य । पुनश्च पञ्चायतनदेवताभ्यो गन्धाक्षतपुष्पाणि समर्प्य ॥) ततो—'अभिषेकः' कार्यः । स च यथा—हरिः ॐ—ॐ सुहस्रशीर्षा० । ३६ $\frac{1}{31}$ ॥ पुरुषऽएु० । ३४ $\frac{2}{31}$ ॥ एतावान० । ३५ $\frac{3}{31}$ ॥ त्रिपादूर्ध्व ऽ० । ३६ $\frac{4}{31}$ ॥ ततो विराड० । ३७ $\frac{5}{31}$ ॥ तस्माद्यज्ञात्स० । ३८ $\frac{6}{31}$ ॥ तस्माद्यज्ञात्सर्वहुतऽऋचुःसामानि जज्ञिरे । छन्दाᳬसि जज्ञिरे तस्माद्यजुस्तस्मादजायत । ३९ $\frac{7}{31}$ ॥ तस्मादश्वाऽअजायन्त ये के चोभयादतः । गावो ह जज्ञिरे तस्मात्तस्माज्जाताऽअजावयः । ४० $\frac{8}{31}$ ॥ तं यज्ञम्बर्हिषि प्रौक्षन्पुरुषञ्जातमग्रतः । तेन देवाऽअयजन्त साध्याऽऋषयश्च ये । ४१ $\frac{9}{31}$ ॥ यत्पुरुषं व्यदधुः कतिधा व्यकल्पयन् । मुखङ्किमस्यासीत्किम्बाहू किमूरूपादाऽउच्येते । ४२ $\frac{10}{31}$ ॥ ब्राह्मणोस्य मुखमासीद्बाहू राजन्यः कृतः । ऊरू तदस्य यद्वैश्यः पद्भ्याᳬशूद्रोऽअजायत ॥

(१) पश्चात् स्नापनधारापात्राय गन्धाक्षतपुष्पं समर्प्य । तदनन्तरमभिषेकं देवानां गन्धाक्षतपुष्पाणि समर्पयेत् । शालिग्रामोपरि आसनार्थे पूजार्थे च तुलसीदलं तद्वत्समर्प्य । शम्भोरासनार्थे च बिल्वपत्रं समर्पयेत् ॥

४३$\frac{११}{३१}$ ॥ चन्द्रमा मनसो जातश्चक्षोः सूर्य्यो ऽअजायत ।
श्रोत्राद्वायुश्च प्राणश्च मुखादग्निरजायत । ४४$\frac{१२}{३१}$ ॥
नाब्भ्या ऽआसीदन्तरिक्षᳫ शीर्ष्णो द्यौः समवर्त्तत । पद्भ्या-
म्भूमिर्दिशः श्रोत्रात्तथा लोकाँ ॥ ऽअकल्पयन् ।
४५$\frac{१३}{३१}$ ॥ यत्पुरुषेण हविषा देवा यज्ञमतन्वत । वसन्तो
स्यासीदाज्यङ्ग्रीष्म ऽइध्मः शरद्धविः । ४६$\frac{१४}{३१}$ ॥ सप्ता-
स्यां सन्परिधयस्त्रिः सप्त समिधः कृताः । देवा यद्यज्ञ-
न्तन्वाना ऽअबध्नन्पुरुषम्पशुम् । ४७$\frac{१५}{३१}$ ॥ यज्ञेन यज्ञ-
मयजन्त देवास्तानि धर्म्माणि प्रथमान्यासन् । ते ह-
नाकम्महिमानः सचन्त यत्र पूर्वे साद्ध्याः सन्ति देवाः ।
४८$\frac{१६}{३१}$ ॥ अत्रावसरे शङ्खपूरितोदकेन— ॐ 'इदं विष्णुर्विचक्रमे
त्रेधा निदधे पदम् । स मूढमस्य पाᳫ सुरे स्वाहा । ४९$\frac{१५}{५}$ ॥
इति मन्त्रेण शालिग्रामं स्नापयेत् ॥ पश्चात् स्नापनधारापात्रोदकेन
पञ्चायतनदेवतानां 'शान्त्याभिषेकं' कुर्यात् ॥ स च यथा—
ॐ द्यौः शान्तिरन्तरिक्षᳫ शान्तिः पृथिवी शान्तिरापः
शान्तिरोषधयः शान्तिः । वनस्पतयः शान्तिर्विश्वेदे-
वाः । शान्तिर्ब्रह्म शान्तिः सर्वᳫ शान्तिः शान्तिरेव शा-
न्तिः सामा शान्तिरेधि । ५०$\frac{१७}{३६}$ ॥ यतो यतः समी
हसे ततो नो ऽअभयङ्कुरु । शन्नः कुरु प्रजाब्भ्यो भय-
न्नः पशुब्भ्यः । ५१$\frac{२२}{३६}$ ॥ ॐ सर्वेषां वा ऽएष वेदानाᳫ
रसो यत्साम सर्वेषामेवैनमेतद्वेदानाᳫ रसेनाभिषि-
ञ्चति । ५१ ( ब्राह्मणमन्त्रः ) ॥ ॐ शान्तिः शान्तिः सुशान्तिर्भ-
वतु । सर्वारिष्टशान्तिर्भवतु । ॐ अमृताभिषेकोऽस्तु ॥ ॐ भूर्भुवः स्वः
श्रीअमुकपञ्चायतनदेवताभ्यो नमः अभिषेकं समर्पयामि ॥ इति क्षेप-
कम् ॥ ] [पश्चात् 'देवतीर्थं' धृत्वा । ततो 'देवायाचमनम्'—ॐ केश-

वाय नमः स्वाहा । ॐ नारायणाय नमः स्वाहा । ॐ माध-
वाय नमः स्वाहा—इत्याचमनं समर्पयेत् ॥ 'हस्तप्रक्षालनम्'—ॐ
गोविन्दाय नमः ॥ 'वस्त्रम्'—(सर्वभूषाधिके सौम्ये लोक-
लज्जानिवारणे । मयोपपादिते तुभ्यं वाससी प्रतिगृह्यताम् ॥)—ॐ
तस्म्माद्यज्ञात्त्सर्व्वहुतऽऋचऽसा० । ५२$\frac{७}{३१}$ ॥ ॐ भूर्भुवः
स्वः श्रीअमुकपञ्चायतनदेवताभ्यो नमः वस्त्रं (वस्त्राऽभावेऽक्षतान्)
समर्पयामि॥'यज्ञोपवीतम्'—(नवभिस्तन्तुभिर्युक्तं त्रिगुणं देवतामयम्।
उपवीतं चोत्तरीयं गृहाण परमेश्वर ॥)—ॐ तस्मादश्वाऽअ०
। ५३$\frac{८}{३१}$ ॥ ॐ भूर्भुवः स्वः श्रीअमुकपञ्चायतनदेवताभ्यो नमः
यज्ञोपवीतं (यज्ञोपवीताऽभावेऽक्षतान्) समर्पयामि ॥ 'गन्धम्'[2]—
(श्रीखण्डं चन्दनं दिव्यं गन्धाढ्यं सुमनोहरम् । विलेपनं सुरश्रेष्ठ चन्दनं
प्रतिगृह्यताम् ॥)—ॐ तं यज्ञम्ब० । ५४$\frac{९}{३१}$ ॥ ॐ भूर्भुवः
स्वः श्रीअमुकपञ्चायतनदेवताभ्यो नमः गन्धं (अक्षतां[3]सहितं च)
समर्पयामि ॥ [अथ 'क्षेपकम्'—'अक्षताः'—(अक्षताश्च सुरश्रेष्ठ
कुङ्कुमाक्ताः सुशोभिताः । मया निवेदिता भक्त्या गृहाण परमेश्वर॥)
ॐ अक्षन्नमीमदन्तह्यव प्प्रियाऽअधूषत । अस्तो षत
स्वभानवो व्विप्प्रा नविष्ठयामती यो जान्विन्द्रते हरी
। ५५$\frac{५१}{३}$ ॥ ॐ भूर्भुवः स्वः श्रीअमुकपञ्चायतनदेवताभ्यो नमः
अक्षतान्समर्पयामि॥ इति क्षेपकम्] ॥'पुष्पाणि'—(माल्यादीनि सुग-
न्धीनि मालत्यादीनि वै प्रभो । मयानीतानि पुष्पाणि गृहाण परमेश्वर॥)
ॐ यत्पुरुषं० ॥ ५६$\frac{१०}{३१}$ ॥ ॐ भूर्भुवः श्रीअमुकपञ्चायतनदे-
ताभ्यो नमः पुष्पाणि (सौभाग्यद्रव्यसहितं च) समर्पयामि ॥ [अथ
'क्षेपकम्'—'गृहवास्तुपुरुषपूजनम्'—पूजितोऽसि मया वास्तो होमा-
द्यैरर्चनैः शुभैः । प्रसीद पाहि देवेश देहि मे गृहजं सुखम् ॥ ॐ वा-
स्तोष्पते प्रतिजानीह्यस्मान्स्वावेशो अनमिवो भवा नः । यत्त्वे म-

(१) पश्चाद्देवान्वस्त्रेण प्रमृज्य । तदनन्तरं देवान् गन्धानुलेपनपूर्वकं स्वस्थाने स्थापयित्वा । शालिग्रामस्यासनार्थं तुलसीदलं । शिवस्य विल्वपत्रं च दद्यात् । (२) देवेभ्यः गन्धं सौभाग्यद्रव्यादीनि अनामिकाङ्गुष्ठेन अर्पयेत् ॥ (३)—विष्णवे तु-लादि 'अक्षताः' अर्पणं नोक्तम् ॥

प्रतितन्नो सुषस्व शन्नो भव द्विपदे शञ्चतुष्पदे। ५७॥ (सौत्रमन्त्रः)॥ ॐ भूर्भुवः स्वः गृहवास्तुपुरुषाय नमः गन्धाक्षतपुष्पाणि समर्पयामि नमस्करोमि॥ 'गणेशाय दूर्वाङ्कुरार्पणम्'—(विष्ण्वादिसर्वदेवानां दूर्वे त्वं प्रीतिदा सदा। क्षीरसागरसम्भूते वंशवृद्धिकरी भव॥)—ॐ काण्डात्काण्डात्प्ररोहन्ती। परुषः परुषस्परि। एवा नो दूर्वे प्रतनु सहस्रेण शतेन च। ५८ $\frac{२०}{१३}$॥ 'सूर्याय पुष्पार्पणम्'—(भानो दिवाकरादित्य मार्तण्ड जगतां पते। अपांनिधे जगद्रक्ष भूतभावन भास्कर। प्रणतार्तिहरादित्य विश्वचिन्तामणे विभो। विष्णो हंसादिभूतेश पुष्पाणि प्रतिगृह्यताम्॥)—ॐ सविता त्वा सवानाᳬ सुवतामग्निर्ग्गृहपतीनाᳬ सोमो व्वनस्प्पतीनाम्। बृहस्प्पतिर्व्वाचऽइन्द्रो ज्ज्यैष्ठ्याय रुद्रः पशुभ्यो मित्रः सत्त्यो व्वरुणो धर्म्मपतीनाम्। ५९ $\frac{३९}{९}$॥ 'देव्यै पुष्पार्पणम्'—(सेवन्तिकाबकुलचम्पकपाटलाब्जैः पुन्नागजातिकरवीररसालपुष्पैः। विल्वप्रवालतुलसीदलमालतीभिस्त्वां पूजयामि जगदीश्वरि मे प्रसीद॥)—ॐ श्रीश्च ते लक्ष्मीश्च पत्न्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम्। इष्णन्निषाणामुम्मऽइषाण सर्व्वलोकम्मऽइषाण। ६० $\frac{२२}{३१}$॥ 'शङ्कराय विल्वपत्रार्पणम्'—(त्रिदलं त्रिगुणाकारं त्रिनेत्रं च त्रियायुधम्। त्रिजन्मपापसंहारमेकबिल्वं शिवार्पणम्॥)—ॐ शिवो भव। प्रजाभ्यो मानुषीभ्यस्त्वमङ्गिरः। मा द्यावापृथिवीऽअभिशोचीर्म्मान्तरिक्षम्मा व्वनस्प्पतीन्। ६१ $\frac{४५}{११}$॥ 'विष्णवे तुलसीदलार्पणम्'—(तुलसीं हेमरूपां च रत्नरूपां च मञ्जरीम्। भवमोक्षप्रदां तुभ्यमर्पयामि हरिप्रियाम्॥)—ॐ व्विष्णोः कर्म्माणि। पश्यत यतो व्रतानि पस्पशे। इन्द्रस्य युज्ज्यः सखा। ६२ $\frac{३३}{१३}$॥ 'सौभाग्यद्रव्यम्' (हरिद्रां कुङ्कुमं चैव सिन्दूरकज्जलान्वितम्। सौभाग्यद्रव्यसंयुक्तं गृहाण परमेश्वरि॥)—ॐ अहिरिव भोगैः पर्य्येति बा-

हुङ्कृयायां हेतिम्परिबाधमानः । हुस्तुग्घ्नो विश्वां वयुनानि विद्वान्पुमान्पुमांᳪसुम्परिपातु विश्वतः ॥ ६३ ५१/२९ ॥ ॐ भूर्भुवःस्वः श्रीअमुकपञ्चायतनदेवताभ्यो नमः सौभाग्यद्रव्याणि समर्पयामि ॥ इति क्षेपकम् ॥] 'धूपम्'—(वनस्पतिरसोद्भूतो गन्धाढ्यो गन्ध उत्तमः । आघ्रेयः सर्वदेवानां धूपोऽयं प्रतिगृह्यताम् ॥)—ॐ ब्राह्मणो० । ६४ ११/३१ ॥ ॐ भूर्भुवःस्वः श्रीअमुकपञ्चायतनदेवताभ्यो नमः धूपं दर्शयामि ॥ 'घृतपूरितनीराजनदीपम्'-(आज्यं च वर्तिसंयुक्तं वह्निना योजितं मया । दीपं गृहाण देवेश त्रैलोक्यतिमिरापह ॥)—ॐ चन्द्रमा मनसो० । ६५ १२/३१ ॥ ॐ भूर्भुवःस्वः श्रीअमुकपञ्चायतनदेवताभ्यो नमः घृतपूरितनीराजनदीपं दर्शयामि ॥ 'नैवेद्यम्'—(शर्कराघृतसंयुक्तं मधुरं स्वादु चोत्तमम् । उपहारसमायुक्तं नैवेद्यं प्रतिगृह्यताम्)—ॐ नाभ्याऽआ० । ६६ १३/३१ ॥ ॐ प्राणाय स्वाहा । ॐ अपानाय स्वाहा । ॐ व्यानाय स्वाहा । ॐ समानाय स्वाहा । ॐ उदानाय स्वाहा ॥ ॐ भूर्भुवः स्वः श्रीअमुकपञ्चायतनदेवताभ्यो नमः नैवेद्यं समर्पयामि ॥ नैवेद्यमध्ये 'पानीयम्'—( एलोशीरलवङ्गादिकर्पूरपरिवासितम् । प्राशनार्थं कृतं तोयं गृहाण परमेश्वर ॥ ) उत्तरापोशनं हस्तप्रक्षालनं मुखप्रक्षालनं आचमनीयं च समर्पयामि ॥ करोद्वर्तनार्थे चन्दनं समर्पयामि ॥ 'मुखवासार्थे ताम्बूलम्'—(पूगीफलं महद्दिव्यं नागवल्लीदलैर्युतम् । एलाचूर्णादिसंयुक्तं ताम्बूलं प्रतिगृह्यताम् ॥)—ॐ यत्पुरुषेण० । ६७ १४/३१ ॥ ॐ भूर्भुवः स्वः श्रीअमुकपञ्चायतनदेवताभ्यो नमः ताम्बूलं समर्पयामि ॥ [अथ 'क्षेपकम्'—'फलम्'—(इदं फलं मया देव स्थापितं पुरतस्तव । तेन मे सफलावाप्तिर्भवेज्जन्मनि जन्मनि)—ॐ याः फुलिनीर्याऽअफलाऽअपुष्पा याश्च पुष्पिणीः । बृहस्पतिं प्रसूता-

(१) नित्यशः पूजासमये शर्कराखण्डखाद्यादि नैवेद्यं समर्पयेत् ॥ 'सोपस्कर सिद्धान्नमन्न' नैवेद्यार्पणकालः वैश्वदेवप्रयोगे द्रष्टव्यः ॥ (२) अनेनैव मन्त्रेण फलं दक्षिणां चार्पयेदिति गर्भितार्थः ॥

स्तानो मुञ्चन्त्व꣡ꣳहसः । ६८$\frac{८९}{१२}$ ॥ ॐ भूर्भुवःस्वः श्रीअमुकपञ्चायतनदेवताभ्यो नमः फलं समर्पयामि ॥ 'दक्षिणा'—(हिरण्यगर्भगर्भस्थं हेमबीजं विभावसोः । अनन्तपुण्यफलदमतः शान्तिं प्रयच्छ मे ॥)—ॐ हि॒र॒ण्य॒ग॒र्भः सम॑वर्त्त॒ताग्रे॑ भू॒तस्य॑ जा॒तः पति॒रेक॑ऽआसीत् । सदा॑धार पृथि॒वीन्द्यामु॒तेमाङ्क॒स्मै दे॒वाय॑ ह॒विषा॑ विधेम । ६९$\frac{४}{१३}$ ॥ ॐ भूर्भुवः स्वः श्रीअमुकपञ्चायतनदेवताभ्यो नमः दक्षिणां समर्पयामि ॥ 'कर्पूरारार्तिक्यम्'[१]—(कदलीगर्भसम्भूतं कर्पूरं च प्रदीपितम् । आरार्तिक्यमहं कुर्वे पश्य मे वरदो भव ॥)—ॐ इ॒दꣳ ह॒विः प्र॑ज॒नन॑म्मेऽअस्तु दश॑वीर॒ꣳ सर्व॑गण॒ꣳ स्व॒स्तये॑ । आ॒त्म॒स॒नि प्र॑जा॒स॒नि प॑शु॒स॒नि लो॑क॒स॒न्य॑भय॒स॒नि ॥ अ॒ग्निः प्र॒जाम्ब॑हु॒लाम्मे॑ करो॒त्वन्नम्पयो॒ रेतो॑ऽअ॒स्मासु॑ धत्त । ७०$\frac{४८}{१८}$ ॥ ॐ भूर्भुवः स्वः श्रीअमुकपञ्चायतनदेवताभ्यो नमः कर्पूरारार्तिक्यं दर्शयामि ॥ इति क्षेपकम् ॥'] 'प्रदक्षिणा'—(यानि कानि च पापानि जन्मान्तरकृतानि वै । तानि सर्वाणि नश्यन्तु प्रदक्षिणपदेपदे ॥)—ॐ स॒प्तास्या॰ । ७१$\frac{१५}{३१}$ ॥ ॐ भूर्भुवःस्वः श्रीअमुकपञ्चायतनदेवताभ्यो नमः आरार्तिक्यसहितां प्रदक्षिणां समर्पयामि ॥ 'मन्त्रपुष्पयुक्तो नमस्कारः'—(नानासुगन्धपुष्पाणि यथाकालोद्भवानि च । पुष्पाञ्जलिं मया दत्तं गृहाण परमेश्वर ॥)—ॐ य॒ज्ञेन॑ य॒ज्ञ॰ । ७२$\frac{१६}{३१}$ ॥ ॐ भूर्भुवःस्वः श्रीअमुकपञ्चायतनदेवताभ्यो नमः मन्त्रपुष्पाञ्जलियुक्तो नमस्कारं समर्पयामि ॥ [अथ 'क्षेपकम्'—'पार्षदपूजा'[२]—विष्वक्सेनोद्भवाक्रूरेत्यादि यथा यथा इष्टपञ्चायतनमुख्यदेवतानुसारेण गन्धाक्षतपुष्पैः सम्पूजनीयाः ॥ यथा—ॐ भूर्भुवः स्वः श्रीअमुकपार्षदपूजापरिपूरणार्थे गन्धाक्षतपुष्पाणि समर्पयामि । नमस्करोमि ॥ 'विशेषार्घ्यः'—रक्ष रक्ष महादेव रक्ष त्रैलोक्यरक्षक । भक्तानामभयं कर्ता

(१) अनेनैव मन्त्रेण नमस्कारमर्पयेदिति गर्भितार्थः ॥ (२) 'पार्षदगणाः' (१०७) पृष्ठे द्रष्टव्याः ॥

त्राता भव भवार्णवात् ॥ वरद त्वं वरं देहि वाञ्छितं वाञ्छितार्थद । (एतेन मन्त्रेण पूगीफलहिरण्यगन्धाक्षतपुष्पैः संयुक्तजलेन अर्घ्यमेकं दद्यात् ।) अनेन सफलार्घ्येण फलदोऽस्तु सदा मम ॥ ॐ भूर्भुव स्वः श्रीअमुकपञ्चायतनदेवताभ्यो नमः विशेषार्घ्यं समर्पयामि ॥ प्रार्थना—विघ्नेश्वराय वरदाय सुरप्रियाय लम्बोदराय सकलाय जगद्धिताय । नागाननाय श्रुतियज्ञविभूषिताय गौरीसुताय गणनाथ नमो नमस्ते । १ ॥ भूत्यालेपनभूषितः प्रविलसन्नेत्राग्निदीपाङ्कुरः कण्ठे पन्नगपुष्पदामसुभगो गङ्गाजलैः पूरितः । ईषत्ताम्रजटाऽग्रपल्लवयुतो न्यस्तो जगन्मण्डपे शम्भुर्मङ्गलकुम्भतामुपगतो भूयात्सतां श्रेयसे । २ ॥ पुरारितनुभागिनी दुरितसङ्घसंहारिणी भजन्मतिविवर्धिनी प्रबलदानवोन्मर्दिनी । तुषारगिरिनन्दिनी मुनिहृदन्तरालम्बिनी सदैव शुभवर्धिनी हरनितम्बिनी पातु वः । ३ । कचकुचचुबुकाग्रे पाणिषु व्यापृतेषु प्रथमजलधिपुत्रीसङ्गमेऽनङ्गधाम्नि । ग्रथितनिविडनीवीबन्धनिर्मोक्षणार्थं चतुरधिककराशः पातु वश्चक्रपाणिः ॥ ४ ॥ यद्बिम्बमम्बरमणिर्यदपां प्रसूतिर्नक्तं निषिञ्चति यदग्निशिखावभासः । ज्योत्स्ना निशासु हिमधाम्नि च यन्मयूखाः पूषा पुराणपुरुषः स नमोऽस्तु तस्मै । ५ ॥ ॐ भूर्भुवः स्वः श्रीअमुकपञ्चायतनदेवताभ्यो नमः प्रार्थनां समर्पयामि ॥ (इयं प्रार्थना कृताकृतास्ति) ॥ 'क्षमापनम्'-आवाहनं न जानामि न जानामि तवाऽर्चनम् । पूजां चैव न जानामि क्षमस्व परमेश्वर ॥ अन्यथा शरणं नास्ति त्वमेव शरणं मम । तस्मात्कारुण्यभावेन रक्षस्व परमेश्वर ॥ गतं पापं गतं दुःखं गतं दारिद्र्यमेव च । आगता सुखसम्पत्तिः पुण्याच्च तव दर्शनात् ॥ मन्त्रहीनं क्रियाहीनं भक्तिहीनं सुरेश्वर । यत्पूजितं मया देव परिपूर्णं तदस्तु मे ॥ यदक्षरपदभ्रष्टं मात्राहीनं च यद्भवेत् । तत्सर्वं क्षम्यतां देव प्रसीद परमेश्वर ॥ इति क्षेपकम् ]' 'अर्पणम्'—अनेनावाहनासनपाद्यार्घ्याचमनीयस्नानवस्त्रोपवीतगन्धपुष्पधूपदीपनैवेद्यताम्बूलदक्षिणाप्रदक्षिणामन्त्रपुष्परूपैः षोडशोपचारैः अन्योपचारैश्च यथाज्ञानेन यथामिलितोपचारद्रव्यैः कृतेन पूजनाख्यकर्मणा ॐ भूर्भुवः स्वः श्रीअमुकपञ्चायतनदेवताः प्रीयन्तां न मम ॥ ॐ तत्सद्ब्रह्मार्पणमस्तु ॥ यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु । न्यूनं सम्पूर्णतां याति सद्यो वन्दे तमच्युतम् ॥ ॐ विष्णवे नमः ॥ 'शङ्खभ्रामणम्'—शङ्खम्

(१) पञ्चायतनदेवतानां विसर्जनं नास्ति ॥ (२) इत्युक्त्वा शङ्खं देवोपरि भ्रामयित्वा तस्योदकेन स्वशरीरं मार्जयेत् ॥

स्थितं तोयं भ्रामितं केशवोपरि। अङ्गलग्नं मनुष्याणां ब्रह्महत्यां व्यपोहति ॥ इति देवपूजाप्रयोगः ॥

३३३. 'विशेषनैमित्तिक आराध्यदेवतापूजायां तु आर्तिक्यादि-कर्माणि अत्रावसरे लिख्यन्ते'—यथा—'पञ्चायतनार्तिः'—करुणापारावारं कलिमलपरिहारम्। कद्रूसुतशयितारं करधृतकह्लारम्। घनपटलाभशरीरं कमलोद्भवपितरम्। कलये विष्णुमुदारं कमलाभर्तारम् ॥ जयदेव जयदेव जय केशव हर गजमुख सवितर्नगतनयेऽहं चरणौ तव कलये। जयदेव जयदेव। १ ॥ भूधरजारतिलीलं मङ्गलकरशीलं भुजगेशस्मृतिलोलं भुजगावलिमालम्। भूषाऽकृतिमतिविमलं संधृतगाङ्गजलं भूयो नौमि कृपालं भूतेश्वरमतुलम् ॥ जयदेव०। २ ॥ विघ्नारण्यहुताशं विहिताऽनयनाशं विपदवनीधरकुलिशं विधृताङ्कुशपाशम्। विजयार्कज्वलिताशं विदलितभवपाशं विनताः स्मो वयमनिशं विद्याविभवेशम् ॥ जयदेव०। ३ ॥ कश्यपसूनुमुदारं कालिन्दीपितरं कालत्रितयविहारं कामुकमन्दारम्। कारुण्याब्धिमपारं कालानलमदरं कारणतत्त्वविचारं कामय ऊष्मकरम् ॥ जयदेव०। ४ ॥ निगमैर्नुतपदकमले निहतासुरजाले हस्ते धृतकरवाले निर्जरजनपाले। नितरां कृष्णकृपाले निरवधिगुणलीले निर्जरनुतपदकमले नित्योत्सवशीले। जयदे० ॥५॥ इति पञ्चायतनार्तिः ॥

३३४. 'देव्या आर्तिः'—प्रवरातीरनिवासिनि निगमप्रतिपाद्ये। पारावारविहारिणि नारायणि हृद्ये। प्रपञ्चसारे जगदाधारे श्रीविद्ये। प्रपन्नपालननिरते मुनिवृन्दाराध्ये ॥ जय देवी जय देवी जय मोहिनिरूपे। मामिह जननि समुद्धर पतितं भवकूपे। १ ॥ दिव्यसुधाकरवदने कुन्दोज्ज्वलरदने पदनखनिर्जितमदने मधुकैटभकदने। विकसितपङ्कजनयने पन्नगपतिशयने खगपतिवहने गहने सङ्कटवनदहने ॥ जय देवी० २ ॥ मञ्जीराङ्कितचरणे मणिमुक्ताभरणे कञ्चुकिवस्त्रावरणे वक्राम्बुजधरणे। शक्रामयभयहरणे भूसुरसुखकरणे करुणां कुरु मे शरणे गजनक्रोद्धरणे ॥ जय देवी०। ३ ॥ छित्त्वा राहुग्रीवां पासि त्वं विबुधान् ददासि मृत्युमनिष्टं पीयूषं विबुधान्। विहरसि दानवऋद्धां समरे संसिद्धां मध्वमुनीश्वरवरदे पालय संसिद्धाम् ॥ जय देवी०। ४ ॥ इति देव्या आर्तिः समाप्ता ॥

३३५. 'मन्त्रपुष्पाञ्जलिमन्त्राः'—हरिः ॐ [ॐगुणानान्त्वा । गुणपतिꣳ हवामहे प्प्रियाणान्त्वा प्प्रियपतिꣳ हवामहे निधीनान्त्वा निधिपतिꣳ हवामहे व्वसो मम । आहमजानि गर्ब्भधमा त्वमजासि गर्ब्भधम् $१\frac{१९}{२३}$ ॥ श्रीश्च ते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम् । इष्णन्निषाणामुम्मऽइषाण सर्व्वलोकम्मऽइषाण । $२\frac{२२}{३१}$ ॥ * अम्बेऽअम्बिकेऽम्बालिके नमा नयति कश्चन । स सस्त्यश्वकः सुभद्रिकाङ्काम्पील वासिनीम् । $३\frac{१८}{२३}$ ॥] * तन्तऽएतमनु जोषम्भराम्म्येषनेत्त्ववदपचे तया ताऽअग्ग्नेः । प्प्रियस्पाथो पीतम् । $४\frac{१७}{२}$ ॥ सुꣳस्तुव भागास्त्थेषा बृहन्तः प्प्रस्तरेष्ठाः परिधेयाश्च देवाः । * $५\frac{१८}{२}$ ॥ मूर्द्धानन्दिवोऽअरतिम्पृथिव्या व्वैश्वानरमृतऽआजातमग्ग्निम् । कविꣳसम्म्राजमतिथिञ्जनानामासन्नापात्रञ्जनयन्त देवाः । $६\frac{८}{३३}$ ॥ प्प्रोह्यमाणः सोमऽआगतो व्वरुणऽआसन्द्यामासन्नोग्ग्निराग्नीध्रऽइन्द्रो हविर्द्धानेथर्व्वो पावह्रियमाणो व्विश्वेदेवाः । $७\frac{५६}{८}$ व्विश्वेदेवाः व्विश्वेदेवाअꣳशुषुन्युप्तो व्विष्णुराप्प्रीतपाऽआप्प्याय्यमानो यमः सूयमानो व्विष्णुः सम्भ्रियमाणो व्वायुः पूयमानः शुक्रः पूतः शुक्रः क्षीरश्रीर्म्मन्थी सक्तु श्रीव्विश्वेदेवाः । $८\frac{५७}{८}$ * । पिते वैधि सूनवऽआसुशेवा स्वा वेशातन्वा संव्विशस्वाश्विनाध्वर्यू सादयतामिह त्वा । $९\frac{३}{१४}$ ॥ पृथिव्याः पुरीषमस्यप्प्सोनाम तान्त्वा व्विश्वेऽअभिगृणन्तु

(१) एते मन्त्रा 'देवे' इतिख्याताः ॥

देवाः। * १० $\frac{४}{१४}$ ॥ षोडशी स्तोमऽओजो द्रविणञ्च-
तुश्चत्वारिꣳश स्तोमो वर्च्चो द्रविणम्। अग्नेः पुरीषम-
स्यप्सोनाम तान्त्वा विश्वेऽअभिगृणन्तु देवाः। *।
११ $\frac{३}{२५}$ ॥ समिद्धेऽअग्नावधि मा महानऽउक्थपत्रऽई-
ड्यो गृभीतः। तप्तङ्घर्म्मम्परिगृह्यायजन्तोर्ज्जा यद्यज्ञ-
मयजन्त देवाः। १२ $\frac{५५}{१७}$ ॥ *। यस्ये माः प्प्रदिशो यस्य
बाहू कस्म्मै देवाय हविषा विधेम। $\frac{१२}{२५}$ ॥ यऽआ
त्त्मदा बलदा यस्य विश्वऽउपासते प्प्रशिषं यस्य दे-
वाः। *। १३ $\frac{१३}{२५}$ *। अनागास्त्वन्नोऽअदितिः कृणो
तु क्षत्रन्नोऽअश्वो वनताꣳ हविष्म्मान्। $\frac{४५}{२५}$ ॥ इ-
मानु। कम्भुवना सीषधामेन्द्रश्च विश्वे च देवाः। *
। १४ $\frac{४६}{२८}$ ॥ बृहस्प्पते सवितर्ब्बोधयैनꣳ सꣳशितञ्चि-
त्सन्तराꣳ सꣳशिशाधि। वर्द्धयैनम्महते सौभगाय
विश्वऽएनमनुमदन्तु देवाः। १५ $\frac{८}{२७}$ ॥ प्प्रजापतेस्तपसा
। वावृधा नः सद्यो जातो दधिषे यज्ञमग्ने। स्वाहा कृ-
तेन हविषा पुरोगा याहि साद्ध्या हविरदन्तु देवाः।
१६ $\frac{११}{२८}$ ॥ सद्यो जातो व्व्यमिमीत यज्ञमग्निर्द्देवानामभ-
वत्पुरोगाः। अस्य होतुः प्प्रदिश्यृतस्य वाचि स्वाहा
कृतꣳ हविरदन्तु देवाः। १७ $\frac{३६}{२९}$ ॥ अस्म्मे रुद्रा मेहना
पर्व्वतासो वृत्रहत्त्ये भरहूतौ सजोषाः। यः शꣳसते
स्तुवते धायि पज्ज्रऽइन्द्र ज्ज्येष्ठाऽअस्म्माँ २ ॥ ऽअवन्तु
देवाः। १८ $\frac{५०}{३३}$ ॥ नहि स्प्पशमविदन्नन्यमस्म्माद्वैश्वा-
नरात्पुरऽएतारमग्नेः। एमेनमवृधन्नमृताऽअमर्त्त्यं-
वैश्वानरङ्क्षैत्रजित्त्याय देवाः। १९ $\frac{६०}{३३}$ ॥ (हस्ते पुष्पाणि गृ-
हीत्वा उत्थाय)। ॐ यज्ञेन यज्ञमयजन्त देवास्तानि ध-

र्म्माणि प्प्रथमान्यासन् । ते ह नाकम्महिमानः । स-
चन्त यत्र पूर्व्वे साद्ध्याः सन्ति देवाः । २०१६/३१ ॥ ॐ
राजाधिराजाय प्रसह्य साहिने । नमो वयं वैश्रवणाय
कुर्महे । स मे कामान्कामकामाय मह्यं । कामेश्वरो
वैश्रवणो ददातु । कुबेराय वै श्रवणाय । महाराजाय
नमः ॥ २१ ॥ ॐस्वस्ति । साम्राज्यं भौज्यं स्वाराज्यं वैराज्यं पार-
मेष्ठ्यं राज्यं माहाराज्यमाधिपत्यमयं समन्तपर्यायी स्यात्सार्वभौमः
सार्वायुष आन्तादापरार्धात् । पृथिव्यै समुद्रपर्यन्ताया एकराडिति त-
दप्येष श्लोकोऽभिगीतो मरुतः परिवेष्टारो मरुत्तस्यावसन्गृहे । आवि-
क्षितस्य कामप्रेर्विश्वेदेवाः सभासद इति ॥ २२ ॥ ॐ व्विश्वतश्च-
क्षुरुत व्विश्वतो मुखो व्विश्वतो बाहुरुत व्विश्वतस्प्पात् ।
सम्बाहुब्भ्यान्धमति सम्पतत्रैर्द्यावाभूमी जनयन्दे-
वऽएकः । २३१९/१७ ॥ इति मन्त्रैः पुष्पाञ्जलिं समर्प्य ॥ 'प्रदक्षिणा'-
ॐ सप्तास्यासन्परिधयस्त्रिः सप्त समिधः कृताः ।
देवा यद्यज्ञन्तन्वानाऽअबध्नन्पुरुषम्पशुम् । २४१५/३१ ॥
इति प्रदक्षिणा नमस्कारं च कृत्वा 'ब्राह्मणाशिषो' गृह्णीयात् ॥ स च यथा-

२३६. 'आशीर्वादमन्त्राः'—हरिः—ॐ पृथिव्याऽअहमु-
दन्तरिक्षमारुहमन्तरिक्षाद्दिवमारुहम् । दिवो नाकस्य
पृष्ठात्स्वर्ज्ज्योतिरगामहम् । १६७/१७ ॥ स्वर्य्यन्तो नापेक्ष-
न्तऽआद्द्याᳪ रोहन्ति रोदसी । यज्ञं ये व्विश्वतोधा-
रᳪ सुविद्वाᳪसो व्वितेनिरे । २६८/१७ ॥ अग्ने प्प्रेहि प्प्र-
थमो देवयताञ्चक्षुर्देवानामुत मर्त्त्यानाम् । इयक्षमाणा
भृगुभिः सजोषाः स्वर्य्यन्तु यजमानाः स्वस्ति । ३६९/१७ ॥
बोधा मे । ऽअस्य व्वचसो यविष्ठम᳚ हिष्ठस्य प्प्रभृतस्य

स्वधावः। पीयंति त्वोऽअनुत्वो गृणाति व्वन्दारुष्टे तन्वं व्वन्देऽअग्ने। ४$\frac{४२}{१२}$॥ स बोधि। सूरिर्म्मघवा व्वसुपते व्वसुदावन्। युयोद्ध्यस्म्म द्वेषांꣳसि व्विश्वकर्म्मणे स्वाहा। ५$\frac{४३}{१२}$॥ पुनस्त्वा। दित्या रुद्रा व्वसवः समिन्धतां पुनर्ब्रह्माणो व्वसुनीथ यज्ञैः। घृतेन त्वन्तन्वं व्वर्द्धयस्व सत्त्याः सन्तु यजमानस्य कामाः। ६$\frac{४४}{१२}$॥ यथेमां व्वाचङ्कल्याणी मा वदानि जनेब्भ्यः। ब्रह्मराजन्याभ्याꣳशूद्राय चार्य्याय च स्वाय चारणाय च। प्प्रियो देवानान्दक्षिणायै दातुरिह भूयासमयम्मे कामः समृद्ध्यतामुपमादो नमतु। ७$\frac{२}{२६}$॥ स्वस्ति नऽइन्द्रो वृद्धश्श्रवाः स्वस्ति नः पूषा व्विश्ववेदाः। स्वस्ति नस्तार्क्ष्योऽअरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु। ८$\frac{१९}{२५}$॥ शतं भवति शतायुर्वै पुरुषः शतेन्द्रियऽआयुरेवेन्द्रियं वीर्य्यमात्मन्धत्ते। (ब्राह्मणमन्त्रः)॥ स्वस्तिमन्त्रार्थाः सफलाः सन्तु। आराध्यदेवता सुप्रसन्ना वरदा भवतु। इच्छितमनकामनासंसिद्धिरस्तु॥ (यजमानो ब्रूयात्)—तथाऽस्तु॥ इत्याशीर्वादमन्त्राः॥

३३७. 'मानसपूजा.' वराहसंहितायां हयग्रीवः—आवाहनादिपुष्पान्ता विधयः कथिता बुधैः। ते सर्वे ध्यानवद्योज्याः पूजा सा 'मानसी' मता॥

३३८. अथ 'मानसपूजास्तोत्रम्'—रत्नैः कल्पितमासनं हिमजलैः स्नानं च दिव्याम्बरं नानारत्नविभूषितं मृगमदामोदान्वितं चन्दनम्। जातीचम्पकबिल्वमत्रसहितं पुष्पं च धूपं तथा दीपं देव दयानिधे पशुपते हृत्कल्पितं गृह्यताम्। १॥ सौवर्णे मणिरत्नखण्डरचिते पात्रे घृतं पायसं भक्ष्यं पञ्चविधं पयोदधियुतं रम्भाफलं पानसम्। शाकानामयुतं जलं रुचिकरं सुस्निग्धशाल्योदनं ताम्बूलं मनसा मया विरचितं पूजां फलं स्वीकुरु। २॥ छत्रं चामरयोर्युगं व्यजनकं चादर्शकं निर्मलं वीणाभेरिमृद-

ङ्काहलकलागीतं च नृत्यं तथा । साष्टाङ्गप्रणतिः स्तुतिर्बहुविधा ह्येतत्समस्तं मया सङ्कल्पेन समर्पितं तव विभो पूजां गृहाण प्रभो । ३ ॥ आत्मा त्वं गिरिजा मतिः सहचराः प्राणाः शरीरं गृहं पूजा ते विषयोपभोगरचना निद्रा समाधिस्थितिः । सञ्चारः पदयोः प्रदक्षिणविधिः स्तोत्राणि सर्वा गिरो यद्यत्कर्म करोमि तत्तदखिलं शम्भो तवाराधनम् । ४ ॥ करचरणकृतं वाक्कायजं कर्मजं वा श्रवणनयनजं वा मानसं वाऽपराधम् । विहितमविहितं वा सर्वमेतत्क्षमस्व जय जय करुणाब्धे श्रीमहादेव शम्भो । ५ ॥ इति श्रीमच्छङ्कराचार्यविरचितं मानसपूजास्तोत्रं समाप्तम् ॥

३३९. अथ 'संक्षेपतो[1] देवपूजाप्रयोगः'—तत्रादौ आचम्य प्राणानायम्य ॥ 'मङ्गलोच्चारणम्—ॐ स्वस्ति नऽइन्द्रो० । $१\frac{१२}{२५}$ ॥ 'नमस्कारः'—श्रीमन्महागणाधिपइत्यारभ्य विनायकं गुरुं० पर्यन्तं ॥ 'सङ्कल्पः'—विष्णुर्विष्णुः इत्यारभ्य श्रुतिस्मृतिपुराणोक्तफलप्राप्त्यर्थं षोडशोपचारैरमुकपञ्चायतनदेवतापूजनमहं करिष्ये ॥ 'कलशपूजनम्'—कलशस्य० ॥ कुक्षौ तु सा० ॥ ॐ तत्त्वा यामि० । $२\frac{४९}{१८}$ ॐ भूर्भुवः स्वः कलशस्थवरुणाय नमः आवाहयामि । सर्वोपचारार्थे गन्धाक्षतपुष्पाणि समर्पयामि । नमस्करोमि ॥ 'कलशोदकेन पूजाद्रव्याणि तथा आत्मानं च प्रोक्षयेत्'—अपवित्रः० ॥ ॐ आपोहि० । $३\frac{१४.१५.१६}{३६}$ ॥ कलशमुद्रां प्रदर्श्य ॥ 'शङ्खपूजनम्'—शङ्खादौ० ॥ त्रैलोक्ये० ॥ त्वं पुरा० ॥ ॐ अग्निर्ऋषिः पवमा० । $४\frac{९}{२६}$ ॥ ॐ भूर्भुवः स्वः शङ्खस्थदेवतायै नमः आवाहयामि सर्वोपचारार्थे गन्धपुष्पाणि समर्पयामि नमस्करोमि ॥ शङ्खमुद्रां प्रदर्श्य ॥ 'घण्टापूजनम्'—आगमार्थं तु० ॥ ॐ सुपर्णोसि । गरु० । $५\frac{४}{१२}$ ॥ ॐ भूर्भुवः स्वः घण्टास्थाय गरुडाय नमः आवाहयामि सर्वोपचारार्थे गन्धपुष्पाणि समर्पयामि नमस्करोमि ॥ (घण्टानादं प्रकुर्यात) ॥ घण्टामुद्रां प्रदर्श्य ॥ 'अथ पूजा'—तत्रादौ 'आवाहनम्'—आगच्छ भग० ॥ ॐ सहस्रशीर्षा० । $६\frac{१}{३१}$ ॥ ॐ भूर्भुवः स्वः अमुकपञ्चायतनदेवताभ्यो नमः

(१) अस्मिन्प्रयोगे संक्षेपेण दर्शिता मन्त्राः श्लोका वा देवपूजाप्रयोगे द्रष्टव्याः ॥

आवाहनपूर्वकं ध्यानं समर्पयामि नमस्करोमि॥ 'आसनम्'—रम्यं सुशोभ०॥ ॐ पुरुष एवे०। ७$\frac{२}{३१}$॥ ॐ भूर्भुवः स्वः अमुकपञ्चायतनदेवताभ्यो नमः आसनं समर्पयामि॥ 'पाद्यम्'—उष्णोदकं नि०॥ ॐ एतावानस्य। महि०। ८$\frac{३}{३१}$॥ ॐ भूर्भुवः स्वः अमुकपञ्चायतनदेवताभ्यो नमः पाद्यं समर्पयामि॥ 'अर्घ्यम्'—(अर्घ्यं गृहा०)॥ ॐ त्रिपादूर्ध्वऽ उ०। ९$\frac{४}{३१}$॥ ॐ भूर्भुव स्वः अमुकपञ्चायतनदेवताभ्यो नमः पाद्यं समर्पयामि॥ 'आचमनीयम्'—(सर्वतीर्थसमा०)॥ ॐ ततो विराड०। १०$\frac{५}{३३}$॥ ॐ भूर्भुवः स्वः अमुकपञ्चायतनदेवताभ्यो नमः आचमनीयं समर्पयामि॥ 'स्नानम्'—(गङ्गासरस्वतीरे०)॥ ॐ तस्माद्यज्ञात्सर्वहुतऽ सम्भृत०। ११$\frac{६}{३१}$॥ ॐ भूर्भुवः स्वः अमुकपञ्चायतनदेवताभ्यो नमः स्नानं समर्पयामि॥ [अथ क्षेपकम्—'पञ्चामृतस्नानम्'—(पयो दधि घृ०)॥ ॐ पञ्चनद्यः। स०। १२$\frac{११}{३४}$॥ ॐ भूर्भुवः स्वः अमुकपञ्चायतनदेवताभ्यो नमः पञ्चामृतस्नानं समर्पयामि। पञ्चामृतस्नानान्ते शुद्धोदकस्नानं समर्पयामि। सकलपञ्चामृतस्नानपूजापरिपूरणार्थे गन्धाक्षतपुष्पाणि समर्पयामि॥ (अभिषेकार्थे निर्माल्यं विसृज्य। पुनश्च पञ्चायतनदेवतानां गन्धाक्षतपुष्पाणि समर्प्य। विष्णोः तुलसीदलं शम्भोः बिल्वपत्रं समर्प्य। पश्चात् अभिषेकः कार्यः) स च यथा—'अभिषेकः'—ॐ आपोहि। ष्ठामे०। १३ $\frac{१४·१५·१६}{३६}$ 'शङ्खोदकेन शालिग्रामाभिषेकः'—ॐ इदं विष्णुर्विचक्रमे०। १४$\frac{१५}{५}$॥ 'शान्त्याभिषेकः'—ॐ द्यौऽशान्तिर०। १५$\frac{१७}{३६}$॥ ॐ शान्तिः शान्तिः शान्तिः। सुशान्तिर्भवतु॥ ॐ भूर्भुवः स्वः अमुकपञ्चायतनदेवताभ्यो नमः अभिषेकं समर्पयामि॥ इति क्षेपकम्॥] 'देवतीर्थं धृत्वा॥ स्नानार्थे अभिषेकार्थे वा ॐ केशवाय नमः स्वाहा। ॐ नारायणाय नमः स्वाहा। ॐ माधवाय नमः स्वाहा इत्याचमनं समर्पयामि॥ (वस्त्रेण देवताः प्रमृज्य स्वस्वस्थाने स्थापयेत्)॥ 'वस्त्रम्'—(सर्वभूषाधिके सौ०)॥ ॐ

तस्माद्यज्ञात्सर्वहुत ऽऋचः सा० । १६$\frac{७}{३१}$ ॥ ॐ भूर्भुवः स्वः अमुकपञ्चायतनदेवताभ्यो नमः वस्त्रं (वस्त्राऽभावे अक्षतान्) समर्पयामि ॥ 'यज्ञोपवीतम्'—(नवभिस्तन्तु०) ॥ ॐ तस्मादश्वाऽअ० । १७$\frac{८}{३१}$ ॥ ॐ भूर्भुवः स्वः अमुकपञ्चायतनदेवताभ्यो नमः यज्ञोपवीतं (यज्ञोपवीताऽभावे अक्षतान्) समर्पयामि ॥ 'गन्धम्'—(श्रीखण्डं चन्दनं०) ॥ ॐ तं यज्ञम्बर्हिषि० । १८$\frac{९}{३१}$ ॥ ॐ भूर्भुवः स्वः अमुकपञ्चायतनदेवताभ्यो नमः गन्धं अक्षतासहितं समर्पयामि ॥ (विष्णुं चक्रं चाऽक्षतैर्नार्चयेत्) ॥ 'पुष्पम्'—(माल्यादीनि सु०) ॥ ॐ यत्पुरुषं व्य० ॥ १९$\frac{१०}{३१}$ ॥ ॐ भूर्भुवः स्वः अमुकपञ्चायतनदेवताभ्यो नमः यथाकालोद्भव ऋतुपुष्पाणि सौभाग्यद्रव्यसहितानि समर्पयामि ॥ (अत्रावसरे विष्णुशिवगणेशादिदेवेभ्यः तुलसीबिल्वदूर्वाङ्कुरादि क्रमेण समर्पयेत्) ॥ [अथ 'क्षेपकम्'—'गृहवास्तुपुरुषपूजनम्'—(पूजितोऽसि मया वास्तो होमाद्यैरर्चनैः शुभैः । प्रसीद पाहि देवेश देहि मे गृहजं सुखम् ॥)—ॐ वास्तोष्पते प्रतिजानीह्यस्मान् स्वावेशो अनमीवो भवा नः । यत्त्वेमहे प्रतितन्नो जुषस्व शन्नो भव द्विपदे शञ्चतुष्पदे । २० ॥—(सौत्रमन्त्रः ॥) ॐ भूर्भुवः स्वः गृहवास्तुपुरुषदेवतायै नमः सकलपूजापरिपूरणार्थे गन्धाक्षतपुष्पाणि समर्पयामि ॥ नमस्करोमि ॥ (इति क्षेपकम् ॥] 'धूपम्' —(वनस्पतिरसो०) ॥ ॐ ब्राह्मणोस्य मुखं० । २१$\frac{११}{३१}$ ॥ ॐ भूर्भुवः स्वः अमुकपञ्चायतनदेवताभ्यो नमः धूपं दर्शयामि ॥ 'दीपम्'—(आज्यं च वर्तिसं०) ॥ ॐ चन्द्रमा मनसो० ॥ २२$\frac{१२}{३१}$ ॥ ॐ भूर्भुवः स्वः अमुकपञ्चायतनदेवताभ्यो नमः दीपं दर्शयामि ॥ 'नैवेद्यम्'—(शर्कराघृतसं० ) ॥ ॐ नाभ्याऽआसीदन्तरि० । २३$\frac{१३}{३१}$ ॥ (इति मन्त्रेण तुलसीदलेन नैवेद्यं सम्प्रोक्ष्य ) पश्चात् ॐ प्राणाय स्वाहा । ॐ अपानाय स्वाहा । ॐ व्यानाय स्वाहा । ॐ समानाय स्वाहा । ॐ उदानाय स्वाहा । (इति मन्त्रेण दक्षिणहस्तस्याङ्गुलयः समानाः कृत्वा वामहस्तेन स्वनेत्रेच्छादनं कृत्वा नैवेद्यमर्पयेत् ) ॥ नैवेद्यान्ते हस्तप्रक्षालनार्थे मुखप्रक्षा-

नार्थे पानीयं समर्पयामि । करोद्वर्तनार्थे चन्दनं समर्पयामि ॥ ॐ केशवाय नमः स्वाहा । ॐ नारायणाय नमः स्वाहा । ॐ माधवाय नमः स्वाहा । इत्याचमनं समर्पयामि ॥ ॐ भूर्भुवः स्वः अमुकपञ्चायतनदेवताभ्यो नमः घृतशर्करादि उपाहारनैवेद्यं (सिद्धान्नमन्नसोपस्करनैवेद्यं वा) समर्पयामि ॥ 'ताम्बूलम्'—(पूगीफलं महद्दिव्यं०) ॥ ॐ यत्पुरुषेण । हुवि० । २४$\frac{१४}{३१}$ ॥ ॐ भूर्भुवः स्वः अमुकपञ्चायतनदेवताभ्यो नमः पूगीफलताम्बूलं (सहिरण्यदक्षिणां) (एतदभावे गन्धाक्षतपुष्पं) समर्पयामि ॥ 'प्रदक्षिणा'—(यानि कानि च पा०) ॥ ॐ सुप्तास्यासन्परिधय० । २५$\frac{१५}{३१}$ ॥ ॐ भूर्भुवः स्वः अमुकपञ्चायतनदेवताभ्यो नमः प्रदक्षिणा (कर्पूरारार्तिक्यसहितां) समर्पयामि ॥ 'मन्त्रपुष्पयुक्तो नमस्कारः'—(नानासुगन्धपुष्पाणि य०) ॥ यज्ञेन यज्ञमय० । २६$\frac{१६}{३१}$ ॥ ॐ भूर्भुवः स्वः अमुकपञ्चायतनदेवताभ्यो नमः मन्त्रपुष्पयुक्तं नमस्कारं समर्पयामि ॥ [अथ 'क्षेपकम्' 'पार्षदपूजा'—(इष्टपञ्चायतनयोग्याः पार्षदगणाः गन्धाक्षतपुष्पैः सम्पूजनीयाः) ॥ ॐ भूर्भुवः स्वः अमुकपार्षदान् गन्धाक्षतपुष्पैः पूजयामि । नमस्करोमि ॥ इति क्षेपकम् ॥] 'अर्पणम्'—अनेन यथाज्ञानेन यथाशक्तिमिलितोपचारद्रव्यैः कृतेन षोडशोपचारपूजनेन ॐ भूर्भुवः स्वः श्रीअमुकपञ्चायतनदेवता प्रीयताम् न मम ॥ ॐ तत्सद्ब्रह्मार्पणमस्तु ॥ 'शङ्खभ्रामणम्'—शङ्खमध्ये स्थितं तोयं भ्रामितं केशवोपरि । अङ्गलग्नं मनुष्याणां ब्रह्महत्यां व्यपोहति ॥ (एवं शङ्खोदकेन स्वशरीरं मार्जयेत्) ॥ ॐ विष्णवे नमः इति त्रिः ॥ (भोजनावसरे तु पूर्वोक्तदेवतीर्थं प्राशयेत्) ॥ इति संक्षेपतो देवपूजाप्रयोगः ॥

इति श्रीपुरन्दरोपाह्वविठ्ठलात्मजनारायणेन विरचितायां वाजसनेयाह्निकसूत्रावल्यां द्वितीयभागकृत्यानि समाप्तानि ॥

---

## ॥ अथ तृतीयभागकृत्यानि ॥

### ॥ पोष्यवर्गसाधनादीनि ॥

३४०. कारिका. दक्षः—तृतीये च तथा भागे 'पोष्यवर्गार्थसाधनम्' । पिता माता गुरुर्भार्या प्रजा दीनाः समाश्रिताः ॥ ज्ञातिर्बन्धुजनः क्षीणस्तथाऽनाथः समाश्रितः । अन्येप्यधनयुक्ताश्च पोष्यवर्ग उदाहृतः ॥

३४१. 'सत्प्रतिग्रहः'. मनुः—सत्यचित्तागताद्धर्मादायो लाभः क्रयो जयः । प्रयोगः कर्मयोगश्च सत्प्रतिग्रह एव च ॥

३४२. 'योगक्षेमविधिः (पोष्यवर्गसाधनम्.) पराशरः—गृहस्थस्तु यदा युक्तो धर्ममेवानुचिन्तयेत् । पोष्यधर्मार्थसिध्यर्थं न्यायवर्ती सुबुद्धिमान् ॥ न्यायोपार्जितवित्तेन कर्तव्यं ज्ञानरक्षणम् । अन्यायेन तु यो जीवेत् सर्वकर्मबहिष्कृतः ॥ अन्यच्च—न्यायार्जितधनस्तत्त्वज्ञाननिष्ठोऽतिथिप्रियः । शास्त्रवित्सत्यवादी च गृहस्थोऽपि विमुच्यते ॥ तस्मात् सद्गृहस्थैर्न्यायागतधर्मार्जितेन स्वकष्टसम्पादितद्रव्येण वा स्वकुटुम्बोदरभरणं कर्तव्यमिति ॥

३४३. 'गृहस्थाश्रमप्रशंसा.' वसिष्ठस्मृतौ—गृहस्थ एव यजते गृहस्थस्तप्यते तपः । चतुर्णामाश्रमाणां तु गृहस्थस्तु विशिष्यते ॥ यथा नद्यो नदाः सर्वे समुद्रे यान्ति संस्थितिम् । एवमाश्रमिणः सर्वे गृहस्थे यान्ति संस्थितिम् । यथा मातरमाश्रित्य सर्वे जीवन्ति जन्तवः । एवं गृहस्थमाश्रित्य सर्वे जीवन्ति भिक्षुकाः ॥ नित्योदकी नित्ययज्ञोपवीती नित्यस्वाध्यायी पतितान्नवर्जी । ऋतौ गच्छन् विधिवच्च जुह्वन् न ब्राह्मणश्च्यवते ब्रह्मलोकात् ॥ व्याससंहितायाम्—गृहाश्रमात्परो धर्मो नास्ति नास्ति पुनः पुनः । सर्वतीर्थफलं तस्य यथोक्तं यस्तु पालयेत् ॥ 'सुभाषिते'—सानन्दं सदनं सुताश्च सुधियः कान्ता मनोहारिणी सन्मित्रं स्वधनं स्वयोषिति रतिश्चाज्ञापराः सेवकाः । आतिथ्यं शिवपूजनं प्रतिदिनं मिष्टान्नपानं गृहे साधोः सङ्गमुपासते हि सततं धन्यो गृहस्थाश्रमः ॥

३४४. 'गृहस्थधर्मः'. नारदः—अहिंसा सत्यवचनं सर्वभूतानुकम्पनम् । शमो दानं यथाशक्ति गार्हस्थो धर्म उच्यते । परदारेष्वसं

धर्मस्त्रीपरिरक्षणम् । अदत्तादानविरमो मधुमांसविवर्जनम् । एष पञ्चविधो धर्मो बहुशाखः सुखोदयः । देहिभिर्देहपरमैः कर्तव्यो देहसम्भवः ॥ औशनः—कामं क्रोधं भयं निद्रां गीतवादित्रनर्तनम् । द्यूतं जनपरीवादं स्त्रीप्रेक्षालापनं तथा ॥ परोपतापपैशून्यं प्रयत्नेन विवर्जयेत् ॥ सन्ध्यास्नानरतो नित्यं ब्रह्मयज्ञपरायणः । अनसूयो मृदुर्दान्तो गृहस्थः प्रत्यवर्तते ॥

इति श्रीपुरन्दरोपाह्वविठ्ठलात्मजनारायणेन विरचितायां वाजसनेयाह्निकसूत्रावल्यां तृतीयभागकृत्यानि समाप्तानि ॥



## ॥ अथ चतुर्थभागकृत्यानि ॥

### ॥ माध्याह्नकृत्यानि ॥

३४५. 'कारिका.' दक्षः—चतुर्थे च तथा भागे स्नानार्थं मृदमाहरेत् । तिलपुष्पकुशादीनि स्नानं चाऽकृत्रिमे जले ॥ उपस्थानं ततः पश्चात्सावित्र्या जप उच्यते । व्यासः—स्नानं मध्यन्दिने कुर्यात्सुजीर्णेऽन्ने निरामयः ॥

३४६. 'माध्याह्नसन्ध्या.' ततः—'अर्घ्यप्रकारः.' विश्वामित्रकल्पे—पुष्पाणि तदभावे बिल्वादिपत्राण्युदकेन मिश्राणि संयुक्ताञ्जलिनादायोत्थायोर्ध्वमुपरि सूर्याभिमुखं क्षिप्त्वा । आकृष्णेनेति मन्त्रेणैकमर्घ्यं दद्यात् । असावादित्यो ब्रह्मेति प्रदक्षिणीकृत्य । वारिणाञ्जलिपूर्णेन गायत्र्या चाभिमन्त्रितम् । यथा प्रातः पुनस्तद्वदुपसंहारपूर्वकम् ॥ मध्याह्ने केचिदिच्छन्ति सावित्रीं च तदित्यृचम् । असम्प्रदायं तत्कर्म कार्यहानिश्च जायते ॥ प्रातः सायमुभे सन्ध्ये मन्देहा नाम राक्षसाः । भक्षितुं सूर्यमिच्छन्ति कारणं श्रुतिनोदितम् ॥ अतस्तदैव विप्रेन्द्रः सन्ध्यां कुर्यात्प्रयत्नतः । मूलमन्त्रेण मध्याह्ने प्रक्षिपेच्च जलं बुधः ॥ सन्ध्ययोरुभयोर्नित्यं गायत्र्या प्रणवेन वा । अम्भः सम्प्रक्षिपेत्तेन नान्यथा श्रुतिघातकः ॥

३४७. अथ 'माध्याह्नसन्ध्याप्रयोगः'[1]—(यथोक्तस्नानानन्तरं धौतश्वेतवस्त्रादि परिधायासने उपविश्य गन्धमिश्रितं भस्मानुलेपयेत् । गायत्र्यावाहनपर्यन्तः सर्वो विधिः प्रातःसन्ध्यावज्ज्ञातव्यः) । 'सावित्र्यावाहनम्'—सावित्रीं युवतीं श्वेताङ्गीं श्वेतवाससं त्रिनेत्रां वरदाक्षमालां त्रिशूलाऽभयहस्तां वृषभारूढां यजुर्वेदसंहितां रुद्रदैवत्यां तमोगुणयुतां भुवर्लोकव्यवस्थितां आदित्यपथगामिनीम् । आवाहयाम्यहं देवीमायान्तीं सूर्यमण्डलात् । आगच्छ वरदे देवि त्र्यक्षरे रुद्रवादिनि । वरदां त्र्यक्षरां साक्षाद्देवीमावाहयाम्यहम् । सावित्रि छन्दसां माता रुद्रयोनि नमोऽस्तु ते ॥ (मार्जनं तथा अघमर्षणं प्रातःसन्ध्यावत्) ॥ 'अम्बुप्राशनम्'—आपः पुनन्त्विति मन्त्रस्य

[1] विशेषस्तु संक्षेपतो माध्याह्नसन्ध्याप्रयोगे द्रष्टव्यः ॥

नारायणऋषिः । आपो देवता । गायत्रीछन्दः । अम्बुप्राशने विनियोगः—ॐ आपः पुनन्तु पृथिवीं पृथिवी पूता पुनातु माम् । पुनन्तु ब्रह्मणस्पतिर्ब्रह्मपूता पुनातु माम् । यदुच्छिष्टमभोज्यं च यद्वा दुश्चरितं मम । सर्वं पुनन्तु मामापो सतां च प्रतिग्रहं स्वाहा ॥ आकृष्णेनेत्यनेन मन्त्रेणैकमर्घ्यं दद्यात् । (जपमालां हृदयदेशे धृत्वा । शेषं प्रातःसन्ध्यावत् ।) 'अर्पणम्'—अनेन माध्याह्नसन्ध्याङ्गभूतेन यथाशक्ति कृतेन गायत्रीमन्त्रजपकर्मणा श्रीभगवान् रुद्रस्वरूपी सविता देवता प्रीयतां न मम । शेषं गायत्रीतर्पणं विना प्रातःसन्ध्यावत्कुर्यात् ॥) इति माध्याह्नसन्ध्याप्रयोगः ॥

३४८. अथ 'संक्षेपतो[1] माध्याह्नसन्ध्याप्रयोगः'—'भस्मधारणम्'—ॐ त्र्यायुष० । १ ॥ (किञ्चिद्गन्धमिश्रितं भस्मधार्यम्) ॥ 'शिखाबन्धनम्'—ॐ मानस्तोके० । २ ॥ 'रुद्राक्षमालाधारणम्'—ॐ त्र्यम्बकं० । ३ ॥ 'आचमनानि'—ॐ केशवाय नमः स्वाहा इत्यारभ्य माधवाय नमः स्वाहा इत्यन्तम् ॥ 'हस्तप्रक्षालनादि'-ॐ गोविन्दाय नमः इत्यारभ्य कृष्णाय नमः इत्यन्तम् ॥ 'प्राणायामाः'—प्रणवपूर्वक० इत्यारभ्य विनियोगः पर्यन्तम् ॥ 'आत्मनः समन्तात्प्रदक्षिणवदुदकक्षेपणम्'—ॐ नमो भगवते वासुदेवाय ॥ 'पूरकादिप्राणायामाः'—ॐ भूः इत्यारभ्य स्वरोम् इत्यन्तम् ॥ 'हृदिपवित्रकरणम्'—ॐ विष्णुर्विष्णुः० इत्यारभ्य शुचिः पर्यन्तम् ॥ 'सङ्कल्पः'—ममोपात्तदुरितक्षयद्वारा श्रीरुद्रप्रीत्यर्थं माध्याह्नसन्ध्योपासनमहं करिष्ये ॥ 'भूप्रार्थना'—पृथिवीत्यस्य० इत्यारभ्य चासनमित्यन्तम् ॥ 'अभिषेकः'—ॐ भूः० इत्यारभ्य सत्यं पुनातु इत्यन्तम् ॥ 'अम्बुप्राशनम्'—आपः पुनन्त्वितिमन्त्रस्य । नारायणऋषिः आपो देवता गायत्रीछन्दः अम्बुप्राशने विनियोगः—ॐ आपः पुनन्तु पृथिवीं पृथिवी पूता पुनातु माम् । पुनन्तु ब्रह्मणस्पतिर्ब्रह्मपूता पुनातु माम् । यदुच्छिष्टमभोज्यं च यद्वा दुश्चरितं मम । सर्वं पुनन्तु मामापो सतां च प्रतिग्रहं स्वाहा ॥ (इति पिबेत्) ॥

---

१ अत्र संक्षेपेण दर्शिता मन्त्राः श्लोका वा संक्षेपतो प्रातःसन्ध्याप्रयोगे द्रष्टव्याः ॥

'द्विराचमनम्'—ॐ केशवाय० इत्यारभ्य माधवाय नमः स्वाहा इत्य-न्तम् ॥ 'हस्तप्रक्षालनम्'—ॐ गोविन्दाय नमः ॥ 'मार्जनम्'—आपोहिष्ठेति० इत्यारभ्य यथाचन इत्यन्तम् ॥ 'जलाऽवग्रहणम्'—सुमित्रियादु० इत्यारभ्य द्विष्मः इत्यन्तम् ॥ 'अघमर्षणम्'—द्रुपदादिवेत्य० इत्यारभ्य मैनस इत्यन्तम् ॥ 'पापपुरुषनिरसनम्'—ऋतं च सत्यं० इत्यारभ्य मथो स्वः इत्यन्तम् ॥ 'अर्घ्यम्'—आकृष्णेनेति मन्त्रस्य हिरण्यगर्भऋषिः आपोदेवता त्रिष्टुप्छन्दः सूर्यार्घ्यदाने विनियोगः—ॐ **आकृष्णेन् रजसा वर्त्तमानो निवेशयन्नमृतम्मर्त्त्यञ्च । हिरण्ययेन सविता रथेना देवो याति भुवनानि पश्यन् ॥** ४३/३३ रुद्रस्वरूपिणे सूर्यनारायणाय नमः इदमर्घ्यं दत्तं न मम ॥ (गन्धाक्षतपुष्पैः मिश्रितं उत्थाय एतदर्घ्यं दद्यात्) सोसावादित्ये पुरुषः सोसावहम् । ( अनेन प्रदक्षिणमुदकं क्षिपेत्) ॥ 'आचम्य प्राणानायम्य' (संक्षेपतः प्रातःसन्ध्याप्रयोगवत् ) ॥ 'सूर्योपस्थानम्'—उद्वयमुदुत्य० इत्यारभ्य शतात् इत्यन्तम् ॥ 'सावित्र्यावाहनम्'—सावित्रीं युवतीं श्वेताङ्गीं श्वेतवाससं त्रिनेत्रां वरदाक्षमालां त्रिशूलाभयहस्तां वृषभारूढां यजुर्वेदसंहितां रुद्रदैवत्यां तमोगुणयुतां भुवर्लोकव्यवस्थितां आदित्यपथगामिनीम् । आवाहयाम्यहं देवीमायान्तीं सूर्यमण्डलात् । आगच्छ वरदे देवि त्र्यक्षरे रुद्रवादिनि । वरदां त्र्यक्षरां साक्षाद्देवीमावाहयाम्यहम् । सावित्रि छन्दसां मातः रुद्रयोनि नमोऽस्तु ते ॥ तेजोसीत्य० इत्यारभ्य यजनमसि इत्यन्तम् ॥ 'सावित्र्युपस्थानम्'—तुरीयपदस्य० इत्यारभ्य सावदो इत्यन्तम् ॥ 'गायत्रीजपः'—प्रणवस्य० इत्यारभ्य ॐ तत्सवि० इत्यन्तम् ॥ 'जपान्ते षडङ्गन्यासाः'—ॐ अङ्गुष्ठाग्रे० इत्यारभ्य माधवमित्यन्तम् ॥ 'सूर्यप्रदक्षिणा'—विश्वतश्च० इत्यारभ्य ए० इत्यन्तम् ॥ 'दिग्देवतानां नमस्कारः'—पूर्वे—ॐ इन्द्राय० इत्यारभ्य अनन्ताय नमः इत्यन्तम् ॥ 'जपनिवेदनम्'—देवा गातुविद० इत्यारभ्य संख्याकेन पर्यन्तं ॥ माध्याह्नसन्ध्याङ्गभूतगायत्रीमन्त्रजपाख्येन कर्मणा रुद्रस्वरूपी श्रीसूर्यनारायणः प्रीयतां न मम ॥

आह्निकं ३४८–३५०

श्लोकार्द्धे — ([illegible])

अहुतं च हुतं चैव तथा प्रहुतमेव च ।

ब्राह्म्यं हुतं प्राशितं च पञ्च यज्ञान् प्रचक्षते ।

जपोऽहुतो, हुतो होमः, प्रहुतो भौतिको बलिः ।

ब्राह्म्यं हुतं द्विजाग्र्यार्चा प्राशितं पितृतर्पणम् ।

स्वाध्यायेनार्चयेदृषीन् होमैर्देवान्यथाविधि ।

पितॄन् श्राद्धैर्नृनन्नैः, भूतानि बलिकर्मणा ।

'गोत्रोच्चारणं तथा अभिवादनम्'—अमुकगोत्रो० इत्यारभ्य श-र्माऽहमित्यन्तम् ॥ भो कात्यायनगोत्रधारिणि रुद्ररूपे सावित्रि त्वा-मभिवादयामि । भो वैश्वानर० इत्यारभ्य प्रियवादिनि इत्यन्तम् ॥ "प्रार्थना"—आकाशा० इत्यारभ्य तमच्युतमित्यन्तम् ॥ 'अर्पणम्'—अनेन माध्याह्नसन्ध्योपासनाख्येन कर्मणा श्रीभगवान् रुद्रस्व-रूपी परमेश्वरः प्रीयतां न मम ॥ 'शिखामुक्तिः'—ब्रह्मपाश० इत्यारभ्य करोम्यहम् इत्यन्तम् ॥ 'शिखाबन्धनम्'—तूष्णीम् ॥ 'सन्ध्याभूमृत्तिकावन्दनम्'—ॐ भूर्भुवः स्वः० इत्यारभ्य ॐ इत्य-न्तम् ॥ ॐ विष्णवे नमः । ॐ विष्णवे नमः । ॐ विष्णवे नमः ॥ इति संक्षेपतो माध्याह्नसन्ध्याप्रयोगः ॥

३४९. अथ 'पञ्चमहायज्ञाः' ब्रह्मयज्ञो देवयज्ञो मनुष्ययज्ञः पितृयज्ञो भूतयज्ञ इति श्रुतेः ॥ तदुक्तम्—पाठो होमश्चातिथीनां सपर्या तर्पणं बलिः । एते पञ्च महायज्ञा ब्रह्मयज्ञादिनामकाः ॥

३५०. 'पञ्चमहायज्ञफलम्' याज्ञवल्क्यः—बलिकर्म स्वधा हो-मः स्वाध्यायोऽतिथिसत्क्रिया । भूतपित्रमरब्रह्ममनुष्याणां महामखाः ॥ कात्यायनः—देवभूतपितृब्रह्ममनुष्याणामनुक्रमात् । महासत्राणि जा-नीयात्त एवेह महामखाः ॥ मनुः—ऋषियज्ञं देवयज्ञं भूतयज्ञं च स-र्वदा । नृयज्ञं पितृयज्ञं च यथाशक्ति न हापयेत् ॥ एतानेके महायज्ञान् यज्ञशास्त्रविदो जनाः । अनीहमानाः सततमिन्द्रियेष्वथ जुह्वति ॥ वाच्येके जुह्वति प्राणं प्राणे वाचं च सर्वदा । वाचि प्राणे च पश्यन्तो यज्ञनिर्वृ-त्तिमक्षयाम् । यत्फलं सोमयागेन प्राप्नोति धनवान्द्विजः । सम्यक् पञ्च-महायज्ञैर्दारिद्र्यं नश्यते क्षणात् ॥ 'शतपथब्राह्मणे—ॐ पुञ्चैव-महायज्ञा स्तान्येव महासत्राणि भूतयज्ञो मनुष्ययज्ञ ऽ पितृयज्ञो देवयज्ञो ब्रह्मयज्ञ ऽइति । १ ॥ अहरहर्भूतेभ्यो बलिं हरेत् । तथैतम्भूतयज्ञऽ समाप्नोत्यहरहर्दद्यादोद-पात्रात्तथैतम्मनुष्ययज्ञऽ समाप्नोत्यहरह÷ स्वधा कुर्या-दोदपात्रात्तथैतं पितृयज्ञऽ समाप्नोत्यहरह÷ स्वाहा कुर्यादाकाष्ठात्तथैतं देवयज्ञऽ समाप्नोति । २ ॥ अथ

ब्रह्मयज्ञः स्वाध्यायो वै ब्रह्मयज्ञस्तस्य ब्रह्मयज्ञस्य वा-
गेव जुहूर्मन उपभृच्चक्षुर्ध्रुवा मेधा स्रुवः सत्यमवभृथः
स्वर्गो लोक उदयनं यावन्त ह वा इमाँ पृथिवीं
वित्तेन पूर्णां ददल्लोकं जयति त्रिस्तावन्तं जयति भूयाꣳ
सं चाक्षय्यं य एवं विद्वानहरहः स्वाध्यायमधीयते
तस्मात्स्वाध्यायोऽध्येतव्यः । ३ ॥ पय आहुतयो ह वा
एतान्देवानां यदृचः स य एवं विद्वानृचो हरहः स्वा
ध्यायमधीते पय आहुतिभिरेव तद्देवाँस्तर्पयति त एवं
तृप्तास्तर्पयन्ति योगक्षेमेण प्राणेन रेतसा सर्वात्मना
सर्वाभिः पुण्याभिः सम्पद्भिर्घृतकुल्यामधुकुल्याः पितॄ-
न्स्वधा अभिवहन्ति । ४ ॥ आज्याहुतयो ह वा एता-
न्देवानां यजूꣳषि स य एवं विद्वान्यजूꣳष्यहरहः
स्वाध्यायमधीत आज्याहुतिभिरेव तद्देवाँस्तर्पयति
योगक्षेमेण प्राणेन रेतसा सर्वात्मना सर्वाभिः पुण्या-
भिः सम्पद्भिर्घृतकुल्यामधुकुल्याः पितॄन्स्वधा अभिव-
हन्ति । ५ ॥ सोमाहुतयो ह वा एतान्देवानां यत्सा-
मानि स य एवं विद्वान्सामान्यहरहः स्वाध्या-
यमधीते सोमाहुतिभिरेव तद्देवाँस्तर्पति त एनं तृप्ता-
स्तर्पयन्ति योगक्षेमेण प्राणेन रेतसा सर्वात्मना सर्वा-
भिः पुण्याभिः सम्पद्भिर्घृतकुल्या मधुकुल्याः पितॄन्स्व-
धा अभिवहन्ति । ६ ॥ मेद आहुतयो ह वा एतान्दे-
वानां यदथर्वाङ्गिरसः स य एवं विद्वानथर्वाङ्गिरसो
हरहः स्वाध्यायमधीते मेद आहुतिभिरेव तद्देवाँस्तर्प-
यति त एनं तृप्तास्तर्पयन्ति योगक्षेमेण प्राणेन रेतसा
सर्वात्मना सर्वाभिः पुण्याभिः सम्पद्भिर्घृतकुल्या मधु

कुल्या÷ पितॄन्स्वधाऽअभिवहन्ति ।७॥ मध्वाहुतयो ह्वा ऽएतान्देवानां यदनुशासनानि विद्या वाको वाक्यमितिहासपुराणं गाथा नाराश६स्य÷ स यऽएवं विद्वाननुशासनाविद्या वाको वाक्यमितिहासपुराणंगाथानाराश६ सीरित्यहरहऽ स्वाध्यायमधीते मध्वाहुतिभिरेव तद्देवाँस्तर्पयति त ऽएनं तृप्तास्तर्पयन्ति योगक्षेमेण प्राणेन रेतसा सर्वात्मना सर्वाभि÷पुण्याभिः सम्पद्भिर्घृतकुल्याऽ मधुकुल्या पितॄन्स्वधाऽअभिवहन्ति । ।८॥ तस्य वा ऽएतस्य ब्रह्मयज्ञस्य चत्वारो वषट्कारा यद्वा तो वा यद्विद्युो तत्ते यस्तनयति यदेव स्फूर्जति तस्मादेवं विद्वाते वाति विद्योतमाने स्तनयत्त्येव स्फूर्जत्युधिपीत व वषट्काराणामत्त्सं वषट्कारायति ह वै पुनरमृत्त्युर्मुच्यते गुच्छति ब्रह्मण÷ स्वात्मता६ स चेदपि प्रबलमिव न शक्नुयादप्येकं देवपदमधीयीतैव तथाप्येतेभ्यो न हीयते ॥ ९ ॥ इति पञ्चमहायज्ञफलम् ॥

३५१. 'ब्रह्मयज्ञविधिः.' योगियाज्ञवल्क्यः—प्रदक्षिणं समावृत्य आसने उपविश्य च । दर्भेषु दर्भपाणिः सन् प्राङ्मुखस्तु कृताञ्जलिः ॥ स्वाध्यायं तु यथाशक्ति ब्रह्मयज्ञार्थमाचरेत् । ऋचां च यजुषां साम्नां गाथागुह्यमथापि वा । आदावारभ्य वेदस्तु स्नात्वोपर्युपरिक्रमात् । यदधीतेऽन्वहं भक्त्या स स्वाध्याय इति स्मृतः ॥

३५२. 'ब्रह्मयज्ञः.' कात्यायनपरिशिष्टसूत्रे—विभ्राडित्यनुवाकपुरुषसूक्तशिवसङ्कल्पमण्डलब्राह्मणैरित्युपस्थाय । प्रदक्षिणीकृत्य नमस्कृत्योपविशेद्दर्भेषु दर्भपाणिः स्वाध्यायं च यथाशक्त्यादावारभ्य वेदम् ॥ कात्यायनत्रिकण्डिकासूत्रे—हरिहरभाष्ये—सन्ध्यावन्दनानन्तरं किं कुर्यादित्यपेक्षायां ब्रह्मयज्ञं कुर्यादित्याह । 'सूत्र-

(१) एतान्मन्त्रान् श्राद्धीयब्राह्मणभोजनकाले पठन्ति ॥

म्'—दर्भेषु दर्भपाणिः स्वाध्यायश्च यथाशक्त्यादावारभ्य वेदम्.-'व्याख्या'—दर्भेषु प्रशस्तदारुनिर्मितासनोपरि निहितेषु प्रागग्रेषु वा त्रिषु कुशेषु आसीनः प्राङ्मुख उपविश्योदङ्मुखो वा दर्भपाणिः दर्भपवित्रोपग्रहयुक्तौ पाणी यस्यासौ दर्भपाणिः स्वाध्यायं ब्रह्मयज्ञं यथाशक्ति। शक्तिमनतिक्रम्य कुर्यात्। किं कृत्वा। आरभ्य उपक्रम्य। कं वेदं मन्त्रब्राह्मणात्मकम्। कुत आरभ्य। आदौ आदित इषेत्वोर्जेत्वेतदस्मादथ व्रतमुपैम्यं नित्यस्माच्च। अत्र वेदमित्येकवचनादनेकवेदाध्ययनयेप्येकं वेदमारभ्य प्रतिदिनमुपर्युपर्यध्ययनेन समाप्यान्यवेदमारभ्य तथैव समाप्याथर्वाङ्गिरसपुराणेतिहासादीन्यपि तथैवादित आरभ्यैवमेकैकं इत्येवं पाठान्तरं समाप्यापरमपरमारभ्य समापयेत्। न पुनर्यदृच्छया एकदेशम्। आदावारभ्येति नियमात्। वेदशब्दोत्राथर्वादेरप्युपलक्षणार्थः। यथाह—याज्ञवल्क्यः—वेदाथर्वपुराणानि सेतिहासानि शक्तितः। जपयज्ञप्रसिद्ध्यर्थं विद्यां चाध्यात्मिकां जपेत्॥ स चापि जपयज्ञः कालान्तरेऽपि क्रियते। यश्च श्रुतिजपः प्रोक्तो ब्रह्मयज्ञस्तु स स्मृतः। स चार्वाक् तर्पणात्कार्यः पश्चाद्वा प्रातराहुतेः॥ वैश्वदेवावसाने वा नान्यत्र ह्यनिमित्तकात्॥ पारस्करगृह्यसूत्रे हरिहरभाष्ये कात्यायनः—'किञ्च'—न हन्तीति न होमं च स्वाध्यायं पितृतर्पणम्। नैकः श्राद्धद्वयं कुर्यात्समानेऽहनि कुत्रचित्॥ तस्मात्प्रातर्होमानन्तरं वा तर्पणात्पूर्वं वा वैश्वदेवान्ते वा सकृद्ब्रह्मयज्ञं कुर्यादिति सिद्धम्॥ 'एतद्वचनाभिप्रायेण वाजसनेयब्राह्मणाः द्विवारं वैश्वदेवं न कुर्वन्ति। तस्मात्तेषां प्रयोगेषु सङ्कल्पेषु वा सायंवैश्वदेवो नास्ति' इति बोध्यम्॥

३५३. 'अथ सूर्योपस्थानप्रयोगः.'—आचम्य प्राणानायम्य॥ 'सङ्कल्पः'—अद्य पूर्वोच्चारितवर्त्तमान एवंगुणविशेषेण विशिष्टायां शुभपुण्यतिथौ ममाऽऽत्मनः श्रुतिस्मृतिपुराणोक्तफलप्राप्त्यर्थं श्रीसवितासूर्यनारायणप्रीत्यर्थं सूर्योपस्थानमहं करिष्ये। 'कुशपवित्रधारणम्'—ॐ पुवित्रेस्थो व्वैष्णव्यौ सवितुर्व्वः प्रसुवऽउत्पुनाम्म्यच्छिद्रेण पुवित्रेण सूर्य्यस्य रुश्मिभिः॥

(१) इदं सूर्योपस्थानं श्रावण्यां तथा श्राद्धदिने कुर्वन्ति॥

$\frac{१२}{१}$ ॥ * * तस्यं ते पुवित्रं पूतस्यु यत्कामः पुने तच्छ्क्रेयम् । १$\frac{४}{४}$ ॥ इति मन्त्रेण दक्षिणवामहस्तयोरनामिकयोः कुशपवित्रे धार्ये । 'सूर्यपूजनम्'[1]—ॐ उदुत्यञ्जातवेदसं० । २$\frac{३१}{३३}$ ॥ सूर्यमुदीक्षन्[2]—ॐ उद्वयन्तमस॒० । ३ $\frac{२४}{३८}$ ॥ ॐ उदुत्यञ्जा० । ४$\frac{३१}{३३}$ ॥ ॐ चित्रन्देवाना० । ५$\frac{४६}{१३}$ ॥ ॐ तच्चक्षुर्देॆ०। ६ $\frac{२४}{३७}$ ॥ ॐ तत्सवितु० । ७$\frac{३५}{३}$ ॥ 'अनुवाकः'—ॐ विभ्राट्० । १७ ॥ 'पुरुषसूक्तम्'—ॐ सहस्रशीर्षा० १६ ॥ 'शिवसङ्कल्पः'—ॐ यज्ज्याग्रंतात्सुषारथिरश्वान्तस्म ॥ ६ ॥ (एते मन्त्रा रुद्राध्याये द्रष्टव्याः) ॥ 'मण्डलब्राह्मणम्'—ॐ यदेतन्मण्डलं तपति तन्महदुक्थन्ताऽऋचः स ऽऋचां लोकोथ यदेतदर्चिर्दीप्यते तन्महाव्रतं तानि सामानि स साम्नाँल्लोकोथ य ऽएष ऽएतस्मिन्मण्डले पुरुषः सोग्निस्तानि यजूंषि स यजुषांलोकः । १ ॥ सैषा त्रय्येव विद्या तपति तद्धैतदप्यविद्वाꣳस ऽआहुस्त्रयी वा ऽएषा विद्या तपतीति वाग्घैव तत्पश्यन्ती वदति । २ ॥ स ऽएष ऽएव मृत्युर्य ऽएष ऽएतस्मिन्मण्डले पुरुषोथैतदमृतं यदेतदर्चिर्दीप्यते तस्मान्मृत्युर्न म्रियते मृतेर्ह्यन्तस्तस्मादु न दृश्यते मृतेर्ह्यन्तः । । ३ ॥ 'तदेष श्लोको भवति'—अन्तरंमृत्योरमृतमित्यवरꣳ ह्येतन्मृत्योरमृतस्मृत्यावमृतमाहितमित्येतस्मिन्हि पुरुष ऽएतन्मण्डलम्प्रतिष्ठितं तपति मृत्युर्विवस्वन्तं वस्त ऽइत्यसौ वा ऽआदित्यो विवस्वानेषह्यहोरात्रे विवस्ते तमेष वस्ते सर्वतो ह्येनेन परिवृतो

(१) इति मन्त्रेण सूर्यं गन्धाक्षतपुष्पैः सम्पूज्य ॥ (२) दक्षिणवामपाण्योर्द्वौ द्वौ साग्रदर्भौ गन्धाक्षतश्वेतपुष्पतुलसीदलसंहितौ धृत्वा पश्चादेते मन्त्राः पठनीयाः ॥

मृत्त्योरात्मा ह्विवस्वतीत्येतस्मिन्हि मुण्डल ऽएतस्य पुरु-
षस्यात्मैतदेष श्लोको भवति । ४ ॥ तयोर्वा ऽएतयो-
भयोरेतस्य चार्चिष ऽएतस्य च पुरुषस्यैतन्मुण्डलं प्रति-
ष्ठा तस्मान्महदुक्थम्परस्मै न शꣳसेन्नेदेतां प्रतिष्ठां छिन-
दाऽ इत्येताꣳ ह स प्रतिष्ठां छिन्तेऽथो महदुक्थं परस्मै
शꣳसति तस्मादुक्थशꣳसम्भूयिष्ठं परिचक्षते प्रतिष्ठा छि-
न्नो हि भवतीत्यधिदेवतम् । ५ ॥ 'अथाधियज्ञम्'-य-
देतन्मुण्डलं तपत्ययꣳस रुक्मोऽथ यदे तदर्चिर्दीप्यतऽइ-
तत्पुष्करपर्णमापो ह्येताऽआपꣳ पुष्करपर्णमथ य ऽए-
ऽएतस्मिन्मुण्डले पुरुषो यमेव स योऽयꣳ हिरण्मयꣳ पुरु-
षस्तदे तदेवैतत्रयꣳ संस्कृत्येहोपधत्ते तद्यज्ञस्यैवानु सꣳ-
स्यामूर्द्ध्वमुत्क्रामति तदे तमप्येति य ऽएष तपति तस्मा-
दग्निनाद्रियेत परिहन्तुममुत्र ह्येष तदा भवतीत्यु ऽए-
वाधि यज्ञम् । ६ ॥ 'अथाध्यात्मम्'—यदेतन्मुण्डलं
तपति यश्चैष रुक्मऽइदं तच्छुक्लमक्षन्नथ यदेतदर्चिर्दीप्यते
यच्चैतत्पुष्करपर्णमिदं तत्कृष्णमक्षन्नथ य ऽएष ऽएतस्मि-
न्मुण्डले पुरुषो यश्चैष हिरण्मयꣳ पुरुषो यमेव स योऽयं
दक्षिणेक्षन्पुरुषꣳ । ७ ॥ स ऽएष ऽएव लोकं पृणतामे-
सर्व्वाग्निरभि सम्पद्यते तस्यै तन्मिथुनं यो यꣳ स अक्ष-
पुरुषोर्द्धमहै तदात्मनो यन्मिथुनं यदा वै सह मिथुने ना-
सर्व्वोऽथ कृत्स्नꣳ कृत्स्नतायै तद्यत्ते द्वे भवतो द्वन्द्वꣳ हि
मिथुनम्प्रजननं तस्माद्द्वे द्वे लोकं पृणे ऽउपधीयेते तस्मा-
दुद्वाभ्यां द्वाभ्यां चितिम्प्रणयन्ति । ८ ॥ स ऽएष ऽए-
न्द्रꣳ । योयं दक्षिणेक्षन् पुरुषोऽथे यमिन्द्राणी ताभ्यां दे-

ऽएतां विधृतिमकुर्वन्नासिकान्तस्माज्जायाया अन्तेना-श्नीयाद्वीर्य्यवान्हास्माज्जायते वीर्य्यवन्तमुह सा जनयति यस्या ऽअन्ते नाश्नाति। ९॥ तदेतद्देवव्रतᳫं राजन्यबन्धवो मनुष्याणामनुतमां गोपायन्ति तस्मादु तेषु वी-र्य्यवाञ्जायते मृतवाक्ता वयसाᳫं साक्षिप्रश्येनं जनयति। १०॥ तौ हृदयस्याकाशं प्रत्यवेत्य मिथुनीभवतस्तौ यदा मिथुनस्यान्तङ्गच्छतोथ है तत्पुरुषः स्वपिति तद्यथा हैवेदम्मानुषस्य मिथुनस्यान्तङ्गत्वा संविद ऽइव भवत्ये-वᳫं है वैतदसंविद ऽइव भवति दैवᳫं ह्येतन्मिथुनम्परमो ह्येष ऽआनन्दः। ११॥ तस्मादेवंवित्स्वप्यात्॥ लोक्यᳫं है ते ऽएव तद्देव ते मिथुनेन प्रियेण धाम्ना स-मर्द्धयति तस्मादुह स्वपन्तं धुरेव न बोधयेन्नेदेते देव ते मिथुनी भवन्त्यौ हिनसानीति तस्मादु हैतत्सुषुपुषः श्लेष्मणमिव मुखम्भवत्येते ऽएव तद्देवते रेतः सिञ्चतस्तस्माद्रेतस ऽइदᳫं सर्वᳫं सम्भवति यदिदं किञ्च। १२॥ स ऽएष ऽएव मृत्युः॥ य ऽएष एतस्मिन्मण्डले पुरुषो यश्चायन्दक्षिणेक्षन्पुरुषस्तस्य हैतस्य हृदये पादावतिहितौ तौ हैतदाच्छिद्योत्क्रामति स यदोत्क्रामत्यथ है-तत्पुरुषो म्रियते तस्मादुहैतत्प्रेतमाहुराच्छेद्यस्येति। १३॥ एष ऽउ ऽएव प्राणः। एष हीमाः सर्वाः प्रजाः प्रणयति तस्यैते प्राणाः स्वाः स यदा स्वपित्यथैनमेते प्राणाः स्वा ऽअपियन्ति तस्मात्स्वाप्ययः स्वाप्ययो ह वैतᳫं स्वप्न ऽइत्याचक्षते परोक्षम्परोक्षकामा हि देवाः। १४॥ स-ऽएतैः सुप्तो न कस्य च न वेद न मनसा सङ्कल्पयति

न वाचान्नस्य रसं विजानाति न प्राणेन गन्धं विजानाति न चक्षुषा पश्यति न श्रोत्रेण शृणोत्येतꣳ ह्येते तदा पीता भवन्ति स ऽएष ऽएकꣳ सन्प्रजासु बहुधा व्याविष्टस्तस्मादेका सती लोकम्पृणा सर्वमग्निमनु विभवत्यथ यदेकऽएव तस्मादेकः । १५ ॥ तदाहुः । ऽएको मृत्युर्बहवऽइत्येकश्च बहवश्चेति ह ब्रूयाद्यदहासावमुत्र तेनैकोथ यदिह प्रजासु बहुधा व्याविष्टस्तेनो बहवः । १६ ॥ तदाहुः । ऽअन्तिके मृत्युर्दूराऽइत्यन्तिके च दूरे चेति ह ब्रूयाद्यदहायमिहाध्यात्मन्तेनान्तिकेथ यदसावमुत्र ते नो दूरे । १७ ॥ तदेष श्लोको भवति । अन्ये भात्यपश्रितो रसानाꣳसंक्षरेमृतऽइति यदेतन्मण्डलं तपति तदन्नमथ य ऽएष ऽएतस्मिन्मण्डले पुरुषः सोत्ता स ऽएतस्मिन्नन्नेपश्रितो भातीत्यधिदेवतम् । १८ ॥ 'अथाध्यात्मम्'—इदमेव शरीरमन्नमथ यो यन्दक्षिणेक्षन्पुरुषःसोत्ता स ऽएतस्मिन्नन्नेपश्रितो भाति । १९ ॥ तमेतमग्निरित्यध्वर्यव ऽउपासते । यजुरित्येष हीदꣳसर्वं युनक्ति सामेति छन्दोगा ऽएतस्मिन्हीदꣳ सर्वꣳ समानमुक्थमिति बह्वृचा ऽएष हीदꣳ सर्वमुत्थापयति यातुरिति यातुविद ऽएतेन हीदꣳ सर्वं यतं विषमिति सर्प्पाः सर्प्पऽ इति सर्प्पविद ऽऊर्गिति देवा रयिरिति मनुष्या मायेत्यसुराः स्वधेति पितरो देवजन ऽइति देवजनविदो रूपमिति गन्धर्वा गन्ध ऽइत्यप्सरसस्तं यथा यथोपासते तदेव भवति तद्धैनान् भूत्वावति तस्मादेनमेवं विद्सर्वैरेवैतैरुपासीत सर्वꣳ हैतद्भवति सर्वं

हैनमेतद्भूत्वाऽवति । २० ॥ स ऽएष त्रीष्टकोग्निर्ऋ-ग्गेका यजुरेका सामैका तद्याङ्काञ्चात्रर्च्चोपदधाति रुक्म ऽएव तस्या ऽआयतनमथ यां यजुषा पुरुष ऽएव तस्या ऽआयतनमथ याᳬ सान्ना पुष्करपर्णमेव तस्या ऽआय-तनमेवं त्रीष्टकः । २१ ॥ ते वा ऽएते ऽउभे ऽएष च रुक्म ऽएतच्च पुष्करपर्णमेतम्पुरुषमपीत ऽउभे ह्यृक्सामे यजु-रपीत ऽएवम्वेकेष्टकः । २२ ॥ स ऽएष ऽएव मृत्युः य ऽएष ऽएतस्मिन्मण्डले पुरुषो यश्चायं दक्षिणेक्षन्पुरु-षः स ऽएष ऽएवंविद ऽआत्मा भवति स यदेवं विद-स्माँल्लोकात्प्रैत्यथैतमेवात्मानमभि सम्भवति सोमृतो भवति मृत्युर्ह्यस्यात्मा भवति । २३ ॥ तेन वा ऽइदमग्रे सदासीन्नैव सदासीत ॥ मण्डलब्राह्मणम् ॥

'तदाहुः'—किञ्छन्दः का देवताग्नेःशिर ऽइति गायत्रीछन्दोऽग्निर्देवता शिरः । १ ॥ किञ्छन्दः का देवता ग्रीवा ऽइत्युष्णिक् छन्दः सवितादेवता ग्रीवाः । २ ॥ किञ्छन्दः का देवतानूकमिति बृहती-छन्दो बृहस्पतिर्देवतानूकम् । ३ ॥ किञ्छन्दः का दे-वता पक्षाविति बृहद्रथन्तरे छन्दो द्यावापृथिवीदेवते पक्षौ । ४ ॥ किञ्छन्दः का देवता मध्यमिति त्रिष्टुप् छन्द ऽइन्द्रो देवता मध्यम् । ५ ॥ किञ्छन्दः का दे-वता श्रोणी ऽइति जगतीछन्द ऽआदित्यो देवता श्रोणी । ६ ॥ किञ्छन्दः का देवता यस्मादिदं प्राणाद्रेतः सि-च्यत ऽइत्यतिछन्दश्छन्दः प्रजापतिर्देवता । ७ ॥

(१) तदाहुरित्यायत्र लिखितं ब्राह्मणद्वयं केचित्पठन्ति केचिन्न ॥

किञ्छन्दः का देवता योयमवाङ् प्राणऽइति यज्ञाय-
ज्ञियं छन्दो वैश्वानरो देवता । ८ ॥ किञ्छन्दः का
देवतोरू ऽइत्यनुष्टुप् छन्दो विश्वेदेवा देवतोरू । ९ ॥
किञ्छन्दः का देवताष्ठीवन्ताविति पङ्क्तिश्छन्दो मरु-
तो देवताष्ठीवन्तौ । १० ॥ किञ्छन्दः का देवता प्र-
तिष्ठेऽइति द्विपदाछन्दो विष्णुर्देवता प्रतिष्ठे । ११ ॥
किञ्छन्दः का देवता प्राणाऽइति विश्छन्दश्छन्दो
वायुर्देवता प्राणाः । १२ ॥ किञ्छन्दः का देवतोना-
तिरिक्तानीति न्यूनाक्षराछन्द ऽआपो देवतो नातिरि-
क्तानि सैषात्मविद्यैवैतन्मयो हैवैता देवता ऽएतमात्मा-
नमभि सम्भवति न हात्रान्यालोक्यता या ऽआशीरस्ति
। १३ ॥ धीरो ह शातपर्णेयः ॥ ब्राह्मणम् ॥

ॐ त्रयं वा ऽइदन्नामरूपं कर्म तेषान्नाम्नां वा-
गित्येतदेषामुक्थमतो हि सर्वाणि नामान्युत्तिष्ठन्त्ये-
तदेषाᳬसामैतद्धि सर्वैर्नामभिः सममेतदेषां ब्रह्मैतद्धि
सर्वाणि नामानि बिभर्त्ति । १ ॥ 'अथ रूपाणाम्'—
चक्षुरित्येतदेषामुक्थमतो हि सर्वाणि रूपाण्युत्तिष्ठन्त्ये-
तदेषाᳬसामैतद्धि सर्वैरूपैः सममेतदेषां ब्रह्मैतद्धि स-
र्वाणि रूपाणि बिभर्त्ति । २ ॥ 'अथ कर्मणाम्'—आ-
त्मेत्येतदेषामुक्थमतो हि सर्वाणि कर्माण्युत्तिष्ठन्त्येतदे-
षाᳬ सामैतद्धि सर्वैः कर्मभिः सममेतदेषां ब्रह्मैतद्धि
सर्वाणि कर्माणि बिभर्त्ति तदेतत्त्रयᳬसदेकमयमात्मा-
त्मो ऽएकः सन्नेतत्त्रयं तदेतदमृतᳬसत्येन छन्नं प्राणो
वा ऽअमृतं नामरूपे सत्यन्ताभ्यामयं प्राणश्छन्नः ।
'ब्राह्मणम्' । ३ ॥ 'दृप्तबालाकिर्हानूचानो गार्ग्य

ऽआस'—भूमिरन्तरिक्षं द्यौरिति। अष्टावक्षराण्यष्टाक्ष-
रꣳ ह वाऽएकम्। गायत्र्यै पदमेतदुहास्या ऽएतत्स या-
वदेषु लोकेषु तावद्ध जयति योस्या ऽएतदेवं पदं वेद-
॥ १ ॥ ऋचो यजूꣳषि सामानीत्यष्टावक्षराण्यष्टाक्षरꣳ
ह वा ऽएकं गायत्र्यै पदमेतदुहैवास्या ऽएतत्स याव-
तीयं त्रयी विद्या तावद्ध जयति योस्या ऽएतदेवं पदं वेद-
। २ ॥ प्राणोऽपानो व्यान ऽइत्यष्टावक्षराण्यष्टाक्षरꣳह
वा ऽएकं गायत्र्यै पदमेतदुहैवास्या ऽएतत्स यावदिदं
प्राणि तावद्ध जयति योस्या ऽएतदेवं पदं वेद। ३ ॥ अ-
थास्या ऽएतदेव तुरीयं दर्शतं पदं परोरजा य ऽएव तपति
यद्वै चतुर्थं तत्तुरीयं दर्शतं पदमिति ददृश ऽइव ह्येष प-
रोरजा ऽइति सर्वमु ह्येष रज ऽउपर्युपरि तपत्येवꣳ
हैव श्रिया यशसा तपति योस्या ऽएतदेवं पदं वेद।
। ४ ॥ सैषा गायत्र्येतस्मिंस्तुरीये दर्शते पदे परोरजसि
प्रतिष्ठिता। तद्वैतत्सत्ये प्रतिष्ठिता चक्षुर्वै सत्यं चक्षुर्हि वै
सत्यं तस्माद्यदिदानीन्द्वौ विवदमानावेयातामहमद्रा-
क्षमहमश्रौषमिति य ऽएवं ब्रूयादहमद्राक्षमिति तस्मा
ऽएव श्रद्दध्याम। ५ ॥ तद्वै तत्सत्यं बले प्रतिष्ठितम्।
प्राणो वै बलं तत्प्राणे प्रतिष्ठितं तस्मादाहुर्बलꣳ सत्या-
दोजीय ऽइत्येवमेषा गायत्र्यध्यात्मं प्रतिष्ठिता। ६ ॥
'सा हैषा गयांस्तत्रे'—प्राणा वै गयांस्तत्प्राणांस्तत्रे-
तद्यद्गयांस्तत्रेतस्माद्गायत्री नाम स यामेवामूमन्वाहै-
षैव सा स यस्मा ऽअन्वाह तस्य प्राणांस्त्रायते। ७ ॥
'ताꣳहैके'—सावित्रीमनुष्टुभमन्वाहुर्वागनुष्टुबेतद्वाचम-

नुब्रूम ऽइति न तथा कुर्याद्गायत्रीमेवानुब्रूयाद्यदिह वा ऽअपि बह्वीव प्रतिगृह्णाति न हैव तद्गायत्र्या ऽएकञ्चन पदं प्रति । ८ ॥ स य ऽइमां स्त्रींल्लोकान्पूर्णान्प्रतिगृह्णीयात् । सोस्या ऽएतत्प्रथमम्पदमाप्नुयादथ यावती यन्त्रयी विद्या यस्तावत्प्रतिगृह्णीयात्सोस्या ऽएतद्द्वितीयम्पदमाप्नुयादथ यावदिदं प्राणि यस्तावत्प्रतिगृह्णीयात्सोस्या ऽएतत्तृतीयम्पदमाप्नुयादथास्या ऽएतदेव तुरीयं दर्शतं पदं परोरजा य ऽएष तपति नैव केन चनाप्यं कुत ऽउ ऽएतावत्प्रतिगृह्णीयात् । ९ ॥ 'तस्या उपस्थानम्'—( उत्थाय )—गायत्र्यस्येकपदी द्विपदी त्रिपदी चतुष्पद्यपदसि नहि पद्यसे । नमस्ते तुरीयाय दर्शताय पदाय परोरजसे सावदोमाप्रापदिति यं द्विष्यादसावस्मै कामो मा समर्द्धीति वा न हैवास्मै स कामः समृध्यते यस्मा ऽएवमुपतिष्ठतेहमदः प्रापमिति वा । १० ॥ 'एतद्ध वै तज्जनको वैदेहो बुडिलमाश्वतराश्विमुवाच—यन्नु होतद्गायत्री विदब्रूथाऽअथ कथः हस्तीभूतो वहसीति मुखः ह्यस्याः सम्म्राण्ण विदां चकारेति होवाच । ११ ॥ तस्याऽ अग्निरेव मुखम् । यदि ह वा ऽअपि बह्वी वाग्नावभ्यादधति सर्वमेव तत्सन्दहत्येवः हैवैवं विद्यद्यपि बह्वीव पापं करोति सर्वमेव तत्संसाय शुद्धःपूतोजरोऽमृतःसम्भवति । १२ ॥ ब्राह्मणम् ॥ श्वेतकेतुर्ह वाऽआरुणेयः । प्रदक्षिणीकृत्य नमस्कृत्योपविशेत् ॥ १३ ॥ इति मण्डलब्राह्मणम् ॥ (पाण्योर्गृहीतकुशानां कुशपवित्रयोश्च पूर्वस्यां दिशि त्यागः कर्तव्यः) ॥ 'अर्पणम्'—अनेन यथाशक्त्या कृतेन सूर्योपस्थानकर्मणा श्रीभगवान् सवि-

सूर्यनारायणः प्रीयतां न मम ॥ ॐ तत्सद्ब्रह्मार्पणमस्तु ॥ इति सूर्योपस्थानप्रयोगः ॥

३५४. अथ 'ब्रह्मयज्ञप्रयोगः'—(सूर्योपस्थानानन्तरं प्रदक्षिणीकृत्य नमस्कृत्योपविशेत् । दर्भेषूपविश्य दर्भपाणिर्भूत्वा स्वाध्यायं च यथाशक्त्याद्यावारभ्य वेदम्) आचम्य प्राणानायम्य (1) ॥ 'कुशपवित्रधारणम्'— ॐ पवित्रे (2) स्थो वैष्णव्यौ सवितुर्वः प्रसवऽउत्पुनाम्यच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः । १२/१ ॥ * * तस्य ते पवित्रपते पवित्रपूतस्य यत्कामः पुने तच्छकेयम् । १ ४ ॥ 'सङ्कल्पः'—अद्य पूर्वोच्चारित एवंगुणविशेषेण विशिष्टायां शुभपुण्यतिथौ ममाऽत्मनः श्रुतिस्मृतिपुराणोक्तफलप्राप्त्यर्थं ॐ तत्सत् परमेश्वरप्रीत्यर्थं यथाशक्ति ब्रह्मयज्ञेनाऽहं यक्ष्ये । 'अथातो ब्रह्मयज्ञं व्याख्यास्यामः'—द्वितीयसङ्कल्पः—इषेत्वादिषु मन्त्रेषु खं ब्रह्मान्तेषु दशप्रणवसहितेषु याः क्रियास्तत्र विवस्वानृषिः प्रजापतिर्देवता । सर्वाणि छन्दाꣳसि सर्वाणि सामानि प्रतिलिङ्गोक्तादेवता । ब्रह्मयज्ञे विनियोगः ॥ ब्रह्मयज्ञारम्भे यथाविधि स्नात्वा छन्दः पुरुषꣳ शरीरं न्यसेत् । तिर्यग्बिलश्चमस ऽऊर्ध्वबुध्नः छन्दः पुरुषस्य च ॥ 'न्यासाः'—ॐ गौतमभरद्वाजाभ्यां नमः—नेत्रयोः । ॐ विश्वामित्रजमदग्निभ्यां नमः—श्रोत्रयोः । ॐ वसिष्ठकश्यपाभ्यां नमः—नासिकयोः । ॐ अत्रये नमः—वाचि । ॐ गायत्र्यग्निभ्यां नमः—शिरसि । ॐ उष्णिक्सवितृभ्यां नमः—ग्रीवायाम् । ॐ बृहतीबृहस्पतिभ्यां नमः—अनुके (हनौ) । ॐ बृहद्रथन्तरद्यावापृथिवीभ्यां नमः—बाह्वोः । ॐ त्रिष्टुबिन्द्राभ्यां नमः—नाभौ । ॐ जगत्यादित्याभ्यां नमः—श्रोण्योः । ॐ अतिच्छन्दाप्रजापतिभ्यां नमः—लिङ्गे । ॐ यज्ञायज्ञियवैश्वानराभ्यां नमः—गुदे । ॐ अनुष्टुब्विश्वेभ्यो देवेभ्यो नमः—ऊर्वोः । ॐ पङ्क्तिमरुद्भ्यो नमः—जान्वोः । ॐ द्विपदाविष्णुभ्यां नमः—पादयोः ।

(१) देवपूजाप्रयोगे दर्शितक्रमेण 'आचमनप्राणायामादि' कुर्यात् ॥ (२) इति मन्त्रेण दक्षिणानामिकायां कुशपवित्रं धृत्वा ॥

ॐ विच्छन्दावायुभ्यां नमः—नासापुटस्थप्राणेषु । ॐ न्यूनाक्षराछन्दोभ्यो नमः—सर्वाङ्गेषु ॥ एवमेवाङ्गानि योजयित्वा वेदमयः सम्पद्यते । [ न कुतश्चिद्भयं विन्दते । शापानुग्रहसामर्थ्यं ब्राह्मं तेजश्च वर्द्धते । स्वर्गलोकं परं साधनम् । धर्मार्थकाममोक्षस्य च । तस्य दारिद्र्यदुःखशोकरोगभयं न भवति । ऋषिर्देवता छन्दाꣳसि विदित्वा । ऋङ्मयो यजुर्मयः साममयोऽथर्वमयोऽमृतमयो । विष्णुरिदं कात्यायनस्य च ॥ ]

ॐ भूर्भुवः स्वः तत्सवितु० । २ $\frac{३}{३६}$ ॥ ॐ इषेत्त्वोर्जेत्त्वा वायवस्त्थ देवो वः सविता प्प्रार्प्पयतु श्श्रेष्ठतमाय कर्म्मणऽआप्प्यायद्ध्वमघ्न्याऽइन्द्राय भागम्प्प्रजावतीरनमीवा ऽअयक्ष्मा मा वस्तेन ऽईशत माघशꣳसो ध्रुवाऽअस्मिन्नगोपतौ स्यात बह्वीर्य्यजमानस्य पशून्पाहि ।३ $\frac{१}{१}$ ॥ वसोः पवित्रमसि ॥ हिरण्मयेन पात्रेण । सत्यस्याऽपिहितम्मुखम् । यो सावादित्ये पुरुषः सोसावहम् । ४ $\frac{१७}{४०}$ ॐ ३ म । खम्ब्रह्म ॥ व्रतमुपैष्यन्नन्तरेणाहवनीयञ्च गार्हपत्यञ्च प्राङ्तिष्ठन्नप ऽउपस्पृशति । तद्यदप ऽउपस्पृशत्यमेध्यो वै पुरुषो यदनृतम्वदति तेन पूतिरन्तरतो मेध्या वा ऽआपो मेध्यो भूत्वा व्रतमुपायानीति पवित्रम् वा ऽआपः पवित्रपूतो व्रतमुपायानीति तस्माद्वा ऽअप ऽउपस्पृशति । १ ॥ सोग्निमेवाभीक्षमाणो व्रतमुपैति ॥ [ ॐ पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते । पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते । ॐ खं ब्रह्म । ॐ खं पुराणम् ॐ वायुरेव खमिति हस्माह कौरव्यायणीपुत्रो वेद यं ब्राह्मणा विदुर्वेदेन न यद्वेदितव्यम् ] ॥ ॐ प्राश्नीपुत्रादासु-

(१) एते मन्त्राः स्वरपूर्वकं पठनीयाः इति केषाञ्चिन्मते । परं च 'हलायुधः'— एवं सति प्राङ्मुखः प्रागग्रेषु कुशेषूपविश्य वामहस्ततले कुशपवित्रे (द्वौदर्भौ) कृत्वा तदुपरि दक्षिणहस्तमधो मुखं कृत्वा ॐकारपूर्विकां गायत्रीं तथा चतुरोवेदादीन् पठेत्।

( २ ) इदं यजुर्वेदोपलक्षणम् ॥

रिवासिनः प्राश्नीपुत्र ऽआसुरायणादासुरायणऽआसुरे-रासुरिर्याज्ञवल्क्याद्याज्ञवल्क्यऽउद्दालकादुद्दालको ऽरुणादरुणऽउपवेशेरुपवेशिः कुश्रेः कुश्रिर्वाजश्रवसो वाजश्रवा जिह्वावतो बाध्योगाज्जिह्वावान् बाध्योगोऽसितािद्वार्षगणादसितो वार्षगणो हरितात् कश्यपाद्धरितः कश्यपः शिल्पात्कश्यपाच्छिल्पः कश्यपः कश्यपान्नैध्रुवेः कश्यपो नैध्रुविर्वाचो वागम्भिण्या ऽअम्भिण्यादित्यादादित्यानीमानि शुक्लानि यजूᳪषि वाजसनेयेन याज्ञवल्क्येनाख्यायन्ते। २ ॥ (इत्युक्तं बृहदारण्योपनिषदि)॥ ॐ अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम् । होतारं रत्नधातमम् । ५ ॥ ॐ अग्नऽआयाहि वीतये गृणानो हव्यदातये । निहोता सत्सि बर्हिषि । २ ॥ ॐ शन्नो देवीरभिष्टय ऽआपो भवन्तु पीतये । शं योरभिस्रवन्तु नः । ६ $\frac{१२}{३६}$ ॥ 'चतुर्वेदानन्तरं अङ्गानि पेठत्'—अथानुवाकान्वक्ष्यामि । मण्डलं दक्षिणमक्षिहृदयम् । अथ शिक्षां प्रवक्ष्यामि । अथातोऽधिकारः फलयुक्तानि कर्माणि । अथातो गृह्यस्थालीपाकानां कर्म । वृद्धिरादैच् । समाम्नायः समाम्नातः । मयरसतजभनलगसंमितम् । पञ्चसंवत्सरमयं युगाध्यक्षम् । गौः ग्माः । अथातो धर्मजिज्ञासा । अथातो ब्रह्मजिज्ञासा ॥ योगीश्वरं याज्ञवल्क्यं । नारायणं नमस्कृत्य इति विद्यातपोयोनिरयोनिर्विष्णुरीडितः । वाग्यज्ञेनार्चितो देवः प्रीयतां मे जनार्दनः । ( एवं ब्रह्मयज्ञं विधाय पाण्योर्गृहीतकुशानां कुशपवित्रस्य च उत्तरस्यां त्यागं कुर्यात् ) 'अर्पणम्'—अनेन ब्रह्मयज्ञाख्येन कर्मणा श्रीभगवान्परमेश्वरः प्रीयतां न मम ॥ ॐ तत्सद्ब्रह्मा-र्पणमस्तु ॥ ...नुसारेण। पितृव्य स्मृत्या० इति ब्रह्मयज्ञप्रयोगः ॥

(१) इदं ... स्येवान्यत ...वेदोपलक्षणम् ॥ ( २ ) इदं सामवेदोपलक्षणम् ॥ ( ३ ) इदं अथर्व-वेदोपलक्षणम् ॥ ... कृत्स्नुतः स्वयं

३५५. केचित्तु ब्रह्मयज्ञं तर्पणं चैकतन्त्रेण कुर्वन्ति तत्र सङ्कल्पाऽर्पणे यथा—आचमनप्रणायामानन्तरं—'सङ्कल्पः'—अद्य पूर्वोच्चारित एवं-गुणविशेषेण विशिष्टायां शुभपुण्यतिथौ ममाऽत्मनः श्रुतिस्मृतिपुराणोक्तफलप्राप्त्यर्थं ब्रह्मयज्ञपूर्वकं देवऋषिमनुष्यपितृतर्पणमहं करिष्ये ॥ 'अर्पणम्'—अनेन ब्रह्मयज्ञपूर्वकं देवर्षिमनुष्यपितृतर्पणाख्येन कर्मणा देवादिस्वरूपी भगवान्परमेश्वरः प्रीयतां न मम। ॐ तत्सद्ब्रह्मार्पणमस्तु ॥

३५६. 'तर्पणम्.' कात्यायनपरिशिष्टे सूत्रे—ततस्तर्पयेद्ब्रह्माणं पूर्वं विष्णुं रुद्रं प्रजापतिं देवांश्छन्दाꣳसि वेदानृषीन्पुराणाचार्यान्गन्धर्वानितराचार्यान्संवत्सरं सावयवं देवीरप्सरसो देवानुगान्नागान्सागरान्पर्वतान्सरितो मनुष्यान्यक्षान् रक्षाꣳसि पिशाचान्सुपर्णान्भूतानि पशून्वनस्पतीनोषधीर्भूतग्रामश्चतुर्विधस्तृप्यतामित्योङ्कारपूर्वं ॥ ततो निवीती मनुष्यान्सनकꣳ सनन्दनꣳ सनातनं कपिलमासुरिं वोढुं पञ्चशिखम् ॥ ततोऽपसव्यं तिलमिश्रं कव्यवाडनलꣳ सोमं यममर्यमणमग्निष्वात्तान्त्सोमपो बर्हिषदो यमाँश्चैके ॥ यमाय धर्मराजाय मृत्यवे चान्तकाय च । वैवस्वताय कालाय सर्वभूतक्षयाय च। औदुम्बराय दध्नाय नीलाय परमेष्ठिने । वृकोदराय चित्राय चित्रगुप्ताय वै नमः ॥ इत्येकैकस्य तिलैर्मिश्रांस्त्रींस्त्रीन्दद्याज्जलाञ्जलीन्। यावज्जीवकृतं पापं तत्क्षणादेव नश्यतीति॥ जीवत्पितृकोप्येतानन्यांश्चेतरऽउदीरतामङ्गिरसऽआयन्तुनऽऊर्ज्जं वहन्ती पितृभ्यो ये चेह मधुवाताऽइति त्र्यृचं जपन्प्रसिञ्चेत्तृप्यध्वमिति त्रिर्नमो वऽइत्युक्त्वा मातामहानां चैवं गुरुशिष्यर्त्विग्ज्ञातिबान्धवा न तर्पिता देहाद्रुधिरं पिबन्ति वासो निष्पीड्याचम्य ॥ अदृश्रमस्य हꣳसऽइत्युपस्थाय प्रदक्षिणीकृत्य दिशश्च देवताश्च नमस्कृत्योपविश्य ब्रह्माग्निपृथिव्योषधीवाग्वाचस्पतिर्विष्णुर्महद्भ्योऽपांपतये वरुणाय नमऽ इति संव्वर्चसेति मुखं विमृष्टे देवा गातुविदऽइति विसर्जयेत् ॥ 'कात्यायनत्रि-कण्डिकासूत्रे हरिहरभाष्ये'—ततः किं कुर्यादित्य[illegible] त्रम्—'ततस्तर्पयेद्ब्रह्माणं पूर्वमित्यादि' । व्याख्या—[illegible] येत् । ब्रह्माणं कथं पूर्वं आदौ केषां विष्णुमित्यादीनां [illegible]

'हलायुधः'—[illegible] दर्भौ) कृत्वा त[illegible] वेदादीन् पठे[illegible]

वतानाम् । अत्र तर्पयेद्ब्रह्माणमिति तर्पणक्रियायाः कर्मभूतान्ब्रह्मादीनुद्देश्यत्वेन द्वितीययाभिधाय भूतग्रामश्चतुर्विधस्तृप्यतामिति प्रथमया प्रयोगमाचार्यो दर्शयति । ततश्च ब्रह्मा तृप्यतामित्येवं तर्पणप्रयोगः । सूत्रम्—'ॐकारपूर्वमिति' । व्याख्या—ॐकारपूर्वं यथा स्यात्तथा ब्रह्मादीन्देवांस्तर्पयेत् । सूत्रम्—'ततो निवीती मनुष्यान्' । व्याख्या—ततो देवतर्पणानन्तरं 'निवीती' कण्ठसंयुक्तब्रह्मसूत्रः सन् मनुष्यान्दिव्यान्मानवांस्तर्पयेदिति पूर्वोक्तेनाख्यातेनानुषङ्गः । के ते मनुष्या इत्यपेक्षायामाह । सनकं चेत्यादिना श्लोकेन सप्त । सूत्रम्—'ततोऽपसव्यं तिलमिश्रम्' । व्याख्या—ततो मनुष्यतर्पणानन्तरमपसव्यं प्राचीनावीती भूत्वा तिलमिश्रं तिलैः संयुक्तं जलं गृहीत्वा तर्पयेदिति सम्बन्धः । कांस्तर्पयेदित्यत आह । कव्यवाडनल इत्यादिना बर्हिषद इत्यन्तेन सूत्रेण पठितान् । तत्र कव्यं हविर्वहतीति कव्यवाट् । अनलोऽग्निः कव्यवाट् चासावनलश्चेति कव्यवाडनलस्तम् । अत्र केचित्कव्यवाहम् अनलं चेति द्वौ देवौ मन्यन्ते । अनलोऽग्नौ नले राज्ञि पितृदेवे कपीश्वर इति विश्वप्रकाशदर्शनात् ॥ तदयुक्तम् 'हव्यवाहनो' वै—देवानां 'कव्यवाहनः'—पितॄणामिति श्रुतेः कव्यवाट् गुणविशिष्टोऽनलः पितृगणान्तर्गत इति कव्यवाडनल एकैव देवता । सूत्रम्—'यमांश्चैके' । व्याख्या—एके आचार्याः यमांश्च तर्पयेदित्याहुः । तद्यथा—यमाय धर्मराजायेत्येवमादिनोक्तम् । पितृतर्पणाञ्जलिसंख्यामाह । सूत्रम्—'एकैकस्य तिलैर्मिश्रांस्त्रींस्त्रीन्दद्याज्जलाञ्जलीन् । यावज्जीवकृतं पापं तत्क्षणादेव नश्यति' । व्याख्या—एकैकस्य प्रत्येकं कव्यवाडनलादेस्तिलैः कृष्णैर्मिश्रान्संयुक्तांस्त्रींस्त्रींस्त्रित्वसंख्योपेतान् जलाञ्जलीञ्जलेन पूर्णा अञ्जलयो जलाञ्जलयस्तान् । अस्य तर्पणस्य नित्यत्वेप्यानुषङ्गिकं फलमाह । यावज्जीवकृतं जन्मत आरभ्य यावत्तर्पणदिनं कृतमाचरितं पापं अशुभं कर्म तत्क्षणादेव तर्पणसमाप्त्यनन्तरमेव नश्यति क्षीयते । सूत्रम्—'जीवत्पितृकोऽप्येतानन्यांश्चेतरः' । व्याख्या—जीवन् विद्यमानः पिता जनको यस्य सोऽपि एतान्पूर्वोक्तान्ब्रह्मादींश्चित्रगुप्तान्तांस्तर्पयेदिति गतेन सम्बन्धः । अत्र जीवत्पितृकोऽप्येतानिति वदता सूत्रकारेणैतच्छब्देन ब्रह्मादिचित्रगुप्तान्ताः परिसंख्यातास्तानेव जीवत्पितृक एतानेव तर्पयेत् न त्वन्यान् । पितृव्यमातृमातामहादीन् । एवार्थेऽपिः अन्यांश्चेतर इति प्रमीतपितृकस्यैवान्यतरविधानात् । यत्तु स्मृत्यन्तरम् । येभ्य एव पिता दद्याचेभ्यो दद्यात्सुतः स्वयमिति तत् पतितसंन्यासिजीवत्पितृकविषयम् । ब्राह्मणा-

दिषु विशेषस्मरणात् । इतरो जीवत्पितृकादन्यः मृतपितृकः अन्यानेते-भ्योऽपरान्पित्रादींस्त्रींस्त्रींश्चकारादेतान्ब्रह्मादींश्चित्रगुप्तान्तांस्तर्पयेदिति सम्ब-न्धः । तर्पणवाक्यानि तत्प्रयोगे लिख्यन्ते । ततो मृतपितृपितामहप्रपिता-महांश्च तर्पयित्वा प्रसेकाख्यं कर्म कथं कुर्यादित्याह । सूत्रम्—'उदीर-तामङ्गिरसऽआयन्तुनऽऊर्ज्जं वहन्ति पितृभ्यो येचेह मधुवाताऽइति तृचं जपन् प्रसिञ्चेत्' । व्याख्या—उदीरतामित्यादि प्रतीकोक्ताः षड्ऋचः मधुवाता इति तृच एवं नवर्चो जपन् उपांशु स्वरेण पठन्प्रसिञ्चेत् । अ-ञ्जलिकृता अपः प्रसिञ्चेत् । पितृतीर्थेन तर्पणजलाधिकरणे प्रक्षिपेत् । तृ-प्यध्वमिति त्रिः । तथा तृप्यध्वमिति प्रतिसेकमुक्त्वा त्रिः प्रसिञ्चेत् । अत्र केचिदुदीरतामित्यादिकानां ऋचां पित्रादितर्पणे जलदानकरणत्वं म-न्यन्ते तदसाम्प्रतम् । सूत्रार्थपर्यालोचनेन करणतयाऽप्रतीतेः कथं जपन्प्रसि-ञ्चेदित्यत्र जपन्निति शतृप्रत्ययेन मन्त्रं जपता सता सततं जलप्रसेकः कार्य इति हि सूत्रात्प्रतीयते । तोयकरणत्वे तु मन्त्रान्तैः कर्मादिः सन्निपात्येति परिभाषया मन्त्रे समाप्ते अञ्जलिर्देयः । तथा सति जपशब्दस्य शतृप्रत्य-यस्य चाऽनर्थक्यप्रसङ्गः । प्रसेकशब्दस्य दानार्थताकल्पना च । तस्मात्प्रसे-काख्यमिदं कर्मान्तरम् । तथा च योगियाज्ञवल्क्यः । 'पितॄन्ध्यायन्प्रसि-ञ्चेद्वै जपमन्त्रान्यथाक्रममिति' ।। तूष्णीं मात्रादीनां प्रसेकनिगमनम् । सूत्रम्-'नमो व इत्युक्त्वा मातामहानां चैवं गुरुशिष्यर्त्विग्ज्ञातिबान्धवान्' ॥ व्याख्या—नमो वः पितरो रसायेत्यादीन्यष्ट यजूंष्युक्त्वा पठित्वा मा-तामहानां मातुः पितृपितामहप्रपितामहानां च । एवमेकैकस्य तिलमिश्रा-ञ्जलित्रयेण तर्पणं कृत्वा । गुर्वाचार्यादयोऽपि एकैकाञ्जलिना तर्प्याः । अत्र गुरुं मन्त्रोपदेष्टारमाचार्यमुपनयनपूर्वकं वेदाध्यापकमित्यर्थः । शिष्यं विद्या-र्थिनं गुरुकुलवासिनं ऋत्विजो याजकान् ज्ञातीन् पितृव्यभ्रात्रादिसपि-ण्डान्सगोत्रान् । मातुलेयपितृष्वस्रेयादींस्तर्पयेदित्यनुवर्तिते मातृसख्यादीन् । सूत्रम्—'अतर्पिता देहाद्रुधिरं पिबन्ति' । व्याख्या—एते पूर्वोक्ता ब्रह्मादयोऽतर्पिताः सन्तो देहात् अतर्पयितुः शरीराद्रुधिरं पिबन्ति । तर्पणस्या-करणप्रत्यवायाद्देहरुधिरशोषो भवतीत्यर्थः । एतदनिष्टापत्तिवचनं तर्पणस्या-वश्यकरणीयत्वज्ञापनार्थम् । सूत्रम्—'वासो निष्पीड्याचम्य' । व्या-ख्या—एवं तर्पणं विधाय तदन्ते स्थले वासो वस्त्रं भूमौ निष्पीड्य पीड-यित्वा पूर्ववदाचामेत् । निष्पीडयति य. पूर्वं स्नानवस्त्रमतर्पिताः । निराशाः पितरो यान्ति शापं दत्त्वा सुदारुणम् । द्वादश्यां पञ्चदश्यां च सङ्क्रान्तौ

श्राद्धवासरे। वस्त्रं निष्पीडयेन्नैव न च क्षारेण योजयेत्॥ (एतच्च तर्पणं प्रातःस्नानानन्तरं प्रातः कार्यम्। मध्याह्ने स्नानं न कृतं चेत्तदाऽपराह्णादिषु स्नानं कृत्वा कुर्यात्। पूर्वाह्णे वै देवानां मध्यन्दिने मनुष्याणामपराह्णः पितॄणामिति श्रुतिस्तर्पणव्यतिरिक्तविषया। प्रातश्चेत्तर्पणं कृतं तर्हि मध्याह्नादिषु न कर्तव्यमेव॥ स्नानाङ्गतर्पणं वैधस्नानानन्तरं कार्यम्)॥

३५७. 'तर्पणे उपवीतधारणप्रकारः' औशनस्मृतौ—उपवीतं वामबाहुं सव्यं बाहुसमन्वितम्। उपवीतं भवेन्नित्यं निवीतं कर्णलम्बनम्॥ सव्यबाहुं समुद्धृत्य दक्षिणेन धृता द्विजाः। 'प्राचीना'वीतमित्युक्तं पित्र्ये कर्मणि धारयेत्॥ उपवीती भवेन्नित्यं विधिरेष सनातनः॥

३५८. 'तर्पणादौ पितॄणामनुक्रमः'. सङ्ग्रहे—तातम्बात्रितयं सपत्नजननी मातामहादित्रयं सस्त्रि स्त्रीतनयादि तातजननीस्वभ्रातरः सस्त्रियः। तातम्बाऽऽत्मभगिन्यपत्यधवयुग्जायापिता सद्गुरुः शिष्याप्ताः पितरो महालयविधौ तीर्थे तथा तर्पणे॥

३५९. 'एकोत्तरशतकुलानि.' स्मृत्यन्तरे—चतुर्विंशति विंशश्च षोडश द्वादशानिह। रुद्रा दशवसुश्चैव कुलमेकोत्तरं शतम्॥

३६०. 'सप्तगोत्राणि'. स्मृत्यन्तरे—पितुर्मातुश्च भार्याया भगिन्या दुहितुस्तथा। पितृष्वसामातृष्वस्रोर्गोत्राणां सप्तकं स्मृतम्॥

३६१. 'तर्पणे उक्तपात्राणि'. पितामहः—हैमं रौप्यमयं पात्रं ताम्रकांस्यसमुद्भवम्। पितॄणां तर्पणे पात्रं मृण्मयं तु परित्यजेत्॥ अङ्गिराः—मार्जनं तर्पणं श्राद्धं न कुर्याद्वारिधारया॥ मरीचिः—सौवर्णेन तु पात्रेण ताम्ररूप्यमयेन वा। औदुम्बरेण खड्गेन पितॄणां दत्तमक्षयम्॥ विना रूप्यसुवर्णेन विना ताम्रमयेन वा। विना तिलैश्च दर्भैश्च पितॄणां नोपतिष्ठते॥ यवाद्भिस्तर्पयेद्देवान्सतिलाद्भिः पितॄंस्तथा॥ हारीतः—वसित्वा वसनं शुष्कं स्थले विस्तीर्णबर्हिषि। विधिज्ञस्तर्पणं कुर्यान्न पात्रेषु कदाचन॥ पात्राद्वा जलमादाय शुभे पात्रान्तरे क्षिपेत्। जलपूर्णेऽथवा गर्ते न स्थले तु विबर्हिषि॥ शङ्खः—उदके नोदकं दद्यात्पितृभ्यश्च कदाचन। उत्तीर्य तु शुचौ देशे कुर्यादुदकतर्पणम्॥

३६२. 'तर्पणे स्थलम्'. योगियाज्ञवल्क्यः—यथाशुचिस्थलं वा स्यादुदके देवताः पितॄन्। तर्पयेच्च यथाकाममप्सु सर्वं प्रतिष्ठितम्॥

३६३. 'तर्पणे तिलग्रहणावश्यकता'. स्नानसूत्रभाष्ये—कठाः काण्वाश्च जाबाला ये च वाजसनेयिनः । निषिद्धेऽपि दिने कुर्युस्तर्पणं तिलमिश्रितम् ॥ कात्यायनः—उपरागे ( ग्रहणे ) पितृश्राद्धे पातेऽमायां च सङ्क्रमे । निषेधेऽपीह सर्वत्र तिलैस्तर्पणमाचरेत् ॥ गर्गः—कृष्णे भाद्रपदे मासि श्राद्धं प्रतिदिनं भवेत् । पितृणां प्रत्यहं कार्यं निषिद्धाहेऽपि तर्पणम् ॥ पृथ्वीचन्द्रोदये—तीर्थे तिथिविशेषे च गङ्गायां प्रेतपक्षके । निषिद्धेऽपि दिने कुर्यात्तर्पणं तिलमिश्रितम् ॥ वायुपुराणे—तिलदर्भैस्तु संयुक्तं श्रद्धया यत्प्रदीयते । तत्सर्वममृतं भूत्वा पितॄणामुपतिष्ठते ॥ याज्ञवल्क्यः—तिलानामप्यभावे तु सुवर्णरजतान्वितम् । तदभावे निषिञ्चेत्तु दर्भैस्तोयैश्चान्यथा ॥ यद्युद्धृतं निषिञ्चेत्तु तिलान्संमिश्रयेज्जले । अतोऽन्यथा तु सव्येन तिला ग्राह्या विचक्षणैः ॥ शुक्लैस्तु तर्पयेद्देवान्मनुष्याञ्छबलैस्तिलैः । पितॄंस्तु तर्पयेत्कृष्णैस्तर्पणे सर्वदा द्विजः ॥

३६४. 'तर्पणे तिलनिषेधः'. मरीचिः—सप्तम्यां भानुवारे च गृहे जन्मदिने तथा । भृत्यपुत्रकलत्रार्थी न कुर्यात्तिलतर्पणम् ॥ सङ्ग्रहे—नन्दायां भार्गवदिने कृत्तिकासु मघासु च । भरण्यां भानुवारे च गजच्छायाह्वये तथा । तर्पणं नैव कुर्वीत तिलमिश्रं कदाचन ॥ बौधायनः—विवाहे चोपनयने चौले सति यथाक्रमम् । वर्षमर्धं तदर्धं च नेत्येके तिलतर्पणम् ॥ वह्निपुराणे—दर्शस्नानं गयाश्राद्धं तिलैस्तर्पणमेव च । न जीवत्पितृको भूप कुर्यात्कृत्वाघमाप्नुयात् ॥

३६५. 'वस्त्रनिष्पीडनम्'. योगियाज्ञवल्क्यः—वस्त्रनिष्पीडितं तोयं स्नातस्योच्छिष्टभागिनः । भागधेयं श्रुतिः प्राह तस्मान्निष्पीडयेत्स्थले ॥ वृद्धयोगी—यावद्देतानृषींश्चैव पितॄंश्चापि न तर्पयेत् । तावन्न पीडयेद्वस्त्रं येन स्नातो भवेन्नरः ॥ स्मृत्यन्तरे—वस्त्रं चतुर्गुणीकृत्य पीडयेज्जलाद्बहिः । वामप्रकोष्ठे निक्षिप्य द्विराचम्य शुचिर्भवेत् ॥

३६६. 'तर्पणप्रकारः'. स्मृत्यन्तरे—सम्बन्धनामगोत्रेण स्वधा च नमो नमः । वस्वादिरूपं सङ्कीर्त्य तर्पयेत्पितृपूर्वकम् ॥ वसिष्ठः—सम्बन्धमनुकीर्त्यैव नामगोत्रमनन्तरम् । वस्वादिरूपं सङ्कीर्त्य स्वधाकारेण तर्पयेत् ॥ बौधायनः—'शर्मान्तं' ब्राह्मणस्योक्तं 'वर्मान्तं' क्षत्रियस्य तु । 'गुप्तान्तं' चैव वैश्यस्य 'दासान्तं' शूद्रजन्मनः ॥ चतुर्णामपि वर्णानां गोत्रत्वे पितृगोत्रता । पितृगोत्रं कुमारीणामूढानां भर्तृगोत्रता ॥ योगि-

ज्ञवल्क्यः—सवर्णेभ्यो जलं देयं नान्यवर्णेभ्य एव च॥ वृद्धयाज्ञवल्क्यः—अन्वारब्धेन सव्येन पाणिना दक्षिणेन तु। सव्योत्तराभ्यां पाणिभ्यामथवा तर्पणं भवेत्॥ तृप्यतामिति वक्तव्यं नाम्ना तु प्रणवादिना। आवाह्य पूर्ववन्मन्त्रैरास्तीर्य च कुशांश्च तान्। सव्यजानुं तथा स्थाप्य पाणिभ्यां दक्षिणामुखः। तल्लिङ्गैस्तर्पयेन्मन्त्रैः सर्वान्पितृगणांस्तथा॥ गोभिलसूत्रे—स्त्रीणां दान्तं नाम ज्ञेयम्॥

३६७. 'तर्पणे अञ्जलिदानविचारः'. व्यासः—एकैकमञ्जलिं देवा द्वौ द्वौ तु सनकादयः। अर्हन्ति पितरस्त्रींस्त्रीन्स्त्रिय एकैकमञ्जलिम्॥ शाङ्ख्यायनः—मातृमुख्यास्तु यास्तिस्रस्तासां त्रींस्त्रीन् जलाञ्जलीन्। सपत्न्याऽचार्यपत्नीनां द्वौ द्वौ दद्याज्जलाञ्जली॥

३६८. 'तर्पणे अधिकारिणः'. शातातपः—तर्पणं तु शुचिः कुर्यात्प्रत्यहं स्नातको द्विजः। देवेभ्यश्च ऋषिभ्यश्च पितृभ्यश्च यथाक्रमम्॥

३६९. 'तर्पणे दर्भविचारः'. अग्निपुराणे—प्रागग्रेषु सुरांस्तृप्येन्मनुष्यांश्चैव मध्यतः। पितॄंश्च दक्षिणाग्रेषु दद्यादिति जलाञ्जलीन्॥ दक्षः—प्रादेशमात्रमुद्धृत्य सलिलं प्राङ्मुखः सुरान्। उदङ् मनुष्यांस्तृप्येत्तु पितॄन्दक्षिणतस्तथा॥ अग्रैस्तु तर्पयेद्देवान्मनुष्यान्कुशमध्यतः॥ पितॄंस्तु कुशमूलाग्रैर्विधिः कौशो यथाक्रमम्॥ एवंच—गोशृङ्गमात्रमुद्धृत्य जलमध्ये जलं क्षिपेत्। (इति यमवचनस्थगोशृङ्गपदं प्रादेशमात्रपरम्)॥ गोभिलः—बह्वृचा देवपित्रर्षींस्तर्पयन्ति द्वितीयया। कात्यायनानां सर्वत्र तर्पणे प्रथमा मता॥ (कात्यायना इति वाजसनेयब्राह्मणाः)॥ 'देवतर्पणविधौ'—ब्रह्माद्यानुपवीती तु देवतीर्थेन तर्पयेत्। निवीती कायतीर्थेन मनुष्यान्सनकादिकान्। स्वाहाकारवषट्कारौ नमस्कारो दिवौकसाम्। स्वधाकारः पितॄणां तु हन्तकारो नृणां मतः॥ स्वधाकारेण निर्वापेत्पित्र्यं बलिमतः सदा॥ बृहत्पाराशरः—देवेभ्यश्च नमः 'स्वाहा' पितृभ्यश्च नमः 'स्वधा'। मन्यन्ते 'कवयः' केचिदित्येव तर्पणक्रमः॥ वाचस्पतौ—निवीती हन्तकारेण मनुष्यांस्तर्पयेदथ। कुशस्य मध्यदेशेन नृतीर्थेन उदङ्मुखः॥ व्यासः—पितृभ्यः प्रथमं दद्यात्ततो मातृभ्य एव च। ततो मातामहानां च तत्पत्नीनां ततो जलम्॥ अन्तर्मातामहान्कृत्वा मातॄणां यः

(१) ॐ हन्तेति वा हन्तकारं मनुष्या इति श्रुतेः। यथा देवानामश्वमेधादियज्ञेषु स्वाहाकारवषट्कारशब्दौ पितॄणां स्वधाशब्दश्च प्रयुज्यते तथा मनुष्याणां हन्तकारशब्दो ज्ञेयः। हन्तशब्दस्यार्थः—हन हिंसागत्योः। ये ये धातवो गत्यर्थास्ते ते प्राप्त्यर्थाः। तेन हन्ततिर्नाम प्राप्तिः॥

प्रयच्छति ॥ मरीचिः—मुक्तहस्तं च दातव्यं न मुद्रां दर्शयेत्क्वचित् । वामहस्ते तिला ग्राह्या मुक्तहस्तं च दक्षिणम् ॥

३७०. 'तर्पणे निषिद्धजलम्'. वायुपुराणे—शूद्रोदकैर्न कुर्वीत तथा मेघाद्विनिःसृतैः । तिलदर्भैस्तु संयुक्तं श्रद्धया यत्प्रदीयते ॥ तत्सर्वममृतं भूत्वा पितॄणामुपतिष्ठते । ब्रह्माण्डपुराणे—नित्यं नैमित्तिकं काम्यं त्रिविधं स्नानमिष्यते । तर्पणं तु भवेत्तस्य अङ्गत्वेन व्यवस्थितम् ॥

३७१. 'अथ तर्पणप्रयोगः'.—( आचम्य[1] प्राणानायम्य ) ॥ 'कुश[2]पवित्रधारणम्'—ॐ पुवित्रेस्त्थो व्वैष्णव्व्यौ सवितुर्व्वः प्रसुवऽउत्पुनाम्म्यच्छिद्द्रेण पुवित्रेण सूर्य्यस्य रुश्म्मिभिः । $\frac{१२}{१}$ ॥ * * तस्य ते पवित्रपते पुवित्रपूतस्य यत्कामः पुनेत च्छकेयम् । १ $\frac{४}{४}$ ॥ 'सङ्कल्पः'.—(तिथिर्विष्णुस्तथा वारो नक्षत्रं विष्णुरेव च । योगश्च करणं चैव सर्वं विष्णुमयं जगत् ॥ ॐ विष्णवे नमः—अद्यपूर्वोच्चारितएवंगुणविशेषेणविशिष्टायां शुभपुण्यतिथौ ममाऽत्मनः श्रुतिस्मृतिपुराणोक्तफलप्राप्त्यर्थं ॐ तत्सत्परमेश्वरप्रीत्यर्थं देवऋषिमनुष्यपितृतर्पणमहं करिष्ये ॥ 'ताम्रपात्रे रौप्यपात्रे वा तर्पणार्थे उद[3]कपूरणम्'—ॐ विश्वान्देवान् भवन्तु आवाहयिष्ये ॐ आवाहय ॥ ॐ व्विश्श्वेदेवा सुऽआगत शृणुतामऽइमᳯहवम् । एदम्बुर्हिर्न्निषीदत । * । २ $\frac{३४}{७}$ ॥ व्विश्श्वेदेवाँऽ । शृणुतेमᳯहवम्मे येऽअन्तरिक्षे यऽउपद्द्यविष्ठ । येऽअग्निजिह्वाऽउत व्वा यजत्राऽआसद्द्यास्स्मिन्बुर्हिषिमादयद्ध्वम् । ३ $\frac{५३}{३३}$ ॥ 'ततो देवानामावाहनम्'—आगच्छ-

(१)—'आचमनप्राणायामादीन्' देवपूजाप्रयोगे दर्शितक्रमेण, कुर्यात् ॥ (२)—'कुशपवित्रं' दक्षिणहस्तस्यानामिकायां मन्त्रेण धारयेत् ॥ (३)—एतत्पात्रे प्रथमश्वेतगन्धयवान् (तदभावे तण्डुलान्) सुगन्धपुष्पाणि तुलसीदलसहितानि निदध्यात् । तदनन्तरं तत्पात्रोपरि हस्तप्रमाणान् प्रादेशमात्रप्रमाणान् वा त्रीन् कुशान् प्राग्ग्रान् स्थापयित्वा पश्चान्मन्त्रेण तत्पात्रं 'जलेन पूरयेत्' ॥ (४)—केषाञ्चिन्मते 'भवन्तु' शब्दप्रयोगः श्राद्धकर्मणि कुर्यात् न तु तर्पणे ॥ (५)—पूर्वपात्रोपरि स्थापितत्रीन्कुशान् तुलसीदलसंयुक्तान् दक्षिणकरसम्पुटे धृत्वा तदनन्तरं तस्योपरि वामहस्तमधोमुखं कृत्वा पश्चा 'द्देवानावाहयेत्' ॥

तु महाभागा विश्वेदेवा महाबलाः । ये तर्पणेऽत्र विहिताः सावधाना भवन्तु ते । ३ ॥ ॐ भवामः ॥ 'देवतर्पणम्'—ॐ ब्रह्मा तृप्यताम् । ॐ विष्णुस्तृप्यताम् । ॐ रुद्रस्तृप्यताम् । ॐ प्रजापतिस्तृप्यताम् । ॐ देवास्तृप्यन्ताम् । ॐ छन्दांऽसि तृप्यन्ताम् । ॐ वेदास्तृप्यन्ताम् । ॐ ऋषयस्तृप्यन्ताम् । ॐ पुराणाचार्यास्तृप्यन्ताम् । ॐ गन्धर्वास्तृप्यन्ताम् । ॐ इतराचार्यास्तृप्यन्ताम् । ॐ संवत्सरः सावयवस्तृप्यताम् । ॐ देव्यस्तृप्यन्ताम् । ॐ अप्सरसस्तृप्यन्ताम् । ॐ देवानुगास्तृप्यन्ताम् । ॐ नागास्तृप्यन्ताम् । ॐ सागरास्तृप्यन्ताम् । ॐ पर्वतास्तृप्यन्ताम् । ॐ सरितस्तृप्यन्ताम् । ॐ मनुष्यास्तृप्यन्ताम् । ॐ यक्षास्तृप्यन्ताम् । ॐ रक्षांऽसि तृप्यन्ताम् । ॐ पिशाचास्तृप्यन्ताम् । ॐ सुपर्णास्तृप्यन्ताम् । ॐ भूतानि तृप्यन्ताम् । ॐ पशवस्तृप्यन्ताम् । ॐ वनस्पतयस्तृप्यन्ताम् । ॐ ओषधयस्तृप्यन्ताम् । ॐ भूतग्रामश्चतुर्विधस्तृप्यताम् । 'मनुष्यदेवतर्पणम्'—ॐ सनकस्तृप्यतु । ॐ सन० ॥ ॐ सनन्दनस्तृप्यतु ॥ ॐ सनन्दन० ॥ ॐ सनातनस्तृप्यतु । ॐ सना० ॥ ॐ कपिलस्तृप्यतु । ॐ कपिल० ॥ ॐ आसुरिस्तृप्यतु । ॐ आसु० ॥ ॐ वोढुस्तृप्यतु । ॐ वोढु० ॥ ॐ पञ्चशिखस्तृप्यतु । ॐ पञ्च० ॥ 'पितृतर्पणम्—ॐ कव्यवाडनलस्तृप्यताम् । ॐ कव्यवा० । कव्यवा० ॥ ॐ सोमस्तृप्यताम् । ॐ सोम० । ॐ सोम० ॥

---

(१) केषाञ्चिमन्ते 'भवामः' इति शब्दप्रयोगः श्राद्धकर्मणि कुर्यात् न तु तर्पणे ॥ (२) ब्राह्मणसर्वस्वे हलायुधः—दीव्यते क्रीडते यस्मादुच्यते शोभते दिवि । तस्माद्देव इति प्रोक्तस्तर्पयेत्सर्वदेवताः ॥ एवं पूर्वपात्रे मन्त्रितजलस्य तैः ( कुशैः ) प्रागग्रैः पूर्वाभिमुखो दक्षिणहस्तस्य सर्वाङ्गुल्यग्रैर्देवतीर्थेनान्यपात्रे 'एकैकाञ्जलिं' क्षिपेत् ॥ (३) ॐ तीर्थानि तृप्यन्ताम् । ॐ तीर्थदेवास्तृप्यन्ताम् । ॐ विश्वेदेवास्तृप्यन्ताम् । ॐ मोदास्तृप्यन्ताम् । ॐ प्रमोदास्तृप्यन्ताम् । ॐ सुमुखास्तृप्यन्ताम् । ॐ दुर्मुखास्तृप्यन्ताम् । ॐ अविघ्नास्तृप्यन्ताम् । ॐ विघ्नकर्तारस्तृप्यन्ताम् ॥ एवं पाठः देवतर्पणे क्वचिद्दृश्यते न तु सूत्रे ॥ (४) ततो 'निवीतं' कृत्वा पूर्वोक्तकुशानुदगग्रान्दक्षिणहस्तस्य कनिष्ठिकामूलप्रदेशे धृत्वा पश्चादुत्तराभिमुखं मनुष्यदेवेभ्यो द्वौ द्वावञ्जली कायतीर्थेन देयौ ॥ (५) पूर्वोक्तकुशान्द्विगुणान्दक्षिणाग्रमूलान्द्विगुणीकृत्याङ्गुष्ठतर्जनीमध्यप्रदेशे ( दक्षिणहस्तस्य ) धृत्वा दक्षिणाभिमुखं पूर्वमन्त्रितपात्रजले अपसव्येन कृष्णतिलमिश्रणं तेन जलेनापसव्येन पितृतीर्थेन पितॄंस्त्रींस्त्रीनञ्जलीन् दद्यात् ॥

ॐ यमस्तृप्यताम् । ॐ यम० । ॐ यम० ॥ ॐ अर्यमा तृप्यताम् । ॐ अर्य० । ॐ अर्य० ॥ ॐ अग्निष्वात्ताः पितरस्तृप्यन्ताम् । ॐ अग्निष्वा० । ॐ अग्निष्वा० ॥ ॐ सोमपाः पितरस्तृप्यन्ताम् । ॐ सोमपाः पि० । ॐ सोमपाः पि० ॥ ॐ बर्हिषदः पितरस्तृप्यन्ताम् । ॐ बर्हिषदः पि० । ॐ बर्हिषदः पि० ॥ 'यमतर्पणम्'—ॐ यमाय नमः । ॐ यमा० । ॐ यमा० ॥ ॐ धर्मराजाय नमः । ॐ धर्मरा० । ॐ धर्मरा० ॥ मृत्यवे नमः । ॐ मृत्यवे० । ॐ मृत्यवे० ॥ ॐ अन्तकाय नमः । ॐ अन्त० । ॐ अन्त० ॥ ॐ वैवस्वताय नमः । ॐ वैव० । ॐ वैव० ॥ ॐ कालाय नमः । ॐ काला० । ॐ काला० ॥ ॐ सर्वभूतक्षयाय नमः । ॐ सर्वभू० । ॐ सर्वभू० ॥ ॐ औदुम्बराय नमः । ॐ औदु० । ॐ औदु० ॥ ॐ दध्नाय नमः । ॐ दध्नाय० । ॐ दध्नाय० ॥ ॐ नीलाय नमः । ॐ नीला० । ॐ नीला० ॥ ॐ परमेष्ठिने नमः । ॐ परमे० । ॐ परमे० ॥ ॐ वृकोदराय नमः । ॐ वृको० । ॐ वृको० ॥ ॐ चित्राय नमः । ॐ चित्रा० । ॐ चित्रा० ॥ ॐ चित्रगुप्ताय नमः । ॐ चित्रगु० । ॐ चित्रगु० ॥ 'मनुष्यपितृतर्पणम्'—ॐ 'उशन्तस्त्वेत्यावाहनम्'—ॐ उशन्तस्त्वा । निधीमह्युशन्तꣳ समिधीमहि । उशन्नु शत ऽआवह पितॄन्हविषे ऽअत्तवे ॥ ४ $\frac{७०}{१९}$ ॥ 'समस्तपितॄनावाहयिष्ये'—ॐ आवाहय—अमुकगोत्रः अस्मत्पिता अमुकशर्मा वसुरूपस्तृप्यतामिदं जलं तस्मै स्वधा नमः । इ० । इ० । अमुकगोत्रः अस्मत्पितामहः अमुकशर्मा रुद्ररूपस्तृप्यतामिदं जलं तस्मै स्वधा नमः । इ० । इ० ॥ अमुकगोत्रः अस्मत्प्रपितामहः अमुकशर्मा आदित्यरूपस्तृप्यतामिदं जलं तस्मै स्वधा नमः । इ० । इ० ॥ अमुकगोत्रा अस्मन्माता अमुकदा वसुरूपा तृप्यतामिदं जलं तस्यै स्वधा नमः । इ० । इ० ॥ अमुकगोत्रा अस्मत् पितामही अमुकदा रुद्ररूपा तृप्यतामिदं जलं तस्यै स्वधा नमः । इ० । इ० ॥

(१) यमांश्चैके त्रींस्त्रीनञ्जलीन्दद्यादित्याहुः ॥ (२) स्वस्वपितॄणां गोत्रनामोच्चारं कृत्वा पितृतीर्थेन प्रत्येकं त्रींस्त्रीनञ्जलीन्दद्यात् ॥ (३) तर्पणे तु 'प्रथमाविभक्त्यन्त पदं' योजयेत् ॥

अमुकगोत्रा अस्मत् प्रपितामही अमुकदा आदित्यरूपा तृप्यतामिदं जलं तस्यै स्वधा नमः। इ० । इ० ॥ अमुकगोत्रा अस्मत् सापत्नमाता अमुकदा वसुरूपा तृप्यतामिदं जलं तस्यै स्वधा नमः । इ० । इ० ॥ पश्चादेतान्मन्त्रान्पठेत्—ॐ उदीरतामवरऽउत्परासऽउन्मध्यमाः पितरः सोम्यासः । असुं यऽईयुरवृकाऽऋतज्ञास्तेनोवन्तु पितरो हवेषु । ५ ४२/१९ ॥ अङ्गिरसो नः । पितरो नवग्वाऽअथर्वाणो भृगवः सोम्यासः । तेषां वयꣳ सुमतौ यज्ञियानामपि भद्रे सौमनसे स्याम । ६ ५०/१९ ॥ आयन्तु । नः पितरः सोम्यासोऽग्निष्वात्ताः पथिभिर्देवयानैः । अस्मिन्यज्ञे स्वधया मदन्तोऽधि ब्रुवन्तु तेवन्त्वस्मान् । ७ ५८/१९ ॥ ऊर्जं वहन्तीरमृतं घृतं पयः कीलालं परिस्रुतम् । स्वधास्थ तर्पयत मे पितॄन् । ८ ३४/२ ॥ पितृभ्यः स्वधायिभ्यः । स्वधा नमः पितामहेभ्यः स्वधायिभ्यः स्वधा नमः प्रपितामहेभ्यः स्वधायिभ्यः स्वधा नमः । अक्षन्पितरोमीमदन्त पितरोतीतृपन्त पितरः पितरः शुन्धध्वम् । ९ ३६/१९ ॥ ये चेह पितरो ये च नेह याँश्च विद्म याँ२ ॥ उच न प्रविद्म । त्वं वेत्थ यति ते जातवेदः स्वधाभिर्यज्ञꣳ सुकृतं जुषस्व । १० ६७/१९ ॥ मधुवाताऽऋतायते मधु क्षरन्ति सिन्धवः । माध्वीर्नः सन्त्वोषधीः । ११ २७/१३ ॥ मधुनक्तमुतोषसो मधुमत्पार्थिवꣳ रजः । मधु द्यौरस्तु नः पिता । १२ २८/१३ ॥ मधुमान्नो वनस्पतिर्मधुमाँ२ ॥ ऽअस्तु सूर्यः । माध्वीर्गावो भवन्तु नः । १३ २९/१३ ॥ ॐ मधु । मधु । मधु । तृप्यध्वम् । तृप्यध्वम् । तृप्यध्वम् ॥ ॐ नमो वः पितरो रसाय

नमो॑ वः पितरः॒ शोषा॑य॒ नमो॑ वः पितरो जी॒वाय॒ नमो॑ वः पितरः॒ स्व॒धायै॒ नमो॑ वः पितरो घो॒राय॒ नमो॑ वः पितरो म॒न्यवे॒ नमो॑ वः पितरः॒ पित॑रो॒ नमो॑ वो गृ॒हान्नः॑ पितरो दत्त स॒तो वः॑ पितरो दे॒ष्मै॒ तद्वः॑ पितरो॒ वास॒ आध॑त्त। १४ $\frac{३२}{२}$ ॥ आध॑त्त पितरो॒ गर्भं॑ कु॒मारं॒ पुष्क॑रस्रजम्। यथे॒ह पुरु॒षो ऽस॑त्। १५ $\frac{३३}{२}$ ॥ 'द्वितीयगोत्रम्'—अमुकगोत्रः अस्मन्मातामहः अमुकशर्मा वसुरूपस्तृप्यतामिदं जलं तस्मै स्वधा नमः। इ०। इ०॥ अमुकगोत्रः अस्मत् प्रमातामहः अमुकशर्मा रुद्ररूपस्तृप्यतामि०। इ०। इ०॥ अमुकगोत्रः अस्मत् वृद्धप्रमातामहः अमुकशर्मा आदित्यरूपस्तृप्यतामि०। इ०। इ०॥ अमुकगोत्रा अस्मन्मातामही अमुकदा वसुरूपा तृप्यतामिदं जलं तस्यै स्वधा नमः। इ०। इ०॥ अमुकगोत्रा अस्मत् प्रमातामही अमुकदा रुद्ररूपा तृप्यतामि०। इ०। इ०॥ अमुकगोत्रा अस्मत् वृद्धप्रमातामही अमुकदा आदित्यरूपा तृप्यतामि०। इ०। इ०॥ 'पत्न्यादिगोत्रम्'—अमुकगोत्रा अस्मत्पत्नी अमुकदा वसुरूपा तृप्यतामिदं जलं तस्यै स्वधा नमः। इ०। इ०॥ अमुकगोत्रः अस्मत्सुतः अमुकशर्मा वसुरूपस्तृप्यतामिदं जलं तस्मै स्वधा नमः। इ०। इ०॥ अमुकगोत्रा अस्मत्कन्या अमुकदा वसुरूपा तृप्यतामिदं जलं तस्यै स्वधा नमः। इ०। इ०॥ अमुकगोत्रः अस्मत्पितृव्यः अमुकशर्मा वसुरूपस्तृप्यतामिदं जलं तस्मै स्वधा नमः। इ०। इ०॥ अमुकगोत्रः अस्मन्मातुलः अमुकशर्मा वसुरूपस्तृप्यतामि०। इ० इ०॥ अमुकगोत्रः अस्मद्भ्राता अमुकशर्मा वसुरूपस्तृप्यतामि०। इ०। इ०॥ अमुकगोत्रः अस्मत्सापत्नभ्राता अमुकशर्मा वसुरूपस्तृप्यतामिदं जलं तस्मै स्वधा नमः। इदं

---

(१) पत्न्याद्यासान्तपितृगणस्य अस्मत्पत्नी अस्मत्सुतः अस्मत्पितृव्य इत्यादिसम्बन्धं गोत्रं नामोच्चार्य वसुरूपं त्रींस्त्रीनञ्जलीन्दत्त्वा तर्पणं कुर्यात्॥ (२) यदि तस्य भार्या सुतो वा मृतस्तर्हि सपत्नीकः ससुत इत्यूहः कार्यः। एवं पितृव्यादौ ज्ञेयम्। सुतादीनां वहुत्वे ज्येष्ठाद्यनुक्रमो ग्राह्यः॥ (३) यदि तस्या भर्ता सुतो वा मृतस्तर्हि सभर्तृका ससुता इत्यूहः कार्यः। एवं पितृभगिन्यादौ॥ (४) एवं द्वितीयतृतीयादयो ग्राह्याः। (५) एवं सापत्नभ्राता सापत्नभगिनी च ग्राह्या॥

ज०। इदं ज० ॥ अमुकगोत्रा अस्मत्पितृभगिनी अमुकदा वसुरूपा तृप्यतामि०। इ०। इ० ॥ अमुकगोत्रा अस्मन्मातृभगिनी अमुकदा वसुरूपा तृप्यतामि०। इ०। इ० ॥ अमुकगोत्रा अस्मदात्मभगिनी। अमुकदा वसुरूपा तृप्यतामि०। इ०। इ० ॥ अमुकगोत्रा अस्मत्सापत्नभगिनी अमुकदा वसुरूपा तृप्यतामिदं जलं तस्यै स्वधा नमः। इदं ज०। इदं ज० ॥ अमुकगोत्रः अस्मच्छ्वशुरः। अमुकशर्मा वसुरूपस्तृप्यतामि०। इ०। इ० ॥ अमुकगोत्रः अस्मद्गुरुः। अमुकशर्मा वसुरूपस्तृप्यतामि०। इ०। इ० ॥ अमुकगोत्रः अस्मच्छिष्यः। अमुकशर्मा वसुरूपस्तृप्यतामि०। इ०। इ० ॥ अमुकगोत्रः अस्मन्मित्रः अमुकशर्मा वसुरूपस्तृप्यतामि०। इ०। इ० ॥ अमुकगोत्रः। अस्मदाप्तः। अमुकशर्मा वसुरूपस्तृप्यतामि०। इ०। इ० ॥ 'वस्त्रनिष्पीडनम्'[1]—ॐ आब्रह्मस्तम्बपर्यन्तं देवर्षिपितृमानवाः। तृप्यन्तु पितरः सर्वे मातृमातामहादयः ॥ अतीतकुलकोटीनां सप्तद्वीपनिवासिनाम्। आब्रह्मभुवनाल्लोकादिदमस्तु तिलोदकम् ॥ येऽबान्धवा बान्धवा ये येऽन्यजन्मनि बान्धवाः। ते सर्वे तृप्तिमायान्तु मया दत्तेन वारिणा। ये के चास्मत्कुले जाता अपुत्रा गोत्रिणो मृताः। ते गृह्णन्तु मया दत्तं वस्त्रनिष्पीडनोदकम् ॥ सव्येन शुद्धोदकेनाचम्य प्राणायामं कुर्यात् ॥ 'ततोऽर्घ्यः'[2]—ॐ ब्रह्मजज्ञानम्प्रथमम्पुरस्ताद्विसीमतः सुरुचो वेनऽआवः। सबुध्न्याऽउपमाऽअस्य विष्ठाः सतश्च योनिमसतश्च विवः। १६ $\frac{३}{१३}$। ॐ ब्रह्मणे[3] नमः ॥ ॐ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्। समूढमस्य पांसुरे स्वाहा।

'षड्दलम्'




---

(१) वस्त्रं चतुर्धा कृत्वा भूमौ वामभागे निष्पीडयेत्। तर्पितजले पवित्रं विसृजेत्। यदि गृहे मृततिथौ सांवत्सरिकश्राद्धादि कर्म स्यात्तर्हि 'वस्त्रनिष्पीडनं' न कुर्यादिति ॥
(२) पात्रे सव्येन शुद्धोदकं पूरयित्वा तन्मध्येऽनामिकया 'षड्दलं' कृत्वा तत्पात्रे श्वेतगन्धाक्षतपुष्पाणि तुलसीदलानि च प्रक्षिप्य पश्चाद्देवेभ्योऽर्घ्यं तर्पितजलपात्रे दद्यात् ॥
(३)—'ब्रह्माणं पूजयामि' ॥

१७ $\frac{१५}{५}$ । ॐ विष्णवे नमः ॥ ॐ नमस्ते रुद्रमन्यवऽउ-
तोतऽइषवे नमः । बाहुभ्यामुत ते नमः । १८ $\frac{१}{१६}$ ।
ॐ रुद्राय नमः ॥ ॐ तत्सवितु० । १९ $\frac{३५}{३}$ ॐ सवित्रे
नमः ॥ ॐ मित्रस्य चर्षणी धृतो वो देवस्य सानसि ।
द्युम्नञ्चित्रश्रवस्तमम् । २० $\frac{६२}{११}$ । ॐ मित्राय नमः ॥
ॐ इमम्मे वरुणश्रुधी हवमद्या च मृडय । त्वाम-
वस्युराचके । २१ $\frac{१}{२१}$ । ॐ वरुणाय नमः ॥ 'सूर्योप-
स्थानम्'—ॐ अदृश्रमस्य केतवो विरश्मयो जनाँ॥
ऽअनु । भ्राजन्तोऽअग्नयो यथा । उपयाम गृहीतोसि
सूर्य्याय त्वा भ्राजायैष ते योनिः सूर्य्याय त्वा भ्राजाय ।
सूर्य्य भ्राजिष्ठ भ्राजिष्ठस्त्वन्देवेष्वसि भ्राजिष्ठोहम्मनु-
ष्येषु भूयासम् । २२ $\frac{४०}{८}$ ॥ हꣳसः शुचिषद्वसुरन्तरि-
क्षसद्धोता वेदिषदतिथिर्दुरोणसत् । नृषद्वरसदृतसद्व्योम
सदब्जा गोजाऽऋतजाऽअद्रिजाऽऋतम्बृहत् । २३ $\frac{२४}{१०}$॥
'दिग्देवतानां नमस्काराः'—प्राच्यै—ॐ इन्द्राय नमः ॥ आग्नेय्यै—
ॐ अग्नये नमः ॥ दक्षिणायै—ॐ यमाय नमः ॥ नैर्ऋत्यै—ॐ
निर्ऋतये नमः ॥ पश्चिमायै—ॐ वरुणाय नमः ॥ वायव्यै—ॐ
वायवे नमः ॥ उदीच्यै—ॐ सोमाय नमः ॥ ईशान्यै—ॐ ईशा-
नाय नमः ॥ ऊर्ध्वायै—ॐ ब्रह्मणे नमः ॥ अधस्तात्—ॐ विष्णवे
नमः ॥ आवाच्यै—ॐ अनन्ताय नमः ॥ ( जलमध्ये ) ॐ ब्रह्मणे
नमः ॐ अग्नये नमः । ॐ पृथिव्यै नमः । ॐ ओषधिभ्यो नमः ।
ॐ वाचे नमः । ॐ वाचस्पतये नमः । ॐ महद्भ्यो नमः । ॐ विष्णवे

---

(१)—'विष्णुं पूजयामि' ॥ इत्यादि केषुचित्पुस्तकेषु पाठो दृश्यते ।
(२)—'रुद्रं पूजयामि' ॥ (३)—'सवितारं पूजयामि' ॥ (४)—'मित्रं
पूजयामि' ॥ (५)—'वरुणं पूजयामि' ॥ इत्यादि केषुचित् पुस्तकेषु पाठो दृश्यते ।

नमः । ॐ अद्भ्यो नमः । ॐ अपाम्पतये नमः । ॐ वरुणाय नमः ॥ 'मुखविमार्जनम्'[1]— ॐ संव्वर्च्चसा पयसा सन्तनूभिरगन्महि मनसा स᳖ शिवेन ॥ त्वष्टा सुदत्रो व्विदधातु रायोनुमार्ष्टु तन्न्वो यद्विलिष्टम् । २४ १४/८ ॥ 'विसर्जनम्'— ॐ देवा गातुविदो गातुं व्वित्त्वा गातुमित । मनसस्पत इमन्देवयज्ञᳬ स्वाहा व्वाते धाः । २५ २१/८ ॥ 'अर्पणम्'- अनेन यथाशक्ति देवऋषिमनुष्यपितृतर्पणाख्येन कर्मणा भगवान् मम समस्तपितरस्वरूपी जनार्दनवासुदेवः प्रीयतां न मम । ॐ तत्सद्ब्रह्मार्पणमस्तु । श्रीगयागदाधरस्तृप्यतु । ॐ विष्णवे नमः । इति त्रिः ॥ इति तर्पणप्रयोगः ॥

इति श्रीपुरन्दरोपाह्वविठ्ठलात्मजनारायणेन विरचितायां वाजसनेयाह्निकसूत्रावल्यां चतुर्थभागकृत्यानि समाप्तानि ॥



(१)—शुद्धोदकेन 'संवर्चसेति' मन्त्रेण मुखं विमृजेत् ॥

## ॥ अथ पञ्चमभागकृत्यानि ॥

३७२. 'कारिका.' दक्षः—पञ्चमे च तथा भागे संविभागो यथार्हतः । पितृदेवमनुष्याणां कीटानां चोपदिश्यते ॥ देवैश्चैव मनुष्यैश्च तिर्यग्भिश्चोपजीव्यते । गृहस्थः प्रत्यहं यस्मात्तस्माज्ज्येष्ठाश्रमी गृही । संविभागं ततः कृत्वा गृहस्थः शेषभुग्भवेत् ॥

३७३. अथ 'श्राद्धसूत्रम्'. कात्यायनपरिशिष्टसूत्रे—अपरपक्षे श्राद्धं कुर्वीतोर्द्ध्वं वा चतुर्थ्या यदहः सम्पद्येत तदहर्ब्राह्मणानामन्त्र्य पूर्वेद्युर्वा स्नातकानेके यतीन्गृहस्थान् साधून् वा श्रोत्रियान्वृद्धाननवद्यान्स्वकर्मस्थानभावेऽपि शिष्यान् स्वाचारान्द्विर्नग्नशुक्लविक्लिधश्यावदन्तविद्धप्रजननव्याधितव्यङ्गिश्वित्रिकुष्ठिकुनखिवर्ज्यमनिन्द्येनामन्त्रितो नापक्रामेदामन्त्रितो वान्यदन्नं न प्रतिगृह्णीयात्स्नाताञ्छुचीनाचान्तान्प्राङ्मुखानुपवेश्य दैवे युग्मानयुग्मान्यथाशक्ति पित्र्य एकैकस्योदङ्मुखान्द्वौ वा दैवे त्रीन् पित्र्यऽएकैकमुभयत्र वा मातामहानामप्येवं तत्र वा वैश्वदेविकं श्रद्धान्वितः श्राद्धं कुर्वीत ॥ 'शाकेनापि'—नापरपक्षमतिक्रामेन्मासि मासि वोशनमिति श्रुतेस्तदहः शुचिरक्रोधनोऽत्वरितोऽप्रमत्तः सत्यवादी स्यादध्वमैथुनश्रमस्वाध्यायान्वर्जयेदावाहनादि वाग्यतः औपस्पर्शनादामन्त्रिताश्चैवम् । १ ॥ 'दैवपूर्वं श्राद्धम्'—पिण्डपितृयज्ञवदुपचारः पित्र्ये द्विगुणास्तु दर्भाः पवित्रपाणिर्दद्यादासीनः सर्वत्र प्रश्नेषु पङ्क्तिमूर्द्धन्यं पृच्छति सर्वान्वासनेषु दर्भानास्तीर्य्य विश्वान्देवानावाहयिष्यऽइति पृच्छत्यावाहयेत्यनुज्ञातो विश्वेदेवासऽआगतेत्यनयावाह्यावकीर्य्य विश्वेदेवाः शृणुतेममिति जपित्वा पितृनावाहयिष्यऽइति पृच्छत्यावाहयेत्यनुज्ञात ऽउशन्तस्त्वेत्यनयावाह्यावकीर्य्यायन्तुनऽइति जपित्वा यज्ञियवृक्षचमसेषु पवित्रान्तर्हितेष्वेकैकस्मिन्नपऽ आसिञ्चति शन्नोदेवीरित्येकैकस्मिन्नेव तिलानावपति तिलोसि सोमदैवत्यो गोसवे देवनिर्मितः । प्रत्नमद्भिः पृक्तः स्वधया

(१) वाचस्पतौ—श्रद्धया दीयते यस्मात् श्राद्धं तेन निगद्यते ॥

पितॄँल्लोकान्प्रीणाहिनः स्वाहेति सौवर्णरजतौदुम्बरखड्गमणिमयानां पात्राणामन्यतमे यानि वा विद्यन्ते पत्रपुटेष्वेकैकस्यैकैकेन ददाति सपवित्रेषु हस्तेषु या दिव्याऽआपः पयसा सम्बभूवुर्याऽआन्तरिक्षाऽउत पार्थिवीर्याः ॥ हिरण्यवर्णा यज्ञियास्ता नऽआपः शिवाः शिवतमाः शꣲस्योनाः सुहवा भवन्त्वित्यसावेष तेऽर्घऽइति प्रथमे पात्रे सꣲस्रवान्समवनीय पितृभ्यः स्थानमसीति न्युब्जं पात्रं निदधात्यत्र गन्धपुष्पधूपदीपवाससां च प्रदानम् । २ ॥ 'उद्धृत्य घृताक्तमन्नं पृच्छति'—अग्नौ करिष्यऽइति कुरुष्वेत्यनुज्ञातः पिण्डपितृयज्ञवद्धुत्वा हुतशेषं दत्वा पात्रमालभ्य जपति पृथिवी ते पात्रं द्यौरपिधानं ब्राह्मणस्य मुखे ऽअमृतेऽअमृतं जुहोमि स्वाहेति वैष्णव्यर्चा यजुरेषावाङ्गुष्ठमन्नेऽवगाह्यापहताऽइति तिलान्प्रकीर्योष्णꣲस्विष्टमन्नं दद्याच्छक्त्या वाश्नत्सु जपेत् व्याहृतिपूर्वां गायत्रीꣲसप्रणवाꣲ सकृत्त्रिर्वा राक्षोघ्नीः पित्र्यमन्त्रान्पुरुषसूक्तमप्रतिरथमन्यानि च पवित्राणि तृप्तान् ज्ञात्वान्नं प्रकीर्य सकृत्सकृदपो दत्वा पूर्ववद्गायत्रीं जपित्वा मधुमतीर्मधुमध्विति च तृप्ताः स्थेति पृच्छति तृप्ताःस्म ऽइत्यनुज्ञातः शेषमन्नमनुज्ञाप्य सर्वमन्नमेकतोद्धृत्योच्छिष्टसमीपे दर्भेषु त्रींस्त्रीन्पिण्डानवनेज्य दद्यादाचान्तेष्वित्येकऽआचान्तेषुऽउदकं पुष्पाण्यक्षतानक्षय्योदकं च दद्यादघोराः पितरः सन्तु सन्त्वित्युक्ते गोत्रं नो वर्द्धतां वर्द्धतामित्युक्ते दातारो नोऽभिवर्द्धन्तां वेदाः सन्ततिरेव च ॥ श्रद्धा च नो माव्यगमद्बहुदेयं च नोस्त्वित्याशिषः प्रतिगृह्य स्वधावाचनीयान्सपवित्रान्कुशानास्तीर्य स्वधां वाचयिष्य ऽइति पृच्छति वाच्यतामित्यनुज्ञातः पितृभ्यः पितामहेभ्यः प्रपितामहेभ्यो मातामहेभ्यः प्रमातामहेभ्यो वृद्धप्रमातामहेभ्यश्च स्वधोच्यतामित्यस्तु स्वधेत्युच्यमाने स्वधावाचनीयेष्वपो निषिञ्चत्युर्ज्जमित्युत्तानं पात्रं कृत्वा यथाशक्ति दक्षिणां दद्याद्ब्राह्मणेभ्यो विश्वेदेवाः प्रीयन्तामिति दैवे वाचयित्वा वाजेवाजेवतेति विसृज्यामावाजस्येत्यनुव्रज्य प्रदक्षिणीकृत्य नमस्कृत्योपवेशयेत् । ३ ॥ 'अथैकोद्दिष्टम्'—एकोर्घऽएकं पवित्रमेकः पिण्डो नावाहनं नाग्नौकरणं नात्र विश्वेदेवाः स्वदितमिति तृप्तिप्रश्नः सुस्वदितमितीतरे ब्रूयुरुपतिष्ठतामित्यक्षय्य-

स्थानेऽभिरम्यतामिति विसर्गोऽभिरतास्मऽइतीतरे । ४ ॥
ततः—'संवत्सरे पूर्णे—त्रिपक्षे द्वादशाहे वा यदहर्वा वृद्धिरापद्येत
चत्वारि पात्राणि सतिलगन्धोदकानि पूरयित्वा त्रीणि पितॄणामेकं
प्रेतस्य प्रेतपात्रं पितृपात्रेष्वासिञ्चति ये समानाऽइति द्वाभ्यामे-
तेनैव पिण्डो व्याख्यातोऽत ऊर्ध्वꣳ संवत्सरे संवत्सरे प्रेतायाऽन्नं
दद्याद्यस्मिन्नहनि प्रेतः स्यात् । ५ ॥ 'आभ्युदयिके'—प्रदक्षिणार्थमुप-
चारः—पूर्वाह्णे पित्र्यमन्त्रवर्ज्यं जप ऋजवो दर्भा यवैस्तिलार्थाः
सम्पन्नमिति तृप्तिप्रश्नः सुसम्पन्नमितीतरे ब्रूयुर्दधिबदराक्षतामिश्राः
पिण्डा नान्दीमुखान्पितॄनावाहयिष्यऽइति पृच्छत्यावाहयेत्यनुज्ञातो
नान्दीमुखाः पितरः प्रीयन्तामित्यक्षय्यस्थाने नान्दीमुखान्पितॄन्वा-
चयिष्यऽइति पृच्छति वाच्यतामित्यनुज्ञातो नान्दीमुखाः पितरः
पितामहाः प्रपितामहा मातामहाः प्रमातामहा वृद्धप्रमातामहाश्च
प्रीयन्तामिति न स्वधां प्रयुञ्जीत युग्मानाशयेदत्र । ६ ॥
'अथ तृप्ति'—र्ग्राम्याभिरोषधीभिर्मासं तृप्तिस्तदभावऽआरण्याभिर्मू-
लफलैरोषधीभिर्वा सहान्नेनोत्तरास्तर्पयन्ति छागोस्रमेषानालभ्य
क्रीत्वा लब्ध्वा वा न स्वयं मृतानाहृत्य पचेन्मासद्वयं तु मत्स्यैर्मासत्रयं
तु हारिणेन चतुर ऽऔरभ्रेण पञ्च शाकुनेन षट् छागेन सप्त कौर्मे-
णाऽष्टौ वाराहेण नव मेषमाꣳसेन दश माहिषेणैकादश पार्षतेन
संवत्सरं तु गव्येन पयसा पायसेन वा वार्ध्रीणसमाꣳसेन द्वादश
वर्षाणि । ७ ॥ 'अथाक्षय्यतृप्तिः'—खड्गमाꣳ सकालशाकलोहि-
च्छागमाꣳसमधुमहाशल्को वर्षासु मघाश्राद्धꣳ हस्तिछायायां च
मन्त्राध्यायिनः पूताः शाखाध्यायी षडङ्गविज्ज्येष्ठसामगो गायत्री-
सारमात्रोपि पञ्चाग्निः स्नातकस्त्रिणाचिकेतस्त्रिमधुस्त्रिसुपर्णी द्रोणपा-
ठको ब्राह्मोढापुत्रश्चेति पङ्क्तिपावना वागीश्वरो याज्ञिकश्च नियोज्या
ऽअभावेऽप्येकं वेदविदं पङ्क्तिमूर्द्धनि नियुंज्यादासहस्रात्पङ्क्तिं पु-
नातीति वचनात् । ८ ॥ अथ 'काम्यानि'—भवन्ति—स्त्रियो
प्रतिरूपाः प्रतिपदि द्वितीयायाꣳ स्त्रीजन्माश्वास्तृतीयायां चतुर्थ्यां
क्षुद्रपशवः पुत्राः पञ्चम्याꣳ षष्ठ्यां द्यूतर्धिः कृषिः सप्तम्यां वाणि-
ज्यमष्टम्यामेकशफं नवम्यां दशम्यां गावः परिचारका एकादश्यां

धनधान्यं हिरण्यं तु द्वादश्यां कुप्यं ज्ञातिश्रैष्ठ्यं च त्रयोदश्यां सुवानस्तत्र म्रियन्ते शस्त्रहतस्य चतुर्दश्याममावास्यायां सर्वमित्यमावास्यायां सर्वमिति ॥ ९ ॥ इति कात्यायनोक्तो नवकण्डिकासूत्रः श्राद्धकल्पः समाप्तः ॥

३७४. 'श्राद्धे ब्राह्मणलक्षणम्.' श्राद्धकारिकायाम्—सर्वलक्षणसंयुक्तैर्विद्याशीलगुणान्वितैः । पुरुषत्रयविख्यातैः सर्वं श्राद्धं प्रकल्पयेत् ॥

३७५.—'नित्यश्राद्धविचारः.' मनुः—कुर्यादहरहः श्राद्धमन्नाद्येनोदकेन वा । पयोमूलफलैर्वापि पितृभ्यः प्रीतिमाहरेत् ॥ यदन्नं पुरुषोऽश्नाति तदन्नात्पितृदेवताः । अपक्वेनापि पक्वेन तृप्तिं कुर्यात्सुतः पितुः ॥ एकमप्याशयेद्विप्रं गृही नित्यं समाहितः ॥ प्रचेताः—नामन्त्रणं न होमश्च नावाहनविसर्जने । न पिण्डदानं न सुरा नित्ये कुर्याद्द्विजोत्तमः ॥ व्यासः—नावाहनं स्वधाकारः पिण्डाग्नौकरणादिकम् । ब्रह्मचर्यादिनियमो विश्वेदेवास्तथैव च । तत्तु षट्पुरुषं ज्ञेयं दक्षिणापिण्डवर्जितम् ॥ दक्षिणायां विकल्पः—किञ्चिद्दत्वा विसर्जयेदिति प्राचेतसोक्तेः ॥ यज्ञपार्श्वे—नित्यश्राद्धं निरग्नेः स्यात्साग्नेर्वा पैतृको बलिः ॥ विश्वामित्रकल्पे—स्वागतवचने षट् ब्राह्मणा द्वावेकं वाऽभ्यर्च्य पादौ प्रक्षाल्याचम्य गृहं प्रवेशयेत् । कुशान्तर्हितेषु स्वासनेषूदङ्मुखानुपवेशयेत् । ततः स्वयमाचम्य प्राङ्मुख उपविश्य पुण्डरीकाक्षं वासुदेवं संस्मृत्य सावित्रीं पठित्वा भिक्षुकादिभ्योऽन्नं संविभज्य पितृपुत्रादिसहितो भोजनं कुर्यात् ॥ लघुव्याससंहितायाम्—एकं तु भोजयेद्विप्रं पितॄनुद्दिश्य यत्सदा । नित्यश्राद्धं तदुद्दिष्टं पितृयज्ञो गतिप्रदः ॥

३७६. अथ 'नित्यश्राद्धप्रयोगः.'—( आचम्य[१] प्राणानायम्य ॥ ॐ पवित्रेस्थो वै०—इति मन्त्रेण दक्षिणवामहस्तयोरनामिकायां कुशपवित्रे धृत्वा ॥) 'सङ्कल्पः[२]'—अद्येत्यादि एवंगुणविशेषेण विशिष्टायां पुण्यतिथौ ममाऽऽत्मनः श्रुतिस्मृतिपुराणोक्तफलप्राप्त्यर्थं (अपसव्यं दक्षिणाभिमुखः) अमुकगोत्राणां अमुकशर्मणां अस्मत्पितृपितामहप्रपितामहानां सपत्नीकानां तथा च अमुकगोत्राणां अमुकशर्मणां अस्मन्मातामहप्रमातामहवृद्धप्रमातामहानां सपत्नीकानां नित्यश्राद्धमहं करिष्ये ।

(१) विशेषस्तु अस्मत्कृत 'श्राद्धप्रयोगावल्यां' द्रष्टव्यः ॥ (२) 'नित्यश्राद्ध' सिद्ध्यर्थं अग्रे वैश्वदेवप्रयोगे (पृष्ठ २०२–२०३) द्रष्टव्यम् ॥ (३) इति सङ्कल्प्य पितृणामुदकादिकं तर्जन्यङ्गुष्ठमध्यवर्तिपितृतीर्थेन देयम् ॥ (४) पूर्वप्रयोगवत् ॥

ततः—क्षणं दत्वा । यथा—अमुकगोत्राणामस्मत्पितृपितामहप्रपि-
तामहानां अमुकशर्मणां सपत्नीकानां क्षणं दत्वा भवद्भिः प्रसादः
कर्त्तव्यः सुकर्त्तव्यः । एवं मातामहप्रमातामहवृद्धप्रमातामहानां सप-
त्नीकानां गोत्रनामोच्चारपूर्वकं क्षणं दद्यात् । ततः—पित्रादयो मा-
तामहाश्च इदं वः पाद्यमिति पाद्यं दत्वाऽचम्य कुशासन उदङ्मुखः
उपविश्य पितॄणां मातामहानां चेदमासनम् । पित्र्ये क्षणः क्रिय-
ताम् । प्राप्नोतु भवान् । प्राप्नुवानि । पितरो मातामहाश्च एष वो
गन्धः सुगन्धः । इमानि पुष्पाणि सुपुष्पाणि । अयं धूपः सुधूपः
अयं दीपः सुदीपः । आच्छादनं दत्वा पूर्णतां वाचयित्वा । द्वि-
णमामान्नं पात्रे संस्थाप्य प्रोक्ष्य पात्रमालभ्य तिलान्विकीर्य आ-
मान्नेऽङ्गुष्ठं दत्वा । पितरः इदं वः आमान्नं सोपस्करं गयेयं भू
गदाधरो विप्रः ब्रह्मरूपमिदं पितृभ्यः अमुकगोत्रेभ्योऽमुकशर्मभ्यो
वसुरुद्रादित्यस्वरूपेभ्यः स्वधा मातामहादिभ्यश्चेदमामं स्वधा सम्प-
द्यतां नमः । दत्तमामान्नमक्षय्यमस्तु । अस्त्वक्षय्यम् । श्रीगयाग-
दाधरः प्रीतो भवतु । ब्रह्मार्पणमस्तु । ॐ मधुव्वाताऽऋताय-
ते मधुक्षरन्ति सिन्धवः । माद्ध्वीर्न्नः सन्त्वोषधीः । १ $\frac{२७}{१३}$
मधु नक्तमुतोषसो मधुमत्पार्थिवꣳ रजः । मधुद्यौर-
स्तु नः पिता । २ $\frac{२८}{१३}$ ॥ मधुमान्नो व्वनस्प्पतिर्म्मधुमाँ२॥
ऽअस्तु सूर्य्यः । माद्ध्वीर्गावो भवन्तु नः । ३ $\frac{२९}{१३}$ ॥
( इति मन्त्राः ब्राह्मणेन पठनीयाः ) ॥ ॐ मधु मधु मधु ॥ सुप्रोक्षित-
मस्तु । अस्तु सुप्रोक्षितम् । शिवा आपः सन्तु । सन्तु शिवा आपः ।
सौमनस्यमस्तु । अस्तु सौमनस्यं । अक्षतं चारिष्टं चास्तु । अस्तु
अक्षतं चारिष्टं च । दीर्घमायुः श्रेयःपितरः ॥ ॐ पितृभ्यः स्वधा-
यिभ्यः । स्वधा नमः पितामहेभ्यः स्वधायिभ्यः स्वधा
नमः प्रपितामहेभ्यः स्वधायिभ्यः स्वधा नमः । अक्षन्पि-
तरोमीमदन्त पितरोतीतृपन्त पितरः पितरः शुन्धध्वम्

(१) अत्र विशेषतः गोपीचन्दनतिलाक्षतश्वेतसुगन्धिपुष्पाणि अगस्तिपुष्पतुलसीप-
भृङ्गराजादीनि पितॄणां देयानि ॥

हन्तकार (नि.कृ.पृ २७१।३।६)
स्मार्त्तेऽथ पुराणे — "ग्रासप्रमाणा
भिक्षा स्यादग्रं ग्रासचतुष्टयम्।
अग्रं चतुर्गुणं प्राहुर्हन्तकारं
द्विजोत्तमाः॥ (अग्रं = पुष्कलं)
तपः — ग्रासमात्रा भवेद्
भिक्षा, पुष्कलं तु चतुर्गुणं॥
पुष्कलानि तु चत्वारि हन्त
कारं विदुर्बुधाः॥

२ पात्रपूर्णा भिक्षा पृ २७१ ३ ६
पुराणे — "यः पात्रपूर्णां
भिक्षां यतिभ्यः संप्रयच्छति
॥ विमुक्तः सर्वपापेभ्यो ना
सौ दुर्गतिमाप्नुयात्॥"

यतिभिक्षा (नि. पृ. २८३।१।४)

मनुः – "अतिथिभ्योऽन्नं दानं च नृयज्ञः स तु पञ्चमः ॥ पुष्कलस्य प्रमाणान्नं मन्यपात्रे समुद्धरेत् ॥ अक्षतोदक हस्तेन चोपवीती निवेदयेत् ॥ योगिभ्यः सनकादिभ्य इदं चान्नमितीति च ॥ इत्यादन्नं तद्विप्राग्र कुर्याद् गृहबलिं तथा ॥ अन्नशुद्धिर्भवेदाशु ह्यन्नदोषैर्न लिप्यते ॥"

गोदोहकाल = मुहूर्ताष्टम [illegible]

[illegible]

"आचमन [illegible] कुर्या [illegible] द्वारावलोकनम् । मुहूर्तस्याष्टमं भागमुदीक्ष्यो ह्यतिथिर्भवेत् ॥"

संज्ञा

पुष्कल -

"अष्टमुष्टि भवेत् कुंचिः,
कुंचयोऽष्टौ च पुष्कलम्"

।अतएव व्याघ्र भाषितं-युक्तम्—यत्-
"चतुरंगुलमुत्सेधं चतुरंगुलमायतं ॥
एतत्प्रमाणं ग्रासस्य व्याघ्रेण परिभाषितं ॥
ग्रासमात्रं भवेत् भिक्षा, पुष्कलं अग्रं तच्चतुष्टयं ॥
पुष्कलाणि चचत्वारि हन्तकारः स उच्यते ॥

।तथाच "मार्कण्डेयपुराणे—
"ग्रासप्रमाणा भिक्षास्याद् अग्रं ग्रासचतुष्टयं ॥ पुष्कलं
अग्रं चतुर्गुणंप्राहु हन्तकारं द्विजोत्तमाः ॥"

।तथाच- शातातपः —
"ग्रासमात्र भवेद्भिक्षा, पुष्कलं तच्चतुर्गुणं ॥
पुष्कलानि च चत्वारि हन्तकारं विदुर्बुधाः ॥"

। यतिभिक्षायां च—"हन्तकारं विवर्जयेत्"

४ ३६/९८ ॥ ( इति मन्त्रेण स्वस्तीति ब्रूयात् कुशपवित्रत्यागः ) 'अर्पणम्'— अनेन मया कृतेन नित्यश्राद्धकर्मणा मम पित्रादिस्वरूपी जनार्दन-वासुदेवः प्रीयताम् ॥ ॐ तत्सद्ब्रह्मार्पणमस्तु । इति नित्यश्राद्धप्रयोगः ॥

३७७. 'वैश्वदेवः.' पारस्करगृह्यसूत्रे—वैश्वदेवादन्नात् पर्युक्ष्य स्वाहाकारैर्जुहुयात् । ब्रह्मणे प्रजापतये गृह्याभ्यः कश्यपायानुमतय इति । ( भूतगृह्येभ्यो मणिके त्रीन्पर्जन्यायाद्भ्यः पृथिव्यै ) धात्रे विधात्रे च द्वारयोः प्रतिदिशं वायवे दिशां च मध्ये त्रीन् ब्रह्मणे-न्तरिक्षाय सूर्याय विश्वेभ्यो देवेभ्यो विश्वेभ्यश्च भूतेभ्यस्तेषामुत्तरतः उषसे भूतानां च पतये परं पितृभ्यः स्वधा नम इतिऽदक्षिणतः पात्रं निर्णिज्योत्तरापरस्यां दिशि निनयेद्यक्ष्मैतत्तऽइत्युद्धृत्याग्रं ब्राह्मणायावनेज्य दद्याद्धन्ततऽ इति ॥ यथार्थं भिक्षुकानतिथींश्च सम्भजेरन्बालज्येष्ठा गृह्या यथार्हमश्नीयुः पश्चाद्गृहपतिः पत्नी च पूर्वो वा गृहपतिस्तस्मात्तु स्वादिष्ठं गृहपतिः पूर्वोऽतिथिभ्योऽश्नीयादिति श्रुतेरहरहः स्वाहा कुर्यादन्नाभावे केनचिदाकाष्ठाद्देवेभ्यः पितृभ्यो मनुष्येभ्यश्चोदपात्रात् । ११ ॥ 'अथातो धर्मजिज्ञासा'—केशान्तादूर्ध्वमपत्नीकऽउत्सन्नाग्निरनग्निको वा प्रवासी ब्रह्मचारी चानग्निरिति ग्रामाग्निमाहृत्य पृष्ठोदिव्यत्याधिष्ठाप्य त्रिभिश्च सावित्रैः प्रज्वाल्य (तां६ सवितुस्तत्सवितुर्विश्वानिदेवसवितरिति) पूर्ववदक्षतैर्हुत्वा पाकं पचेत् । तत्र वैश्वदेवं ब्रह्मणे प्रजापतये गृह्याभ्यः कश्यपायानुमतये विश्वेभ्यो देवेभ्योऽग्नये स्विष्टकृतऽइत्युपस्पृश्य पूर्ववद्बलिकर्मैवं कृते न वृथा पाको भवति । न वृथा पाकं पचेद्वृथापाकमश्नीयादत्र पिण्डपितृयज्ञः पश्चादभ्यर्हणादीनि कुर्यात् । १२ ॥

३७८. 'अथ नानाविधकर्मसु प्रोक्तान्यग्निनामानि.' वाचस्पतौ—लौकिके पावको ह्यग्निः प्रथमः परिकीर्तितः । अग्निस्तु मारुतो नाम गर्भाधाने प्रकीर्तितः ॥ पुंसवे चमसो नाम शोभनः शुभकर्मसु । ( पुंसवः सीमन्तान्तर्गतः कर्मभेदः । ) सीमन्ते ह्यनलो नाम प्रगल्भो जातकर्मणि । पार्थिवो नामकरणे प्राशनेऽन्नस्य वै शुचिः ॥ सभ्यनामा तु चूडायां व्रतादेशे समुद्भवः । गोदाने सूर्यनामा स्यात्केशान्ते याजकः स्मृतः ।

(१) इदं धनुराकारचिह्नस्थमाहिताग्निविषयम् ।

वैश्वानरो विसर्गे स्याद्विवाहे बलदः स्मृतः । चतुर्थीकर्मणि शिखी धृतिरग्निस्तथाऽपरे ॥ आवसथ्यस्तथाधाने वैश्वदेवे तु पावकः । ब्रह्माग्निर्गार्हपत्ये स्याद्दक्षिणाग्निरथेश्वरः ॥ विष्णुराहवनीये स्यादग्निहोत्रे त्रयो मताः । लक्षहोमेऽभीष्टदः स्यात्कोटिहोमे महाशनः ॥ एके घृतार्चिषं प्राहुरग्निध्यानपरायणाः । रुद्रादौ तु मृडो नाम शान्तिके शुभकृत्तथा ॥ (आदिशब्दाल्लघुरुद्रशतरुद्रातिरुद्रा लक्ष्यन्ते ।) पौष्टिके वरदश्चैव क्रोधाग्निश्चाभिचारके । वश्यार्थे वशकृत्प्रोक्तो वनदाहे तु पोषकः ॥ उदरे जठरो नाम क्रव्यादः शवभक्षणे । समुद्रे वाडवो ह्यग्निर्लये संवर्तकस्तथा ॥ सप्तविंशतिसंख्याता अग्नयः कर्मसु स्मृताः ॥

३७९. 'अग्निजिह्वानामानि.' वाचस्पतौ—कराली धूमिनी श्वेता लोहिता नीललोहिता ॥ सुवर्णा पद्मरागा च सप्त जिह्वा विभावसोः ।

३८०. 'अग्निशक्तिनामानि.' वाचस्पतौ—पीता श्वेताऽरुणा कृष्णा धूम्रा तीक्ष्णा स्फुलिङ्गिनी ॥ ज्वलिनी ज्वालिनी चेति कृशानोर्नव शक्तयः ॥

३८१. 'वैश्वदेवे पात्राणि.' गृहयज्ञकल्पावलौ—न चुल्लयामायसे पात्रे न भूमौ न च खर्परे । वैश्वदेवं प्रकुर्वीत कुण्डे वा स्थण्डिलेऽपि वा ॥

३८२. 'वैश्वदेवे ग्राह्योग्निः.' वृत्तिकारः—औपासनाग्निमन्यं वा समिध्याथ हविर्भुजम् ॥ छन्दोगपरिशिष्टे—यस्मिन्नग्नौ भवेत्पाको वैश्वदेवस्तु तत्र वै ॥ अङ्गिराः—शालाग्नौ च पचेदन्नं लौकिके वापि नित्यशः । यस्मिन्नग्नौ पेचदन्नं तस्मिन् होमो विधीयते ॥ अत्रिः—वैदिके लौकिके वापि हुतोच्छिष्टे जले क्षितौ । वैश्वदेवं प्रकुर्वीत पञ्चसूनापनुत्तये ॥ बृहत्पाराशरः—लौकिके पापनाशाय वैदिके स्वर्गमाप्नुयात् ॥

३८३. 'वैश्वदेवे हवनीयद्रव्यविचारः' विश्वामित्रकल्पे—फलैर्दधिघृतैः कुर्यान्मूलशाकोदकादिभिः । अलाभे येन केनापि काष्ठैर्मूलतृणादिभिः ॥ जुहुयात्सर्पिषाऽभ्यक्तं तैलक्षारविवर्जितम् । दध्यक्तं पायसाक्तं वा तदभावेऽम्भसापि वा ॥ शाकं वा यदि वा पत्रं मूलं वा यदि वा फलम् । सङ्कल्पयेद्यमाहारं तेनाग्नौ जुहुयादपि ॥ श्रौतोल्लासे—घृतं वा यदि वा तैलं (तिल—कुसुम्भतैलं वा) पयो वा यदि वा दधि । घृतस्थाने नियुक्तानां घृतशब्दो विधीयते ॥ तस्मात्—(घृतमिश्रितशाल्योदनस्य बदरीफलप्रमाणा आमलकप्रमाणा वा वैश्वदेवाहुतीर्जुहुयात् ॥)

३८४. 'वैश्वदेवे आहुतिविचारः.' विष्णुः—मन्त्रेणोङ्कारपूर्वेण स्वाहान्तेन विचक्षणः । स्वाहावसाने जुहुयाद्वामहस्तं हृदि न्यसन्निति ।

याज्ञवल्क्यः—देवेभ्यस्तु हुतादन्नाच्छेषाद्भूतबलिं हरेत् । भूतयज्ञः स वै प्रोक्तो भूतिदः सर्वदेहिनाम् ॥ मनुः—शुनां च पतितानां च श्वपचां पापरोगिणाम् । वायसानां कृमीणां च शनकैर्निक्षिपेद्भुवि ॥

३८५. 'वैश्वदेवे वर्ज्यद्रव्याणि.' विश्वामित्रकल्पे—कोद्रवं चणकं माषं मसूरं च कुलित्थकम् । क्षारं च लवणं चैव वैश्वदेवे विवर्जयेत् ॥ आह्निककारिकासु—अन्नं पर्युषितं चैव परान्नं दूषितं तथा । दग्धमन्नं तथोच्छिष्टं वैश्वदेवे विवर्जयेत् ॥

३८६. 'वैश्वदेवाग्निप्रज्वलम्'. विश्वामित्रकल्पे—न पाणिना न शूर्पेण न चामेध्यादिनापि वा । मुखेनोपधमेदग्निं मुखादेष व्यसीयत ॥ [ मुखेनेत्यत्र वेणुधमनीयुक्तेनेति वाक्यशेषः कार्यः ] पट्टकेन भवेद्व्याधिः शूर्पेण धननाशनम् । पाणिना मृत्युमाप्नोति कर्मसिद्धिर्मुखेन तु ॥ छन्दोगपरिशिष्टे—उत्तानेन तु हस्तेन ह्यङ्गुष्ठाग्रेण पीडितम् । संहताङ्गुलिपाणिस्तु वाग्यतो जुहुयाद्भविः ॥

३८७. 'श्राद्धे वैश्वदेवः.' आह्निककारिकासु कात्यायनः—याजुषाः सामगाः पूर्वं श्राद्धमध्ये ह्यथर्वणः । बह्वृचाः श्राद्धशेषेण कुर्युर्वै वैश्वदेवकम् ॥

३८८. 'वैश्वदेवाभावे दोषः.' बृहत्पाराशरः—यदग्नौ हूयते नैव यस्य ग्रासो न दीयते । अभोज्यं तद्द्विजातीनां भुक्त्वा चान्द्रायणं चरेत् ॥

३८९. 'वैश्वदेवफलम्.' मनुः—पञ्चसूना गृहस्थस्य चुल्ली पेषण्युपस्करी । कण्डणी चोदकुम्भी च तासां पापस्य शान्तये ॥ पञ्च क्लृप्ता महायज्ञाः प्रत्यहं गृहमेधिनाम् । पञ्चैतान्यो महायज्ञान्न हापयति शक्तितः ॥ स गृहेऽपि वसन्नित्यं सूनादोषैर्न लिप्यते ॥ वैश्वदेवस्य सिद्धस्य गृह्येऽग्नौ विधिपूर्वकम् । आभ्यः कुर्याद्देवताभ्यो ब्राह्मणो होममन्वहम् ॥ ( यदन्नं पक्वमक्षारलवणं भवेत् तेनैव बलिवैश्वदेवकर्म कार्यम् ॥)

३९०. 'वैश्वदेवे कुण्डम्.' यज्ञपार्श्वे—दशाङ्गुलं तु दैर्घ्येण विस्तारे चतुरङ्गुलम् । षडङ्गुलं तु उच्छ्राये मेखला द्व्यङ्गुला मता । वृत्तं वा चतुरस्रं वा कुण्डं स्याद्वैश्वदेविकम् ॥ गृह्ययज्ञकल्पावलौ—षडङ्गुलमथोच्छ्रायं गर्ते च चतुरङ्गुलम् । द्वादशाङ्गुलदीर्घं स्यात्कुण्डं तद्वैश्वदेविकम् । अपि ताम्रमयं प्रोक्तं कुण्डमत्र मनीषिभिः ॥ ( अत्र सामान्याङ्गुलिप्रमाणं ग्राह्यम् ) यथाह—अत्रिः—तिर्यग्यवोदरान्यष्टावूर्ध्वं वा व्रीहयस्त्रयः । अङ्गुलिः सैष विज्ञेयः श्रौते स्मार्ते च कर्मणि ॥

३९१. 'अग्नेर्ध्येयरूपम्.' रुद्रकल्पे—रुद्रतेजःसमुद्भूतं द्विमूर्धानं द्विनासिकम् । षण्नेत्रं च चतुःश्रोत्रं त्रिपादं सप्तहस्तकम् ॥ याम्यभागे चतुर्हस्तं सव्यभागे त्रिहस्तकम् । स्रुवं स्रुचं च शक्तिं च अक्षमालां च दक्षिणे ॥ तोमरं व्यजनं चैव घृतपात्रं तु वामके । बिभ्रतं सप्तभिर्हस्तैर्द्विमुखं सप्तजिह्वकम् ॥ दक्षिणे च चतुर्जिह्वं त्रिजिह्वमुत्तरे मुखम् । द्वादशकोटिमूर्त्याख्यं द्विपञ्चाशत्कलायुतम् ॥ स्वाहास्वधावषट्कारैरङ्कितं मेषवाहनम् । रक्तमाल्याम्बरधरं रक्तपद्मासनस्थितम् । रौद्रं तु वह्निनामानं वह्निमावाहयाम्यहम् ॥

३९२. अथ 'वैश्वदेवप्रयोगः.'—'आचम्य[1] प्राणानायम्य' ॥ 'कुशपवित्रधारणम्'—ॐ पवित्रेस्त्थोवै०[2] ॥ 'सङ्कल्पः'—अद्य-पूर्वोच्चारितएवंगुणविशेषेण विशिष्टायां शुभपुण्यतिथौ मम गृहे पञ्चसूनाजनितसकलदोषपरिहारपूर्वकं नित्यकर्मानुष्ठानसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं पञ्चमहायज्ञैरहं यक्ष्ये ॥ 'अग्निध्यानम्'[3]—

याजकः ।



अग्निस्वरूपम् ।




(१) पूर्वप्रयोगवत् ॥ (२) इति मन्त्रेण दक्षिणहस्तानामिकायां कुशपवित्रं धार्यम् ॥ (३) पश्चात्कुण्डस्थमग्निं वेणुधमन्या प्रबोध्य ध्यायेत् ॥

ॐ चत्वारिशृङ्गा त्रयो ऽअस्य पादा द्वेशीर्षे सप्तहस्तासोऽअस्य । त्रिधाबद्धो वृषभोरोरवीति महोदेवो मर्त्याँ२ँ ॥ आविवेश । १$\frac{९१}{१७}$ ॥ 'आसनम्'—ॐ एषो ह। देवः प्प्रदिशोनु सर्व्वाः पूर्वो ह जातऽसऽउगर्ब्भे ऽअन्तः। सऽएव जातऽस जनिष्ष्यमाणःप्प्रत्यङ्जनास्तिष्ठति सर्व्वतोमुखः । २$\frac{४}{३२}$ ॥ 'नमस्कारः'—मुखं यः सर्वदेवानां हव्यभुक्कव्यभुक् तथा । पितॄणां च नमस्तस्मै विष्णवे पावकात्मने ॥ ३ ॥ पावकनाम्ने वैश्वानराय नमः । अग्नये अन्नं नमः । अग्नये गन्धं नमः । अग्नये अक्षतान्पुष्पं च नमः । अग्नये नमो नमः । अग्ने शाण्डिल्यगोत्र मेषध्वज प्राङ्मुख मम संमुखो भव ॥ 'अग्निप्रदीप्तकरणम्'—( वेणुनलिकया प्रदीप्तकरणम् ) ॥ 'आहुतयः'—१—ॐ ब्रह्मणे स्वाहा इदं ब्रह्मणे न मम । २—ॐ प्रजापतये स्वाहा इदं प्रजापतये न मम। ३—ॐ गृह्याभ्यः स्वाहा इदं गृह्याभ्यो न मम । ४—ॐ कश्यपाय स्वाहा इदं कश्यपाय न मम । ५—ॐ अनुमतये स्वाहा इदं अनुमतये न मम ॥ अग्ने 'मण्डलं' दृष्ट्वा—

---

( १ ) ततः प्रदक्षिणमग्निं पर्युक्ष्य इतरथा तदावृत्तिः । मध्यमानामिकाङ्गुष्ठैर्घृतप्रोक्षितौदनस्य बदरीफलप्रमाणाः कुण्डस्थाग्नावाहुतीर्जुहुयात् ॥

( २ ) १–ॐ भूः स्वाहा इदमग्नये न मम । २–ॐ भुवः स्वाहा इदं वायवे न मम । ३–ॐ स्वः स्वाहा इदं सूर्याय न मम । ४–ॐ भूर्भुवः स्वः स्वाहा इदं प्रजापतये न मम । ५–ॐ देवकृतस्यैनसोवयजनमसि स्वाहा इदमग्नये न मम । ६–ॐ मनुष्यकृतस्यैनसोवयजनमसि स्वाहा इदमग्नये न मम । ७–ॐ पितृकृतस्यैनसोवयजनमसि स्वाहा इदमग्नये न मम । ८–ॐ आत्मकृतस्यैनसोवयजनमसि स्वाहा इदमग्नये न मम । ९–ॐ एनसऽएनसोवयजनमसि स्वाहा इदमग्नये न मम । १०–यच्चाहमेनो विद्वाँश्चकार यच्चाविद्वाँस्तस्य सर्व्वस्यैनसोवयजनमसि स्वाहा इदमग्नये न मम । ११–ॐ प्रजापतये स्वाहा इदं प्रजापतये न मम । १२–ॐ अग्नये स्विष्टकृते स्वाहा इदमग्नये स्विष्टकृते न मम ॥ एता 'वैश्वदेवाहुतयः' सूत्रे नोक्ताः परं केषुचित्पुस्तकेषु दृश्यन्ते ॥

काशी खंड ९८/१५४-१५५ पृथ्व्यां इवाच्यांश्च विश्वेदेवेभ्यः शुभः॥ तदन्तादर्चिताः स्युर्विश्वेदेवास्त्रयोदश ॥

(त्रयोदश = नं १ से १३ तक के)?

पूर्व

'मण्डलम्'—भूमौ चतुरङ्गुलमात्रं वितस्तिमात्रं वा उदकेन मण्डलं कृत्वा तदुपरि बलिहरणं कुर्यात् । तद्यथा—

**भूतयज्ञः (१)**

१ ॐ धात्रे नमः इदं धात्रे न मम ।

७ ॐ प्राच्यै दिशे नमः इदं प्राच्यै दिशे न मम ।

३ ॐ वायव्यै नमः इदं वायव्यै न मम ।

८ ॐ दक्षिणस्यै दिशे नमः इदं दक्षिणस्यै दिशे न मम ।

४ ॐ वायव्यै नमः इदं वायव्यै न मम ।

१३ ॐ सूर्याय नमः इदं सूर्याय न मम ।

१२ ॐ अन्तरिक्षाय नमः इदं अन्तरिक्षाय न मम ।

११ ॐ ब्रह्मणे नमः इदं ब्रह्मणे न मम ।

२ ॐ विधात्रे नमः इदं विधात्रे न मम ।

१० ॐ उदीच्यै दिशे नमः इदं उदीच्यै दिशे न मम ।

६ ॐ वायव्यै नमः इदं वायव्यै न मम ।

**‡ देवयज्ञः (४)**

१८ गृहदेवतानां नैवेद्योऽर्पणीयः ।

(सचविधिरग्रे (२०४) पृष्ठे द्रष्टव्यः)

१७ ॐ भूतानां च पतये नमः इदं भूतानां च पतये न मम ।

१६ ॐ उषसे नमः इदं उषसे न मम ।

**मनुष्ययज्ञः (३)**

§(सव्यं उदकोपस्पर्शः) (नीवीकृत्वा

१५ ॐ विश्वेभ्यो भूतेभ्यो नमः इदं विश्वेभ्यो भूतेभ्यो न मम ।

१४ ॐ विश्वेभ्यो देवेभ्यो नमः इदं विश्वेभ्यो देवेभ्यो न मम ।

दक्षिण.

उत्तर

इदं विश्वेभ्यो देवेभ्यो न मम ।

२० ॐ हन्त ते सनकादिमनुष्येभ्यो नमः इदं हन्त ते सनकादिमनुष्येभ्यो न मम ।

### † निर्णेजनम् ( ६ )

२२ ॐ यक्ष्मैतत्ते निर्णेजनमिति पात्रं प्रक्षाल्य वायव्यां दिशि निनयेत् ।

### ** ब्रह्मयज्ञः ( ५ )

२१ सव्येन ब्रह्मयज्ञसिद्ध्यर्थं तिस्रो गायत्रीं जपेत् ।

### नित्यश्राद्धम् ( २ )

( अपसव्येन क्षिपेत् )

१९ ॐ पितृभ्यः स्वधा नमः इदं पितृभ्यः स्वधा न मम ।

५ ॐ वायव्यै नमः इदं वायव्यै न मम ।

९ ॐ पश्चिमायै दिशे नमः इदं पश्चिमायै दिशे न मम ।

* इयमाहुतिः पित्रादिसमस्तपितॄणां गोत्रोच्चारपूर्वकं नाम गृहीत्वाऽपसव्येन देया ॥ † पारस्करगृह्यसूत्रे—यक्ष्मैतत्ते निर्णेजनमिति पात्रं प्रक्षाल्य तज्जलं वायव्यां दिशि निनयेत् ॥ ‡ नैवेद्याऽर्पणविधिः अग्रे ( २०४ ) पृष्ठे द्रष्टव्यः ॥ § इयमाहुतिः कण्ठिं कृत्वा क्षिपेत् ॥ ** ब्रह्मयज्ञाभावे गायत्रीर्जपेत् ॥

शेषवैश्वदेवप्रयोगस्त्वग्रिमपृष्ठे द्रष्टव्यः ।

अथ 'गृहदेवानां' सिद्धान्नमन्नसोपस्करनैवेद्यार्पणप्रयोगः'—(वैश्वदेव-प्रयोगेयथादर्शितदेवयज्ञे अष्टादशाङ्के (१८) चिन्तितसमये देवतासन्मुखप-वित्रस्थले चतुरस्रमण्डलोपरि सिद्धान्नमन्नसोपस्करपूरितं नैवेद्यपात्रं निधाय पश्चात् ॐ नमो भगवते वासुदेवाय इति मन्त्रेण तत्पात्रसमन्तात् जल-धारया पङ्क्तिवारणं कुर्यात् । ततः तदन्नं अधोलिखितमन्त्रेण 'गायत्रीम-न्त्रेण' वा तुलसीदलेन सम्प्रोक्ष्य नैवेद्योपरि तत्तुलसीदलं निधाय) यथा—

'अन्नप्रोक्षणम्'—ॐ नाब्भ्याऽ आसीदन्तरिक्षꣳ शीर्ष्णो द्यौः समवर्त्तत । पुद्भ्याम्भूमिर्द्दिशꣳ श्रोत्रात्तथा लोकाँ२ ॥ ऽअकल्पयन् । $१\frac{१३}{३१}$ ॥ धेनुमुद्रां प्रदर्श्य सव्यहस्तस्याङ्गुलयः समानाः कृत्वा नैवेद्यमर्पयेत्[1] ॥ तद्यथा—ॐ प्राणाय स्वाहा । १ ॥ ॐ अपानाय स्वाहा । २ । ॐ व्यानाय स्वाहा । ३ ॥ ॐ समानाय स्वाहा । ४ ॥ ॐ उदानाय स्वाहा । ५ ॥ इति समर्प्य । नैवेद्यमध्ये पानीयं समर्पयामि । उत्तरापोशनं समर्पयामि । हस्त-प्रक्षालनं मुखप्रक्षालनं च समर्पयामि । करोद्वर्तनार्थे चन्दनं समर्प-यामि । 'आचमनम्'—ॐ केशवाय नमः स्वाहा । ॐ नारायणाय नमः स्वाहा । ॐ माधवाय नमः स्वाहा ॥ 'हस्तप्रक्षालनम्'—ॐ गोविन्दाय नमः ॥ मुखवासार्थे 'ताम्बूलम्'—( तदभावे गन्धा-क्षतपुष्पम् ) समर्पयामि ॥ 'अर्पणम्'—अनेन ॐ भूर्भुवः स्वः अ-मुकपञ्चायतनदेवताभ्यो नमः सिद्धान्नमन्नसोपस्करनैवेद्यं सम-र्पयामि ॥ इति गृहदेवानां सिद्धान्नमन्नसोपस्करनैवेद्यार्पणप्रयोगः ॥

अथ 'गोग्रासादिसमर्पणम्'—सुरभिर्वैष्णवी माता नित्यं वि-ष्णुपदे स्थिता । गोग्रासं तु मया दत्तं सुरभिः प्रतिगृह्यताम् । ४ ॥ इदं गोभ्यो न मम । द्वौ श्वानौ श्यामशबलौ वैवस्वतकुलो-द्भवौ । ताभ्यामन्नं प्रदास्यामि रक्षेतां पथि मां सदा । ५ ॥ इदं श्वभ्यां न मम ॥ यमोऽसि यमदूतोऽसि वायसोऽसि महामते । अहोरात्रकृतं पापं बलिं भक्षतु वायसः । ६ ॥ इदं वायसेभ्यो न

(१) वामहस्ते गृहीतलघुवस्त्रेण ( छाटी इति संज्ञितेन ) स्वनेत्राच्छादितेन 'नैवेद्यम'र्पयेत् ॥

मम ॥ अथ 'क्षेपकम्.'—(देवा मनुष्याः पशवो वयांसि सिद्धाश्च यक्षोरगदैत्यसङ्घाः । प्रेताः पिशाचास्तरवः समस्ता ये चान्नमिच्छन्ति मया प्रदत्तम् । ७ । इदं देवादिभ्यो न मम ॥ (इति क्षेपकम्) ॥ पिपीलिकाः कीटपतङ्गकाद्या बुभुक्षिताः कर्मणि योगबद्धाः । प्रयान्तु ते तृप्तिमिदं मयान्नं तेभ्योऽवसृष्टं सुखिनो भवन्तु । ८ । इदं पिपीलिकाकीटपतङ्गकेभ्यो न मम ॥ (हस्तं प्रक्षाल्य प्रथमानुलेपितं भस्म निःसार्य स्वयं ललाटे गन्धादितिलकं कुर्यात्[1]) ॥ यथा—'गन्धधारणे तिलकमन्त्रः.' पारस्करगृह्यसूत्रे—ॐ सुचक्षाऽ-अहमक्षिभ्याम्भूयासꣳ सुवर्चा मुखेन । सुश्रुत्कर्णाभ्याम्भूयासम् ॥ 'वैश्वदेविकं किञ्चित् भस्मधारणम्'—ॐ त्र्यायुषं[2] जमदग्नेः कश्यपस्य त्र्यायुषम् । यद्देवेषु त्र्यायुषन्तन्नोऽअस्तु त्र्यायुषम् । ९ ६१/३ ॥ (शतायुषं बलायुषम्) ॥ 'अग्निविसर्जनम्.'—गच्छ गच्छ सुरश्रेष्ठ स्वस्थाने परमेश्वर । यत्र ब्रह्मादयो देवास्तत्र गच्छ हुताशन । १० ॥ ॐ यज्ञ यज्ञङ्गच्छ यज्ञपतिङ्गच्छ स्वां योनिङ्गच्छ स्वाहा । एष ते यज्ञो यज्ञपते सह सूक्तवाकः सर्ववीरस्तञ्जुषस्व स्वाहा । ११ २२/८ ॥ (कुशपवित्रत्यागः कार्यः) ॥ 'अर्पणम्[3]'—अनेन वैश्वदेवाख्येन कर्मणा श्रीयज्ञनारायणस्वरूपी परमेश्वरवासुदेवः प्रीयतां न मम । ॐ तत्सद्ब्रह्मार्पणमस्तु ॥ यस्य स्मृ० ॥ ॐ विष्णवे नमः इति त्रिः । इति वैश्वदेवप्रयोगः ॥

३९३. 'गन्धे उक्तद्रव्याणि.'—वाचस्पतिः—कस्तूरी कुङ्कुमं फल्गु सिन्दूरं रक्तचन्दनम् । गोरोचना गन्धकाष्ठं जलं चाऽगरु गोमयम् ॥ धात्रीमूलस्य मृद्गन्धो हरिद्रा गोगृहस्य च ।

३९४. 'गन्धधारणावश्यकता.' वाचस्पतौ—स्नानान्ते सर्ववर्णानामाश्रमाणां तथैव च ॥ एतानि तिलकान्याहुः सन्ध्यादिसर्वकर्मसु । काम्यं

(१)—स्वयं मध्यमाङ्गुष्ठेन स्वललाटे गन्धतिलकं कुर्यात् ॥ (२) इति मन्त्रेण भस्म ललाटे ग्रीवायां दक्षिणवामबाह्वोर्हृदि च धार्यम् ॥ (३) ततो भोजनात्प्राग्दत्तं बलिं गृहाद्बहिः गोभ्यो वायसादिभ्यश्च समर्प्य हस्तौ पादौ प्रक्षाल्याऽऽचम्य गृहं गच्छेत् ॥

नैमित्तिकं नित्यं यत्किञ्चित्कर्म नारद ॥ वर्णाश्रमाणां तन्नास्ति स्नानान्ते तिलकं विना । कर्म वर्णाश्रमाणां स्याद्दैवं पित्र्यं न तत्फलम् ॥ स्नानं सन्ध्यां पञ्चयज्ञान् पैत्र्यं होमादि कर्म यः । विना तिलकदर्भाभ्यां कुर्यात्तन्निष्फलं भवेत् ॥ पद्मोत्तरखण्डे— स्नानं सन्ध्या पञ्चयज्ञान् पैत्रं होमादिकर्म यः विनातिलकदर्भाभ्यां कुर्यात्तन्निष्फलं भवेत् ॥

३९५. 'गन्धधारणप्रकारः'. ब्राह्मे—अङ्गुष्ठः पुष्टिदः प्रोक्तो मध्यमा पुष्टिकारिणी । अनामिकान्नदा नित्यं मुक्तिदा च प्रदेशिनी । एतैरङ्गुलिभेदैस्तु कारयेन्न नखैः स्पृशेत् ॥ अन्यच्च—वर्तिदीपाकृतिर्वा वेणुपत्राऽऽकृतिस्तथा । पद्मं च मुकुलो वाऽपि शङ्खाकारमतः परम् ॥ मत्स्यकूर्माकृतिर्वापि तथैव मुकुलाकृतिः । ब्राह्मणैस्तिलकं कुर्यादनेन विधिना सह ॥ अभ्यङ्गस्नानं कुर्याच्चेद्धार्यं चन्दनमेव च । ललाटे भस्म नो धार्यं सन्ध्योपासनकर्मणि ॥ अनामिक्या च देवस्य ऋषीणां च तथैव च । गन्धानुलेपनं कार्यं प्रयत्नेन विशेषतः । पितॄणामर्पयेद्गन्धं तर्जन्या च सदैव हि तथैव मध्यमाङ्गुल्या धार्यं गन्धं स्वयं बुधैः ॥

३९६. 'गन्धतिलकधारणविचारः' वाचस्पतौ—ऊर्ध्वपुण्ड्रं द्विजः कुर्यात् क्षत्रियाणां तथैव च । वैश्यानां तु तथा ज्ञेया शूद्राणामर्धमण्डलाऽऽकृति ललाटदक्षिणे ब्रह्मा वसेद्वामे महेश्वरः । मध्ये विष्णुर्वसेन्नित्यं तस्मान्न लेपयेत् ॥ शूद्रस्यैकाङ्गुलं प्रोक्तमायतं द्व्यङ्गुलं विशि । क्षत्रिये त्र्यङ्गुलं तद्वद्ब्राह्मणे चतुरङ्गुलम् ॥ नासिकायास्त्रिभागैको भागो मानेन यो भवेत् भ्रुवोर्मध्यादधः स्थानं मूलमाहुर्मनीषिणः ॥ ब्रह्मचारी गृहस्थश्च वानप्रस्थो यतिस्तथा । कुर्यात् यदूर्ध्वपुण्ड्रं तद्वैष्णवो हरिमन्दिरम् ॥

३९७. 'दीक्षामार्गे गन्धधारणम्.' नागोजीभट्टसंहितायाम्— शिवागमे दीक्षितैस्तु धार्यं तिर्यक् त्रिपुण्ड्रकम् । विष्णवागमे दीक्षितैः ऊर्ध्वपुण्ड्रं विधारयेत् ॥

३९८. 'गन्धस्थानानि'. ब्रह्माण्डे—ललाटे केशवं विन्यस्य नारायणमथोदरे । माधवं हृदये न्यस्य गोविन्दं कण्ठकूर्परे ॥ विष्णुं च दक्षिणे कुक्षौ तद्भुजे मधुसूदनम् । त्रिविक्रमं कर्णमूले वामकुक्षौ तु वामनम् ॥ श्रीधरं च हृषीकेशं वामयोर्बाहुकर्णयोः । पद्मनाभं पृष्ठदेशे ककुद्दामोदरं न्यसेत् ॥ मूर्ध्नि मूलेन मन्त्रेण शेषे द्वादशनामभिः । सङ्कर्षणादिभिः कृष्णे शुक्ले चेत्केशवादिभिः ॥ शौनकः—निटिले ( भाले ) बाहुवच्चैव दण्डवत्कर्णपल्लवे । हृदये कमलाकारमुदरे दीपवल्लिखेत् ॥ वेणुपत्रसमाकारं

बाहुमध्ये समालिखेत् । अधः पृष्ठे स्कन्धदेशे लिखेज्जम्बूफलाकृतिम् ॥ दशाङ्गुलप्रमाणं तु उत्तमोत्तममुच्यते । नवाङ्गुलं मध्यमं स्यादष्टाङ्गुलमतः परम् ॥ लिङ्गाकारं ललाटे तु हृदयेऽश्वत्थपत्रकम् । वंशपत्राकृतिर्बाह्वोः शेषा दीपकलाः स्मृताः ॥

३९९. 'गन्धगुणाः.' ब्राह्मे—श्यामं शान्तिकरं प्रोक्तं रक्तं वश्यकरं भवेत् । श्रीकरं पीतमित्याहुर्वैष्णवं श्वेतमुच्यते ॥

४००. 'मङ्गलकर्मणि गन्धतिलकम्.' विष्णुधर्मोत्तरे—तिलकं कुङ्कुमेनैव सदा मङ्गलकर्मणि । कारयित्वा सुमतिमान् न श्वेतचन्दनं मृदा ॥

४०१. 'गन्धमुद्राधारणम्.' शङ्खः—शङ्खचक्राद्यङ्कनं च तुलसीदलभक्षणम् । यः कुर्यान्नियतं भक्त्या स याति परमां गतिम् ॥

४०२. 'गन्धविलेपनविचारः.'— नागदेवः—न पादुकास्थो नादर्शे न जले वा विलोकयेत् । न प्रावृतशिरः कुर्यात्तिलकं धर्मवर्धनम् ॥ प्रभाते विपुलं विन्द्यान्मध्याह्ने च त्रिपुण्ड्रकम् । अपराह्णे पर्वमात्रं तिलकं त्रिविधं स्मृतम् ॥ गोपीचन्दनलिप्ताङ्गो यं यं पश्यति चक्षुषा । तं तं पूतं विजानीयान्नात्र कार्या विचारणा । ऊर्ध्वपुण्ड्रं द्विजस्येष्टं क्षत्रियस्य त्रिपुण्ड्रकम् । अर्धचन्द्रं तु वैश्यस्य वर्तुलं शूद्रजातिषु ॥ ( गन्धार्थे सर्वदा श्वेतचन्दनं तु प्रशस्यते ) ॥

४०३. 'गन्धतिलकधारणमन्त्रः.'—स च वैश्वदेवप्रयोगे (२०६) पृष्ठे द्रष्टव्यः ॥

४०४. 'अतिथिपूजनम्'. मनुः—निवृत्ते वैश्वदेवे च यदान्योऽतिथिराव्रजेत् । तस्मादन्नं यथाशक्त्या प्रदद्यान्न वलिं हरेत् ॥ शातातपः—प्रियं वा यदि वा द्वेष्यं मूर्खं पण्डितमेव वा । अतिथिं तत्र सम्प्राप्तं पूजयेत्स्वागतादिना ॥ तथाऽऽसनप्रदानेन पादप्रक्षालनेन च । श्रद्धया चान्नदानेन प्रियप्रश्नोत्तरेण च ॥

४०५. 'अतिथिविचारः.'—हारीतः—एकरात्रं तु निवसन्नतिथिर्ब्राह्मणः स्मृतः । अनित्यं हि स्थितो यस्मात्तस्मादतिथिरुच्यते ॥ अग्नयोऽतिथिमिच्छन्ति सोऽतिथिः स्वर्गमिच्छति । स्वर्गेऽपीच्छन्ति दातारं सम्यक् सुकृतकारिणम् ॥ याज्ञवल्क्यः—अध्वनीनोऽतिथिर्ज्ञेयः श्रोत्रियो वेदपारगः । मान्यावेतौ गृहस्थस्य ब्रह्मलोकमभीप्सतः ॥ शङ्खः—नाग्निहोत्रेण दानेन नोपवासोपसेवनैः । देवाश्च परितुष्यन्ति यथा त्वतिथिपूजनात् ॥ आह्नि-

ककारिकासु—ब्रह्मचारी यतिश्चैव विद्यार्थी गुरुपोषकः । दुर्भगः क्षीणवित्तश्च षडेते भिक्षुकाः स्मृताः ॥

४०६. 'भोजनम्.' कात्यायनपरिशिष्टसूत्रे—अथातः श्रुतिस्मृतीरनुस्मृत्य भोजनविधिं व्याख्यास्यामः । आचान्तो धृतोत्तरीयवस्त्रो धृतश्रीखण्डगन्धत्रिपुण्ड्रो भोजनशालायामागत्य गोमयलिप्ते शुचौ देशे विहितपीठाधिष्ठितो नित्यं प्राङ्मुखो नोदङ्मुखो न दक्षिणामुखो न प्रत्यङ्मुखो न विदिङ्मुखः श्रीकामश्चेत्प्रत्यङ्मुखः सत्यकामश्चेदुदङ्मुखो यशस्कामश्चेद्दक्षिणामुखो (जीवन्मातृकवर्ज्यं) हस्तपादास्येषु पञ्चस्वार्द्रो नीवारचूर्णैर्गौरमृदा भस्मनोदकेन वा मण्डलं कुर्याश्चतुष्कोणं ब्राह्मणस्य त्रिकोणं क्षत्रियस्य मण्डलाकृति वैश्यस्याभ्युक्षणꣳ शूद्रस्य । यथा चक्रायुधो विष्णुस्त्रैलोक्यं परिरक्षति । एवं मण्डलभस्मैतत्सर्वभूतानि रक्षत्विति ॥ तत्र भूमौ निहितपात्रेऽन्ने परिविष्टे पितुन्नुस्तोषमित्यन्नꣳ स्तुत्वा मानस्तोके नमोवः किरिकेभ्यो नमः शम्भवे चेत्येभिरभिमन्त्र्य प्रोक्षयेत् । सत्यन्त्वर्त्तेन परिषिञ्चामीति प्रातः ऋतन्त्वा सत्येन परिषिञ्चामीति सायं तेजोसि शुक्रमस्यमृतमसीति यजुषान्नमभिमृश्याग्निरस्मीत्यात्मानमग्निं ध्यात्वा भूपतये भुवनपतये भूतानाम्पतयेऽइति प्रणवादिकैः स्वाहानमोन्तैर्मन्त्रैः प्रतिमन्त्रं वलीन् हरेदन्तश्चरति भूतेषु गुहायां विश्वतोमुखः । त्वं ब्रह्म त्वं यज्ञस्त्वं वषट्कारस्त्वमोङ्कारस्तं विष्णोः परमं पदम् । अमृतोपस्तरणमसि स्वाहेति विष्णुमभिध्यायन्नाचम्यान्नममृतं ध्यायन्मौनी हस्तचापल्यादिरहितो मुखे पञ्चप्राणाहुतीर्जुहोति । १ ॥ ॐ प्राणाय स्वाहा । ॐ अपानाय स्वाहा । ॐ व्यानाय स्वाहा । ॐ समानाय स्वाहा । ॐ उदानाय स्वाहेति क्रमं याज्ञवल्क्योऽमन्यत । उदानाय स्वाहा समानाय स्वाहेति क्रमं शौनकबौधायनौ याज्ञवल्क्योदितक्रमो वाजसनेयिनामित्यूचतुः । दन्तैरनुपस्पृशन् जिह्वया ग्रसेदङ्गुष्ठप्रदेशिनीमध्यमाभिः प्रथमाङ्गुष्ठमध्यमानामिकाभिर्द्वितीयाङ्गुष्ठानामिकाकनिष्ठिकाभिस्तृतीयां कनिष्ठिकातर्जन्यङ्गुष्ठैश्चतुर्थीꣳसर्वाभिरङ्गुलीभिः साङ्गुष्ठाभिः पञ्चमीमङ्गुष्ठानामिकामात्रग्राह्यान्नेनैता ऽआहुतयऽइति हारीतव्याख्यातारः । सर्वाभि-

रङ्गुलीभिरेताऽइति बौधायनः । मौनं त्यक्त्वा प्राक् द्रवरूपमश्नीयान्मध्ये कठिनमन्ते पुनर्द्रवाशी स्यान्मधुरं पूर्वं लवणाम्ले मध्ये कटुतिक्तादिकान्पश्चाद्यथासुखं भुञ्जीत भुञ्जानो वामहस्तेनाऽन्नं न स्पृशेन्न पादौ न शिरो न वस्तिं न पदा भाजनञ्स्पृशेदेवं यथारुचि भुक्त्वा भुक्तशेषमन्नमादाय । मद्भुक्तोच्छिष्टशेषं ये भुञ्जन्ते पितरोऽधमाः । तेषामन्नं मया दत्तमक्षय्यमुपतिष्ठत्विति पितृतीर्थेन दक्षिणतो दत्वाऽमृतापिधानमसि स्वाहेति हस्ते गृहीतानामपामर्द्धं पीत्वार्द्धं भूमौ निक्षिपेत् । रौरवे पूयनिलये पद्मार्बुदनिवासिनाम् । अर्थिनाञ्सर्वभूतानामक्षय्यमुपतिष्ठत्विति तस्माद्देशादपसृत्य गण्डूषशलाकादिभिस्तर्जनीवर्जमास्यञ्संशोधयेत् । २ ॥ न भार्यादर्शनेऽश्नीयान्न भार्यया सह न सन्ध्ययोर्न मध्याह्ने नार्द्धरात्रे नायज्ञोपवीती नार्द्रशिरा नार्द्रवासा नैकवासा न शयानो न ताम्रभाजने न भिन्ने न ताम्रराजतसौवर्णशङ्खस्फाटिकाश्मभाजनवर्जे न लौहे न मृन्मये न सन्धिसंस्थिते न भुवि न पाणौ न सर्वभोजी स्यात्किञ्चिद्भोज्यं परित्यजेदन्यत्र घृतपायसदधिसक्तुपललमधुभ्यः साध्वाचान्तो दक्षिणपादाङ्गुष्ठे पाणिं निःस्रावयेदङ्गुष्ठमात्रः पुरुषोऽङ्गुष्ठं च समाश्रितः । ईशः सर्वस्य जगतः प्रभुः प्रीणातु विश्वभुगिति श्वात्राः पीताऽइति नाभिमालभतऽअमृताऽइत्यतः प्रागगस्त्यं वैनतेयं च शनिं च वडवानलम् । अन्नस्य परिणामार्थं स्मरेद्भीमं च पञ्चममित्युदरमालभ्येन्द्राश्विनौ च्यवनशर्यातिसुकन्याश्च । भोजनान्ते स्मरेन्नित्यं तस्य चक्षुर्न हीयतऽइति वचनात्स्मृत्वा मुखशुद्धिं कुर्यान्नमो भगवते वाजसनेयाय याज्ञवल्क्याय नमो भगवते वाजसनेयाय याज्ञवल्क्याय । ३ ॥

४०७. ‘भोजनकालः.’ बृहद्विष्णुः—स्नात्वा यथावद्धुत्वा च देवर्षिपितृतर्पणम् । कृते जाप्ये हुते वह्नौ शुद्धवस्त्रसमन्वितः ॥ प्रशस्तपाणिपादस्तु भुञ्जीत प्रयतो गृही ॥ देवलः—स्नात्वा प्रक्षाल्य पादौ च स्रग्दामालङ्कृतः शुचिः । पञ्चयज्ञावशिष्टं च यो भुङ्क्ते सोऽमृताशनः ॥ मनुः—सायंप्रातर्द्विजातीनामशनं श्रुतिनोदितम् । नान्तरा भोजनं कुर्यादग्निहोत्रसमो विधिः ॥ कात्यायनः—द्विरन्नं मुनिभिः प्रोक्तं विप्राणामप्रवासिनाम् । नित्यमह्नि तपस्विन्यां सार्धप्रथमयामतः ॥ (ब्राह्मणानां सूर्या-

स्तपर्यन्तं द्वितीयभोजनं नोक्तम् । यथाह—श्रुतिः—दिवारात्रं वो भोजनद्वय इति ) ॥

४०८. 'भोजने वर्ज्यासनानि.' प्रचेताः—गोशकृन्मृण्मयं भिन्नं तथा पालाशपिप्पलम् । लोहबद्धं तथैवार्कं वर्जयेदासनं बुधः ॥

४०९. 'भोजने वर्ज्यपात्राणि.' व्यासः—मृण्मये पत्रपृष्ठे वा आयसे ताम्रभाजने । नाऽश्नीयादपि चेद्भुङ्क्ते नरकं प्रतिपद्यते ॥ पैठीनसिः—वटार्काश्वत्थपत्रेषु कुम्भीतिन्दुकजेषु च । श्रीकामो न तु भुञ्जीत कोविदारकरञ्जयोः ॥ प्रचेताः—ताम्बूलाभ्यञ्जने चैव कांस्यपात्रे च भोजनम् । यतिश्च ब्रह्मचारी च विधवा च विवर्जयेत् ॥ अत्रिः—अपात्रे ह्यपि यद्दत्तं दहत्यासप्तमं कुलम् । हव्यं देवा न गृह्णन्ति कव्यं च पितरस्तथा । आयसेन तु पात्रेण यदन्नमुपदीयते । तदन्नमपवित्रं स्यात्त्याज्यं वै सर्वकर्मणि ॥

४१०. 'भोजने ग्राह्यपात्राणि.' पैठीनसिः—सौवर्णे राजते ताम्रे पद्मपालाशपत्रयोः । भाजने भोजने चैव त्रिरात्रं फलमश्नुते ॥ (ताम्रपालाशग्रहणं यतिविषयम् ) । पालाशपद्मपत्रेषु गृही भोजनमाचरेत् । व्यासः—एक एव तु यो भुङ्क्ते गृहस्थः कांस्यभाजने । चत्वारि तस्य वर्द्धन्ते आयुः प्रज्ञा यशो बलम् ॥ भूमौ पात्रं प्रतिष्ठाप्य यो भुङ्क्ते वाग्यतः शुचिः । भोजने भोजने चैव त्रिरात्रफलमश्नुते ॥ आह्निककारिकासु—ब्रह्मपत्रेषु यो भुङ्क्ते मासमेकं निरन्तरम् । चान्द्रायणसमं पुण्यं कृतस्यापि चतुर्गुणम् ॥

४११. 'भोजने पादुकानिषेधः.' पराशरः—पादुकास्थो न भुञ्जीत पर्यङ्के संस्थितोऽपि वा । शुना चाण्डालदृष्टो वा भोजनं परिवर्जयेत् ॥ लघुव्याससंहितायाम्—यो भुङ्क्ते वेष्टितशिरा यस्तु भुङ्क्ते विदिङ्मुखः । सोपानत्कश्च यो भुङ्क्ते सर्वं विद्यात्तदासुरम् ॥ नार्द्धरात्रे न मध्याह्ने नाजीर्णे नार्द्रवस्त्रधृक् । नच भिन्नासनगतो न शयानः स्थितोऽपि वा । नोपानत्पादुकी चापि नच संविलपन्नपि ॥

४१२. 'हस्तेनाग्राह्यपदार्थाः.' पैठीनसिः—लवणं व्यञ्जनं चैव घृतं तैलं तथैव च । लेह्यं पेयं च विविधं हस्तदत्तं न भक्षयेत् ॥ शातातपः—हस्तदत्तानि चान्नानि प्रत्यक्षं लवणं तथा । वर्जनीयं प्रयत्नेन ब्राह्मणेन विशेषतः ॥ अत्रिः—घृतं वा यदि वा तैलं ब्राह्मणो नखनिः-

सृतम् । न भुञ्जीत न दद्याच्च भुक्त्वा पादं समाचरेत् ॥ मनुः—दर्व्या देयं शृतान्नं च समस्तं व्यञ्जनादिकम् । अपक्वं स्नेहपक्वं च न तु दर्व्या कदाचन ॥

४१३. 'अन्नग्रासप्रमाणम्.' विश्वामित्रकल्पे—कुक्कुटाण्डप्रमाणं तु ग्रासमानं विधीयते ॥

४१४. 'भोजने दिशमाह.' देवलः—उपलिप्ते शुचौ देशे पादौ प्रक्षाल्य वाग्यतः । प्राङ्मुखोऽन्नं तु भुञ्जीत शुचिः पीठमधिष्ठितः ॥ मनुः—आयुष्यं प्राङ्मुखो भुङ्क्ते यशस्वी दक्षिणामुखः । श्रियं प्रत्यङ्मुखो भुङ्क्ते ऋणं भुङ्क्ते उदङ्मुखः ॥ पुत्रवांस्तु गृहे नित्यं नाश्नीयादुत्तरामुखः । सोमवारे तथाऽभ्यङ्गं वर्जयेत्तु सदा बुधः ॥ प्रयोगपारिजाते—पितरौ जीवमानौ चेन्नाश्नीयाद्दक्षिणामुखः । तयोस्तु जीवतोरेकस्तथैव नियमः स्मृतः ॥ अनिशं मातृहीनानां यशस्यं दक्षिणामुखम् ॥

४१५. 'अन्नपरिवेषणम्.' स्मृत्यन्तरे—शाकादीन्पुरतः स्थाप्य भक्ष्यं भोज्यं च वामतः । अन्नं मध्ये प्रतिष्ठाप्य दक्षिणे घृतपायसम् ॥ ओदने परमान्ने च आज्यपात्रं यदि स्थितम् । तदाज्यं च भवेद्रक्तं तदन्नं मांसमुच्यते ॥ ( घृतमपि भोजनात्प्रागेवान्नशुद्ध्यर्थं ग्राह्यम् । न तु भोजनारम्भानन्तरमिति ) ॥

४१६. 'भोजनादौ देवतीर्थग्रहणम्.' स्मृत्यन्तरे—प्रथमात्कायशुद्धिश्च द्वितीयाद्धर्मसङ्ग्रहः । तृतीयान्मोक्षमाप्नोति देवतीर्थं त्रिरापिबेत् ।

४१७. 'भोजने मण्डलम्.' ब्रह्मपुराणे—उपलिप्ते समे स्थाने शुचौ श्लक्ष्णसमन्विते । चतुरस्रं त्रिकोणं च वर्तुलं चार्धचन्द्रकम् । कर्तव्यमानुपूर्व्येण ब्राह्मणादिषु मण्डलम् ॥ शङ्खः—आदित्या वसवो रुद्रा ब्रह्मा चैव पितामहः । मण्डले तूपजीवन्ति तस्मात्कुर्वीत मण्डलम् ॥

४१८. 'मण्डलप्रमाणादि.' ग्रन्थान्तरे—देहे देवे चतुष्कोणं वर्तुलं पितृकर्मणि । त्रिकोणं हि प्रकुर्वीत प्रेतकर्मणि सर्वदा ॥ विधाय दैवे पैत्र्ये च वेदाङ्गुलप्रमाणतः ॥ अन्यच्च—वितस्तिमात्रं चतुरङ्गुलं वा कोणैश्चतुर्भिर्विदधीत मण्डलम् । प्राणाग्निहोत्रार्थमिदं समुक्तं महाऽनुभावेन हि हारितेन ॥ द्वादशाङ्गुलमानं तु व्रतिनां योगिनां सदा । चतुरङ्गुलं विधातव्यं त्रिकोणं प्रेतकर्मणि ॥ हस्तौ पादौ मुखं पात्रं मण्डलं चार्द्रपञ्चकः ।

प्रकुर्याद्भोजनं राजन् गृहस्थाश्रमतत्परः ॥ दैवे कार्येऽथवा पैत्र्ये उक्तवान्कमलापतिः ॥

४१९. 'मण्डलाऽभावे दोषः.' मार्कण्डेयपुराणे—यातुधानाः पिशाचाश्च क्रूराश्चैव तु राक्षसाः । हरन्ति रसमन्नं च मण्डलेन विवर्जितम् ॥

४२०. 'पङ्क्तिवारणम्.' नागदेवः—प्रक्षाल्य पाणी पात्रं तु भस्मना पङ्क्तिवारणम् ॥ गोभिलः—अग्निना भस्मना चैव स्तम्भेन सलिलेन च । द्वारेण चैव मार्गेण पङ्क्तिभेदो बुधैः स्मृतः ॥

४२१. 'पङ्क्तिवारणाभावे दोषः.' गोभिलः—एकपङ्क्त्युपविष्टानां दुष्कृतं यद्दुरात्मनः । सर्वेषां तत्समं तेषां यावत्पङ्क्तिर्न भिद्यते ॥ पराशरः—एकपङ्क्त्युपविष्टानां विप्राणां सह भोजने । यद्येकोऽपि त्यजेत्पात्रं शेषमन्नं न भोजयेत् ॥ करमध्ये स्थिता देवाः करपृष्ठे तु राक्षसाः । तस्मात्तु करपृष्ठेन नान्नं कुर्यात्प्रदक्षिणम् ॥

४२२. 'अन्नस्तुतिः.' ब्राह्मे—अन्नं दृष्ट्वा प्रणम्यादौ प्राञ्जलिं कारयेत्ततः । अस्माकं नित्यमस्त्वेतदिति भक्त्याथ वन्दयेत् ॥ अन्यच्च—अमृतोपस्तरणमसि स्वाहेत्यपः पिबेत् । करेण सलिले विष्णुं ध्यात्वा ब्रह्म पिबेदपः ॥ प्राणाऽग्निहोत्रं जुहुयाच्छेषं भुङ्क्ते द्विजोत्तमः । स्वाहान्ताः प्रणवाद्याश्च नाम्ना मन्त्राः प्रकीर्तिताः ॥ जिह्वया च ग्रसेदन्नं दन्तान्नैस्तु न संस्पृशेत् । अनिन्द्यं भक्षयेदन्नं वाग्यतोऽन्नमकुत्सयन् । पञ्चग्रासान्महामौनं प्राणाद्यांश्च समाचरेत् ॥

४२३. 'चित्राहुतयः.' मनुः—चित्राहुतिबलीन्दद्याद्बलिहीनं न भोजयेत् । तत्र स्थाने करस्पर्शे न भोक्तव्यं कदाचन ॥

४२४. 'आपोशनम्.' याज्ञवल्क्यः—आपोशानेनोपरिष्टादधस्तादश्नता तथा । अनग्नममृतं चैव कार्यमन्नं द्विजन्मना ॥ पुलस्त्यः—अम्बु हस्तेन चादाय यः कुर्यात्तु प्रदक्षिणम् । हिंसितं तत्पिशाचेन अभोज्यं मनुरब्रवीत् ॥

४२५. 'आपोशनाऽभावे दोषः.' याज्ञवल्क्यः—आपोशनमकृत्वा तु यो भुङ्क्तेऽनापदि द्विजः । भुञ्जानो वा तथा ब्रूयाद्गायत्र्यष्टशतं जपेत् ॥

४२६. 'प्राणाऽग्निहोत्रम्.' नागदेवः—ब्राह्मणो भोजनं कुर्यात्प्राणाग्निहोत्रपूर्वकम् । यथोक्तविधिना नित्यं न चैतदवगर्हयेत् ॥

४२७. 'प्राणाग्निहोत्रफलम्.' विश्वामित्रकल्पे—प्राणाऽग्निहोत्रं वक्ष्यामि सर्वयज्ञेषु दुर्लभम् । यं ज्ञात्वा मुच्यते जन्तुर्जन्ममृत्युजरादिभिः ॥ विधिना भुज्यते येन मुच्यते च ऋणत्रयात् । कुलानुद्धरते विप्रो नरकानेकविंशतिः ॥ सर्वयज्ञफलप्राप्तिः सर्वलोकेषु गच्छति । हृत्पुण्डरीकमरणिं मनोन्मथनसंज्ञकम् ॥ वायुरज्ज्वा मथेदग्निमात्माध्वर्युः प्रकीर्तितः ॥

४२८. 'प्राणाऽग्निहोत्रे पञ्चाऽग्निनामानि.' नागदेवः—मुखे—आहवनीयः । हृदि—गार्हपत्यः । नाभौ—दक्षिणाग्निः । दक्षिणे—आवसथ्यः । उत्तरे—सभ्य—इति ॥ उक्तं च सुश्रुते—धन्वन्तरिः—हृदि प्राणो गुदेऽपानः समानो नाभिमण्डले । उदानः कण्ठदेशे च व्यानः सर्वशरीरगः ॥

४२९. 'प्राणाहुतिग्रहणम्.' विष्णुपुराणे—प्राणेभ्यस्त्वथ पञ्चभ्यः स्वाहाप्रणवसंयुताः । पञ्चाहुतीस्तु जुहुयात्प्रणवाग्निनिभेषु च ॥ शंखः—प्राणार्थं मनसा ध्यायेत्समास्तं पूजयेत्सदा । वामेन पाणिना पात्रं गृहीत्वा भुवि संस्थितम् ॥ विश्वामित्रकल्पे—तर्जनीमध्यमाङ्गुष्ठैः प्राणस्यैवाहुतिं क्षिपेत् । मध्यमाऽनामिकाङ्गुष्ठैरपाने चाहुतिं क्षिपेत् ॥ कनिष्ठानामिकाङ्गुष्ठैर्व्यानस्य तदनन्तरम् । कनिष्ठातर्जन्यङ्गुष्ठैरुदाने चाहुतिं क्षिपेत् ॥ समाने सर्वाङ्गुलिभिः सदा चैवाहुतिर्भवेत् ॥ शौनकः—तर्जनीमध्यमाङ्गुष्ठैर्लग्ना प्राणाहुतिर्भवेत् । कनिष्ठानामिकाङ्गुष्ठैरपाने जुहुयाद्धविः ॥ मध्यमाऽनामिकाङ्गुष्ठैर्व्यानाय जुहुयाद्बुधः । कनिष्ठातर्जन्यङ्गुष्ठैरुदानाय ह्युदाहृतम् ॥ सर्वाङ्गुलीभिरादाय समानायाहृतं बुधैः । तथैव षष्ठीं दद्यात्तु चैतन्याय सदा बुधः ॥

४३०. 'क्षुत्तृडुपशमनार्थमन्नार्पणम्.' स्मृतिचन्द्रिकायाम्—भोज्यान्नात्किञ्चिदन्नस्य धर्मराजाय वै बलिम् । दत्वाऽथ चित्रगुप्ताय प्रेतेभ्यश्चेदमुच्चरेत् ॥ यत्र क्वचन संस्थानां क्षुत्तृष्णोपहतात्मनाम् । प्रेतानां तृप्तयेऽक्षय्यमिदमस्तु यथासुखम् ॥

४३१. 'भोजने विशेषनियमाः.' आह्निककारिकासु—वामहस्ते जलं धृत्वा मणिबन्धे निधाय च । भुञ्जमानः पिबन्वारि नोच्छिष्टं मनुरब्रवीत् ॥ यः पुनर्भोजनं कुर्वन्नश्नन्तं संस्पृशेद्द्विजः । ततस्तेन न भोक्तव्यं भुक्त्वा चान्द्रायणं चरेत् ॥ अमृतं ब्राह्मणस्यान्नं क्षत्रियान्नं पयः स्मृतम् । वैश्यस्य चान्नमेवान्नं शूद्राणामधमं स्मृतम् ॥ व्यासः—षड्भ्योऽन्नमन्वहं

दद्यात्पितृयज्ञविधानतः । ततोऽन्यदन्नमादाय निर्गत्य भवनाद्बहिः ॥ काकेभ्यः श्वपचेभ्यश्च प्रक्षिपेद्ग्रासमेव च । उपविश्य गृहद्वारे तिष्ठेद्यावन्मुहूर्तकम् ॥ अप्रमत्तोऽतिथिं लिप्सुर्भावशुद्धः प्रतीक्षकः । आगतं दूरतः शान्तं भोक्तुकाममकिञ्चनम् ॥ मनुः—शुनां च पतितानां च श्वपचां पापरोगिणाम् । वायसानां कृमीणां च शनकैर्निर्वपेद्भुवि ॥ दक्षः—विभागशीलो यो नित्यं क्षमायुक्तो दयापरः । भुक्त्वा तु सुखमास्थाय तदन्नं परिणामयेत् ॥ व्यासः—विप्रभोजी भवेन्नित्यं नित्यं चामृतभोजनः । विप्रसम्भुक्तशेषं तु यज्ञशिष्टं तथाऽमृतम् । पञ्चार्द्रो भोजनं कुर्यात्प्राङ्मुखो मौनमाश्रितः । हस्तौ पादौ तथैवास्यमेषु 'पञ्चार्द्रता' मता ॥ बृहस्पतिः—न स्पृशेद्वामहस्तेन भुञ्जानोऽन्नं कदाचन । न पादौ न शिरो बस्तिं न पदा भाजनं स्पृशेत् ॥ बौधायनः—भोजनं हवनं दानमुपहारः प्रतिग्रहः । बहिर्जानु न कार्याणि तद्वदाचमनं स्मृतम् ॥ बृहस्पतिः—घृतपात्रस्थं भुञ्जीत पञ्चग्रासान्महामुने । शेषमुद्धृत्य भोक्तव्यं पित्र्यर्थे न तु चोद्धरेत् ।

४३२. 'रात्रौ भोजने दीपविचारः.' अन्यग्रन्थान्तरे—नृणां भोजनकाले तु यदि दीपो विनश्यति । तदन्नं पाणिना स्पृष्ट्वा सावित्रीं मनसा स्मरेत् ॥ पुनर्दीपं ततो लब्ध्वा शेषं भुञ्जीत कामतः । अन्यदन्नं न भोक्तव्यं भुक्त्वा चान्द्रायणं चरेत् ॥

४३३. 'भोजनानन्तरमवश्यकर्माणि.' ग्रन्थान्तरे—भोजनान्ते शतपदं गत्वा ताम्बूलभक्षणम् । शयनं वामकुक्षौ चेद्भैषज्यं किं प्रयोजनम् ।

४३४. 'भोजनानन्तरं स्मरणे योग्याः.' नारदः—अगस्त्यं कुम्भकर्णं च शनिं च वडवानलम् । आहारपचनार्थाय स्मरेद्भीमं च पञ्चमम् ॥ आतापी मारितो येन वातापी च निपातितः । समुद्रः शोषितो येन समेऽगस्त्यः प्रसीदतु । इत्युक्त्वा तु स्वहस्तेन परिमार्ज्य निजोदरम् । अनायासप्रदायीनि कुर्यात्कर्माण्यतन्द्रितः ॥

४३५. 'भोजनानन्तरं निर्माल्यतुलसीभक्षणावश्यकता.' नारदः—निर्माल्यं तुलसीपत्रं भक्षयेद्भोजनोत्तरम् । शुद्धो भवति तत्काले एवं सर्वं विधीयते ॥ भोजनानन्तरं विष्णोरर्पितं तुलसीदलम् । भक्षयेद्देहशुद्ध्यर्थं चान्द्रायणशताधिकम् ॥ मनुः—ताम्बूले च फले चैव भुक्ते स्नेहानुलेपने । दन्तलग्नस्य संस्पर्शे नोच्छिष्टं मनुरब्रवीत् । देवलः—भुक्तोच्छिष्टं समाघ्राय सर्वेभ्यो घृतवर्जितम् । उच्छि-

द्भभागधेयेभ्यः सोदकं निर्वपेद्भुवि ॥ अमृतापिधानमसीत्यपः प्राश्य भुवि क्षिपेत् । अनन्तरं शिखां चैव बध्नीयाद्वामपाणिना ॥ उत्थाय वहिरागत्य मुखहस्तादि शोधयेत् । आचम्य च ततः कुर्याद्दन्तकाष्ठस्य भक्षणम् ॥ दन्तलग्नमसंहार्यं लेपं मन्येत दन्तवत् । न तत्र वहुशः कुर्याद्यत्नमुद्धरणं प्रति ॥ अत्रिः—आचान्तोऽप्यशुचिस्तावद्यावत्पात्रमनुद्धृतम् । उद्धृतेऽप्यशुचिस्तावद्यावन्नो मृज्यते मही ॥ भूमावपि हि लिप्तायां तावत्स्यादशुचिः पुमान् । आसनादुत्थितस्तस्माद्यावन्न स्पृशते महीम् ॥ नारदः—सर्वं सशेषमश्नीयाद्धृतपायसवर्जितम् । अग्राङ्गुलिषु तच्छेषं निधाय भोजनोत्तरम् ॥ जलपूर्णाञ्जलिं कृत्वा पीत्वा चैव तदर्धकम् । अग्राङ्गुलिस्थितं शेषं भूमौ दत्वाञ्जलेर्जलम् ॥ शेषं निषिञ्चेत्तत्रैव पठन्मन्त्रमिमं बुधः । ( रौरवेइत्यादि० ) ॥

४३६. 'भोजनप्रकारमाह.' पुलस्त्यः—अश्नीयात्तन्मना भूत्वा पूर्वं तु मधुरान्नकम् । लवणाम्लौ तथा मध्ये कटुतिक्तादिकं ततः ॥ विष्णुपुराणे—प्राग्द्रवं पुरुषोऽश्नीयान्मध्ये च कठिनाशनः । अन्ते पुनर्द्रवाशी तु बलारोग्यैर्न मुञ्चति ॥ जठरं पूरयेदर्धमन्नैर्भागं जलस्य च । वायोः सञ्चारणार्थाय चतुर्थमवशेषयेत् ॥

४३७. 'भोजने मिताहारः.' मनुः—अनारोग्यमनायुष्यमस्वर्ग्यमतिभोजनम् । अपुण्यं लोकविद्विष्टं तस्मात्तत्परिवर्जयेत् ॥

४३८. 'भोजने ग्राससङ्ख्या.' आपस्तम्बः—अष्टौ ग्रासा मुनेर्भक्ष्याः षोडशाऽरण्यवासिनः । द्वात्रिंशत्तु गृहस्थस्य ह्यमितं ब्रह्मचारिणः ॥

४३९. 'देवतीर्थग्रहणमन्त्रः.' अकालमृत्युहरणं सर्वव्याधिविनाशनम् । विष्णुपादोदकं तीर्थं जठरे धारयाम्यहम् ॥

४४०. 'शतपदम्.' धन्वन्तरिः—भुक्त्वा राजवदासीत यावदन्नक्रमो गतः । ततः पदशतं गत्वा वामपार्श्वे तु संविशेत् ॥

४४१. 'अथ ब्राह्मणसुवासिनीनां समाराधनप्रयोगः.' 'सङ्कल्पः'—अद्यपूर्वोच्चारित एवंगुणविशेषेण विशिष्टायां शुभपुण्यतिथौ ममाऽऽत्मनः श्रुतिस्मृतिपुराणोक्तफलप्राप्त्यर्थं अमुकदेवताप्रीत्यर्थं अमुककर्माङ्गदेवताप्रीत्यर्थं वा ब्राह्मणसुवासिनीसमाराधनं करिष्ये—तदङ्गत्वेन ब्राह्मणसुवासिनीपूजनं च करिष्ये ॥ इति सङ्कल्प्य । तत्रादौ

'ब्राह्मणपूजनम्'—ॐ भूर्भुवःस्वः ब्रह्मणे इदमासनम् । स्वासनम् । ब्रह्मणे इदं पाद्यं सुपाद्यम् । ब्रह्मणे इदमर्घ्यं अस्त्वर्घ्यम् । ब्रह्मणे इदमाचमनीयम् । अस्त्वाचमनीयम् । ब्रह्मणे गन्धाः पान्तु । सौमङ्गल्यं चास्तु । अक्षताः पान्तु । आयुष्यमस्तु । पुष्पाणि पान्तु । सौश्रियमस्तु । ताम्बूलं पातु । ऐश्वर्यमस्तु । दक्षिणाः पान्तु । बहुदेयं चास्तु । नमोस्त्वनन्ताय सहस्रमूर्तये सहस्रपादाक्षिशिरोरुबाहवे । सहस्रनाम्ने पुरुषाय शाश्वते सहस्रकोटीयुगधारिणे नमः । १ ॥ एवं ब्राह्मणपूजां विधाय ॥ 'सुवासिनीपूजनम्'—यथा—नमो देव्यै महादेव्यै शिवायै सततं नमः । नमः प्रकृत्यै भद्रायै नियताः प्रणताः स्म ताम् ॥ पश्चात् । पात्रपरिवेषणानन्तरं यजमानेन गायत्रीमन्त्रेण पात्रप्रोक्षणं कार्यं देवेभ्यो नैवेद्यं समर्प्य ततः सव्यहस्ते जलं गृहीत्वा 'भोजनसङ्कल्पं' कुर्यात्—यथा—ॐ प्रजापते न । त्वदेतान्यन्यो विश्वा रूपाणि परि ता बभूव । यत्कामास्ते जुहुमस्तन्नोऽअस्तु वयꣳ स्याम पतयो रयीणाम् । २ $\frac{६५}{२३}$ ॥ एको विष्णुर्महद्भूतं पृथग्भूतान्यनेकशः । त्रींल्लोकान् व्याप्य भूतात्मा भुङ्क्ते विश्वभुगव्ययः । ३ ॥ "अर्पणम्"—अनेन ब्राह्मणसुवासिनीभोजनेन अमुक देवता अमुककर्माङ्गदेवता वा प्रीयतां न मम ॥ ॐ तत्सद्ब्रह्मार्पणमस्तु ॥

४४२. अथ 'भोजनप्रयोगः' 'मण्डलम्'—'पङ्क्तिवारणम्—[ पात्रस्य समन्तात् ] ॐ नमो भगवते वासुदेवाय ( इति मन्त्रेण दक्षिणतः समंताज्जलधारां कुर्यात् । पात्रेऽन्ने परिविष्टे सति ) ॥ अन्नस्तुतिः—* * ॐ पितुन्नु । स्तोषम्महो धर्म्माणन्तविषीम् । यस्य

(१) एवं यजमानेन 'ब्राह्मणपूजनं' गन्धाक्षतपुष्पैः सम्पादयेत् ॥ (२) एवं 'सुवासिनीपूजनं' कुङ्कुमाक्षतसुगन्धपुष्पैः यजमानस्य पत्नी सम्पादयति (३) वैश्वदेवोत्तरं काकादिभ्यो बलिं दत्वा । अनन्तरमतिथिं भोजयित्वा ततः ह कुटुम्बेन सह भोजनं कुर्यात् ॥ (४) भोजनपात्रस्याऽधो दक्षिणतः उदकेन चतुर चतुरङ्गुलं मण्डलं कृत्वा तदुपरि भोजनपात्रं घृताक्तान्नेन सह स्थापयेत् । ततः उदक त्राणि स्वदक्षिणतो निधाय ॥

त्रितो ओजसा वृत्रं विपर्व्वं मर्दयत । १ ७/३४ ॥ मा नस्तोके तनये मा नऽआयुषि मा नो गोषु मा नोऽअश्वेषु रीरिषः । मा नो वीरान्रुद्रभामिनो वधीर्हविष्मन्तः सदमित्त्वा हवामहे । २ १६/१६ * नमो वः किरिकेभ्यो देवानाᳪ हृदयेभ्यो नमो विचिन्वत्केभ्यो नमो विक्षीणत्केभ्यो नमऽआनिर्हतेभ्यः । ३ ४६/१६ ॥ नमः शम्भवाय च मयोभवाय च नमः शङ्कराय च मयस्कराय च नमः शिवाय च शिवतराय च । ४ ४१/१६ ॥ 'अन्नाभिमन्त्रणम्'— सत्यन्त्वर्त्तेन परिषिञ्चामि ( इति मन्त्रेण प्रातरन्नप्रोक्षणं ) तद्वत् ऋतं त्वा सत्येन परिषिञ्चामि ( इति मन्त्रेण सायमन्नप्रोक्षणम् ) ॥ 'अन्नाभिस्पर्शनम्'—*ॐ तेजोऽसि शुक्रमस्यमृतमसि धाम नामासि प्रियन्देवानामनाधृष्टन्देवयजनमसि । ५ ३१/१ ॥ 'आत्मन्यग्निध्यानम्'—ॐ अग्निरस्मि जन्मना जातवेदा घृतम्मे चक्षुरमृतम्मऽआसन् । अर्कस्त्रिधातू रजसो विमानोऽजस्रो घर्म्मो हविरस्मि नाम । ६ ६६/१८ ॥ 'भूमौ बलिः'—ॐ भूपतये स्वाहा नमः । ॐ भुवनपतये स्वाहा नमः । ॐ भूतानां पतये स्वाहा नमः ॥ 'आपोशनम्'—( अन्नं ब्रह्म रसो विष्णुर्भोक्ता देवो महेश्वरः । एवं ध्यात्वा द्विजो भुङ्क्ते सोऽन्नदोषैर्न लिप्यते ॥ अन्तश्चरति भूतेषु गुहायां विश्वतोमुखः । त्वं ब्रह्म त्वं यज्ञस्त्वं वषट्कारस्त्वमोङ्कारस्त्वं विष्णोः परमं पदम् ॥)—ॐ अन्नपतेऽन्नस्य नो देह्यनमीवस्य शुष्मिणः । प्रप्र दातारन्तारिषऽऊर्जन्नो धेहि द्विपदे चतुष्पदे । ७ ८३/११ ॥ ॐ अमृतोपस्तर-

(१) इति मन्त्रेण भोजनपात्राद्धृताक्तमोदनं गृहीत्वा पात्राद्दक्षिणभागे बदरीफलप्रमाणाः प्राक्संस्था उदक्संस्था वा आहुतीर्दातव्याः । ततो हस्तं प्रक्षाल्य आपोशनार्थं आचमनवदुदकं सव्यहस्ते गृहीत्वा ॥ (२) पश्चाद्विष्णुं ध्यात्वा घृताक्तौदनस्य बदरीफलप्रमाणाः पञ्च प्राणाहुतीर्मुखे जुहुयात् ॥ ( ३ ) इति मन्त्रेण आपोशनस्योदकं पिबेत् । ततो वामहस्तेन पात्रमालभ्य ॥

णमसि स्वाहा ॥ 'प्राणाहुतयः'—ॐ प्राणाय स्वाहा । ॐ अपानय स्वाहा । ॐ व्यानाय स्वाहा । ॐ समानाय स्वाहा । ॐ उदानाय स्वाहा । ( ततो वामहस्तेन नेत्रयोरुदकस्पर्शनम् ) ॥ ततः— 'शिखामुक्तिः—' ब्रह्मपाशसहस्राणि रुद्रशूलशतानि च । विष्णुचक्रसहस्राणि शिखामुक्तिं करोम्यहम् ॥ ( ततो यथेच्छं भुक्त्वा भोजनान्ते उच्छिष्टशेषान्नस्य पात्रवामभागे पितृतीर्थेन भूम्यां 'चित्राहुतिं' दद्यात् ) ॥ यथा—'चित्राहुतिः'—मद्भुक्तोच्छिष्टशेषं ये भुञ्जन्ति पितरोऽधमाः । तेषामन्नं मया दत्तमक्षय्यमुपतिष्ठतु ॥ ततः 'उत्तरापोशनम्'—ॐ अमृतापिधानमसि स्वाहा । ( इति मन्त्रेणार्धमुदकं पीत्वा शेषमुदकमुच्छिष्टान्नचित्राहुतौ पितृतीर्थेन निक्षिपेत् ) ॥ यथा—रौरवे पूयनिलये पद्मार्बुदनिवासिनाम् । अर्थिनां सर्वभूतानामक्षय्यमुपतिष्ठतु ॥ अङ्गुष्ठमात्रः पुरुषो अङ्गुष्ठं च समाश्रितः । ईशः सर्वस्य जगतः प्रभुः प्रीणातु विश्वभुगिति ॥ ततो शिखां बद्ध्वा तूष्णीम् ॥ [ भोजनपात्राद्बलिं वा चित्राहुतिमादायोत्थाय तदन्नं काकेभ्योऽर्पयेत् ] पश्चाद्धस्तौ मुखं च सम्यक् क्षालयेत् ॥ 'आचमनं प्राणायामं' कृत्वा ॥ ततो—'नेत्रोपस्पर्शनम्'—शर्यातिं च सुकन्यां च च्यवनं शक्रमश्विनौ । भोजनान्ते स्मरेन्नित्यं तस्य चक्षुर्न नश्यति ॥ 'उदरालम्भनम्'—ॐ श्वात्राऽपीता भवत यूयमापोऽअस्माकमन्तरुदरे सुशेवाः । ताऽअस्मभ्यमयक्ष्माऽअनमीवाऽअनागसः स्वदन्तु देवीरमृताऽऋतावृधः ॥ ७ $\frac{१२}{४}$ ॥ अगस्त्यं वैनतेयं च शनिं च वडवानलम् । अन्नस्य परिणामार्थं स्मरेद्भीमं च पञ्चमम् ॥ पश्चान्निर्माल्यतुलसीपत्रं भक्षयित्वा शतपदीं गच्छेत् ॥ इति भोजनप्रयोगः ॥

४४३. अथ 'संक्षेपतो भोजनप्रयोगः'—( यथोक्तं चतुष्कोणमण्डलोपरि पात्रं निधाय तस्मिन् घृतादियुतमन्नं परिवेष्यानन्तरं ॐ नमो भगवते वासुदेवाय इति मन्त्रेण दक्षिणतः तत्पात्रसमन्तात् जलधारया 'पङ्क्तिवारणम्' कुर्यात् ॥ पश्चात्—'अन्नस्तुतिः'—

( १ ) 'भुवनपतये स्वाहा नम' इत्यपि पाठः । संहितायां तथोक्तत्वात् ।
( २ ) विशेषस्तु भोजनप्रयोगे द्रष्टव्यः ॥

ॐ पितुन्नु । स्तोषम्महो धर्म्माणन्तविषीम् । यस्य त्रितो व्योजसा वृत्रं विपर्वं मर्दयत् । १ ॥ 'अन्नप्रोक्षणम्'—(दिवा)—सत्यन्त्वर्तेन परिषिञ्चामि ॥ (रात्रौ)—'ऋतं' त्वा 'सत्येन परिषिञ्चामि' ॥ 'अन्नाभिस्पर्शनम्'—* * ॐ तेजोसि शुक्रमस्यमृतमसि धामनामासि । प्प्रियन्देवानामनाधृष्टन्देवयजनमसि । २ ॥ 'भूमौ वलिः'—ॐ भूपतये स्वाहा नमः । ॐ भुवनपतये स्वाहा नमः । ॐ भूतानां पतये स्वाहा नमः ॥ 'आपोशनम्'— (सव्यहस्ते उदकं गृहीत्वा नन्तरं पठेत्) यथा—ॐ अन्नपतेन्नस्य। नो देह्यनमीवस्य शुष्मिणः । प्रप्र दातारन्तारिषऽ ऊर्जन्नो धेहि द्विपदे चतुष्पदे । ३ ॥ ॐ अमृतोपस्तरणमसि स्वाहा । इति मन्त्रेण तज्जलं पिबेत् ॥ 'प्राणाहुतयः'—ॐ प्राणाय स्वाहा । ॐ अपानाय स्वाहा । ॐ व्यानाय स्वाहा । ॐ समानाय स्वाहा । ॐ उदानाय स्वाहा ॥ ततो वामहस्तेन 'नेत्रयोरुदकस्पर्शनं' कार्यम् ॥ 'शिखामुक्तिः'—विष्णुस्मरणेन तूष्णीम् ॥ 'यथासुखं भुञ्जीत' ॥ भोजनान्ते वदरीफलप्रमाणेन उच्छिष्टशेषान्नस्य पात्रवामभागे पितृतीर्थेन भूम्यां 'चित्राहुतिं' दद्यात् । पश्चात् 'उत्तरापोशनार्थ'मुदकं दक्षिणहस्ते गृहीत्वा—ॐ अमृतापिधानमसि स्वाहा इति मन्त्रेणार्धमुदकं पीत्वा शेषमुदकमुच्छिष्टान्नचित्राहुतौ पितृतीर्थेन निक्षिपेत् ॥ 'शिखाबन्धनम्'—तूष्णीम् ॥ (भोजनपात्राद्बलिं वा चित्राहुतिमादा 'योत्थाय' तदन्नं काकेभ्योऽर्पयेत् ॥ पश्चा 'द्धस्तौ मुखं च' सम्यक् 'क्षालयेत्' ॥ 'आचमनम्'—तूष्णीम् ॥ 'उदरालम्भनम्'—अगस्त्यं वैनतेयं च शनिं च वडवानलम् । अन्नस्य परिणामार्थं स्मरेद्भीमं च पञ्चमम् ॥ 'निर्माल्यतुलसीपत्रं' भक्षयित्वा 'शय्यापर्दिं' गच्छेत् ॥ इति संक्षेपतो भोजनप्रयोगः ॥

४४४. 'ताम्बूलभक्षणम्.' मार्कण्डेयः—सुपक्वं च सुपत्रं च चूर्णेन च समन्वितम् । अदत्त्वा द्विजदेवेभ्यस्ताम्बूलं वर्जयेद्बुधः ॥ एकपूगं मुखारोग्यं द्विपूगं निष्फलं भवेत् । अतिश्रेष्ठं त्रिपूगं च त्वधिकं चैव दु-

ष्यति ॥ पर्णमूले भवेद्व्याधिः पर्णाग्रे पापसम्भवः । जीर्णपत्रं हरत्यायुः शिरा बुद्धिविनाशिनी ॥ तस्मादग्रं च मूलं च शिरां चैव विशेषतः । चूर्णपर्णं वर्जयित्वा ताम्बूलं खादयेद्बुधः ॥ **वाचस्पतिः**—प्रभाते पूगमधिकं माध्याह्ने खादिरं तथा । निशासु चूर्णमधिकं ताम्बूलं भक्षयेत्सदा ॥ आद्यं विषोपमं पानं द्वितीयं भेदि दुर्जरम् । तृतीयादनु पातव्यं सुधातुल्यं रसायनम् ॥ ताम्बूलं नातिसेवेत न विरक्तो बुभुक्षितः । देहदृक्केशदन्ताग्निश्रोत्रेन्द्रियबलक्षयः ॥ विना पर्णं मुखे दत्वा गुवाकुं भक्षयेद्यदि । तावद्भवति चाण्डालो यावद्गङ्गां न पश्यति ॥ **सङ्ग्रहे**—काश्मीरैलालवङ्गैश्च जातिकमुकचूर्णकैः । ताम्बूलं खादयेन्नित्यं खादिरेण समन्वितम् ॥ (रात्रौ तु खादिरं वर्ज्यं इति बहूनां सम्प्रदायो वर्तते ) ॥

४४५. **'ताम्बूलवर्जने योग्याः.' वाचस्पतौ**—ताम्बूलं विधवास्त्रीणां यतीनां ब्रह्मचारिणाम् । तपस्विनां च विप्रेन्द्र सर्वपुण्यहरं स्मृतम् ॥

**इति श्रीपुरन्दरोपाह्वविठ्ठलात्मजनारायणेन विरचितायां वाजसनेयाह्निकसूत्रावल्यां पञ्चमभागकृत्यानि समाप्तानि ॥**



## ॥ अथ षष्ठसप्तमभागकृत्यानि ॥

४४६. 'कारिका.' दक्षः—इतिहासपुराणाद्यैः षष्ठसप्तमकौ नयेत् ॥

४४७. 'इतिहासादिअभ्यसनम्.' अत्रिः—इतिहासपुराणानि धर्मशास्त्राणि चाभ्यसेत् । वृथा विवादवाक्यानि परिवादांश्च वर्जयेत् ॥

४४८. 'दिवानिद्रादिनिषेधः.' दक्षः—दिवा स्वापं न कुर्वीत स्त्रियं चैव विवर्जयेत् । आयुर्हन्ति दिवानिद्रा दिवा स्त्री पुण्यनाशिनी ॥

इति श्रीपुरन्दरोपाह्वविठ्ठलात्मजनारायणेन विरचितायां वाजसनेयाह्निकसूत्रावल्यां षष्ठसप्तमभागकृत्यानि समाप्तानि ॥



## ॥ अथाष्टमभागकृत्यानि ॥

४४९. 'कारिका.' दक्षः—अष्टमे लोकयात्रा तु बहिः सन्ध्या ततः पुनः । होमो भोजनकं चैव यच्चान्यद्गृहकृत्यकम् ॥ कृत्वा चैवं ततः पश्चात्स्वाध्यायं किञ्चिदाचरेत् । प्रदोषपश्चिमौ यामौ वेदाभ्यासेन तौ नयेत् ॥ यामद्वयं शयानो हि ब्रह्मभूयाय कल्पते । नैमित्तिकानि काम्यानि निपतन्ति यथा यथा ॥ तथा तथैव कार्याणि न कालस्तु विधीयते । सर्वत्र मध्यमौ यामौ हुतशेषं हविश्च यत् ॥ भुञ्जानश्च शयानश्च ब्राह्मणो नावसीदति ॥

४५०. 'लोकयात्रा.' ग्रन्थान्तरे—ग्रामे च यान्यगाराणि देवतानां तदीक्षणात् । लोकयात्रेति कथिता तां कुर्वन्पुण्यभाग्भवेत् ॥

४५१. 'सायंसन्ध्याकालः.' यमः—रवेरस्तमयात्पूर्वं घटिकैका यदा भवेत् । सायंसन्ध्यामुपासीत कुर्याद्धोमं च पूर्ववत् ॥ भविष्ये—शौचं कृत्वा यथान्यायमर्द्धास्तमितभास्करे । सायंसन्ध्यामुपस्थाय आसीनस्त्वथ वाग्यतः ॥ शौनकः—अर्धास्तमित आदित्ये पश्चिमाया य उत्तरः भागस्तन्मुख आसीनः सावित्रीं वाग्यतो जपेत् ॥

४५२. 'सायंसन्ध्यास्थलम्.' व्यासः—बहिः सन्ध्या दशगुणा ह्रदप्रस्रवणेषु च । सा च तीर्थे शतगुणा सहस्रा जाह्नवीतटे ॥

४५३. 'कालातिक्रमे सायंसन्ध्या.' जमदग्निः—एकाहं चाप्यतिक्रम्य सन्ध्यावन्दनकर्म च । अहोरात्रोषितो भुक्त्वा गायत्र्या अयुतं जपेत् ॥ द्विरात्रे द्विगुणं प्रोक्तं त्रिरात्रे त्रिगुणं भवेत् । त्रिरात्रानन्तरं स्यात्स्याच्छूद्र एव न संशयः ॥ गौतमः—सन्ध्याकाले त्वतिक्रान्ते स्नात्वा चैव यथाविधि । जपेदष्टशतं देवीं ततः सन्ध्यां समाचरेत् ॥ वसिष्ठः—कालातिक्रमणे चैव त्रिसन्ध्यमपि सर्वदा । चतुर्थार्घ्यं प्रकुर्वीत भानोर्व्याहृतिपूर्वकम् ॥ यमः—प्राणायामत्रयं प्रातः सङ्गवे द्विगुणं चरेत् । मध्याह्ने त्रिगुणं प्रोक्तमपराह्णे चतुर्गुणम् ॥ सायाह्ने पञ्चगुणकं सन्ध्यातिक्रमणे भवेत् ।

४५४. 'सायंसन्ध्यायां दिग्विचारः.' शौनकः—दिशोऽष्टधा विभक्तायाः प्रतीच्या भागसप्तकम् । हित्वा दक्षिणतोऽन्यस्तु योऽष्टमो भाग उत्तरः ॥ अस्याभिमुखतो विप्रो भूत्वा प्रयतमानसः । जपन्नासीत सावित्रीं सन्ध्यां कृत्स्नामतन्द्रितः ॥

४५५. 'सायंसन्ध्यायां मन्त्राचमनम्.' शौनकः—अग्निश्चेत्यनुवाकेन सायंकाले पिबेदपः ॥

४५६. 'सायंसन्ध्यायामर्घ्यम्.' गृह्यपरिशिष्टसूत्रे—अथाचम्य दर्भपाणिः पूर्णमुदकाञ्जलिमुद्धृत्यादित्याभिमुखः स्थित्वा प्रणवव्याहृतिपूर्वया सावित्र्या त्रिरर्घ्यं निवेद्य क्षिपेदिति ॥

४५७. 'सायंसन्ध्यायां जपविचारः.' कात्यायनः—सन्ध्याकाले व्यतीते तु जपं कृत्वा पुनर्मनः । ऋचं वाचं त्यृचं जप्त्वा ततः सन्ध्यामुपासते ॥ व्यासः—जपेद्वारुणमन्त्रांस्तु इमम्मेवरुणादिकान् । चतुर्मन्त्रान्विशेषज्ञः सन्ध्याफलमवाप्नुयात् ॥

४५८. 'सायंसन्ध्याफलम्.' बौधायनः—यदुपस्थकृतं पापं यच्च योनिकृतं भवेत् । सायंसन्ध्यामुपस्थाय तेन तस्मात्प्रमुच्यते ॥

४५९. अथ 'सायंसन्ध्याप्रयोगः.'[1]—( यथोक्तस्नानानन्तरं यथाविधि भस्मधारणं कुर्यात् ) ॥ मन्त्रोक्तस्नानकारी चेत्तर्हि तेन निर्जलं भस्म धार्यम् ) ॥ भस्मधारणादारभ्य हृदि पवित्रकरणपर्यन्तं सर्वो विधिः प्रातःसन्ध्यावज्ज्ञेयः ॥ 'सङ्कल्पः'—अद्येत्यादि ममोपात्तदुरितक्षयार्थं श्रीविष्णुप्रीत्यर्थं सायंसन्ध्योपासनमहं करिष्ये ॥ 'आवाहनम्'—वृद्धां सरस्वतीं कृष्णां पीतवस्त्रां[2] चतुर्भुजाम् । शङ्खचक्रगदापद्महस्तां गरुडवाहिनीम् । सामवेदकृतोत्सङ्गां सर्वलक्षणसंयुताम् । वैष्णवीं विष्णुदैवत्यां विष्णुलोकनिवासिनीम् । आवाहयाम्यहं देवीमायान्तीं विष्णुमण्डलात् । आगच्छ वरदे देवि त्र्यक्षरे विष्णुवादिनि । सरस्वति च्छन्दसां मातर्विष्णुयोनि नमोऽस्तु ते ॥ मार्जनादिविधिः प्रातःसन्ध्यावत् ॥ 'अम्बुप्राशनम्'—अग्निश्चमेति नारायणऋषिः । अग्निर्देवता । अनुष्टुप् छन्दः । अम्बुप्राशने विनियोगः—ॐ अग्निश्च मामन्युश्च मन्युपतयश्च मन्युकृतेभ्यः । पापेभ्यो रक्षन्तां । यदह्ना पापमकार्षं । मनसा वाचा हस्ताभ्यां । पद्भ्यामुदरेण शिश्ना । अहस्तदवलुम्पतु । यत्किञ्चित् दुरितं मयि । इदमहं माममृतयोनौ । सत्ये ज्योतिषि जुहोमि स्वाहा ॥ शेषो विधिः प्रातःसन्ध्यावत् ॥

( १ ) विशेषस्तु संक्षेपतो सायंसन्ध्याप्रयोगे द्रष्टव्यः ॥ ( २ )—केषुचित् पुस्तकेषु 'कृष्णवस्त्रां' एवमपि पाठो दृश्यते ॥

(सायाह्ने पश्चिमाभिमुखस्तिष्ठन्नर्घ्यत्रयं दद्यात्) ॥ शेषं प्रातःसन्ध्यावत् । (जपमालां नासिकाग्रदेशे धृत्वा) । 'अर्पणम्'—अनेन सायंसन्ध्याङ्गभूतेन बाहुल्यगोत्रधारिण्या गायत्र्या यथाशक्त्या कृतेन जपकर्मणा श्रीभगवान् विष्णुस्वरूपी सविता देवता प्रीयतां न मम । शेषं गायत्रीतर्पणं विना प्रातःसन्ध्यावत् ॥ इति सायंसन्ध्याप्रयोगः ॥

४६०. 'सायंतर्पणादिनिषेधः.' कात्यायनः—न हन्तितं न होमं च० इति वचनात्—वाजसनेयानां सायं तर्पणं वैश्वदेवश्च नास्ति अतस्तद्विधिर्नोक्तः । प्रदोषव्रतं चेत्तर्हि सायं भोजनात्प्राग्वैश्वदेवः कर्त्तव्यः । परन्तु तर्पणं दिवा कुर्यात् ॥ इति कात्यायनवचनात् ॥ (अयं प्रकारः ब्रह्मयज्ञप्रकरणे द्रष्टव्यः) ॥

४६१. 'पुरुषस्य दीपनिर्वापणे दोषः.'—दीपनिर्वापणात्पुंसः कूष्माण्डच्छेदनात् स्त्रियः । अचिरेणैव कालेन वंशनाशो भवेद् ध्रुवम् ॥

४६२. 'दीपस्तुतिः.'—दीपो ज्योतिः परब्रह्म दीपो ज्योतिर्जनार्दनः । दीपो हरतु मे पापं सन्ध्यादीप नमोऽस्तु ते ॥ शुभं करोतु कल्याणमारोग्यं सुखसम्पदम् । शत्रुबुद्धिविनाशं च दीपज्योतिर्नमोऽस्तु ते ॥ इति दीपं नत्वा तत्सन्निधावाप्तादिकानां कुशलाभिवादनं कुर्यात् ॥ पश्चाद्गृहदेवादीनां पञ्चोपचारैः पूजां कृत्वा । यदि प्रदोषोपवासस्तर्हि षोडशोपचारैर्देवं सम्पूज्य सायं भोजनं कृत्वा ॥ ग्रन्थाद्यवलोकनेन शर्वरीप्रथमभागं नीत्वा स्वपेत् ॥

४६३. 'दीपकालः दीपगुणाश्च.' मरीचिः—रवेरस्तं समारभ्य यावत्सूर्योदयो भवेत् । यस्य तिष्ठेद्गृहे दीपस्तस्य नास्ति दरिद्रता ॥ आयुर्दः प्राङ्मुखो दीपो धनदः स्यादुदङ्मुखः । प्रत्यङ्मुखो दुःखदोऽसौ हानिदो दक्षिणामुखः ॥ (प्रत्यङ्मुखनिषेधस्तु नित्यदीपविषयः । श्रीकार्तवीर्यादिदीपः प्रत्यङ्मुख एव स्थापनीयः) ॥

४६४. 'दीपलक्षणम्.' सुदर्शने—नेत्राह्लादकरः सार्चिर्दूरतापविवर्जितः । सुशिखः शब्दरहितो निर्धूमो नातिह्रस्वकः ॥ कोशजं रोमजं वस्त्रं वर्तिकार्ये न योजयेत् । न मिश्रीकृत्य दद्यात्तु दीपं स्नेहे घृतादिकम् ॥ कार्पासवर्त्तिका प्रोक्ता दीपकृत्येषु सर्वदा । न चैव स्थापयेद्दीपं साक्षाद्भूमौ कदाचन ॥

(१)-सायंसन्ध्यायां रात्रौ 'गायत्रीतर्पणं' नोक्तम् ॥

४६५. अथ 'संक्षेपतो सायंसन्ध्याप्रयोगः'—'भस्मधारणम्'—ॐ त्र्यायुषं० । १ ॥ ( निर्जलं भस्ममात्रं धार्यं ) ॥ 'शिखाबन्धनम्'—मानस्तोके० । २ ॥ 'रुद्राक्षमालाधारणम्'—ॐ त्र्यम्बकं० । ३ ॥ 'आचमनानि'—ॐ केशवाय नमः स्वाहा इतआरभ्य माधवाय नमः इत्यन्तम् ॥ 'हस्तप्रक्षालनादि'—ॐ गोविन्दाय नमः इत्यारभ्य कृष्णाय नमः इत्यन्तम् ॥ 'प्राणायामाः'—प्रणवपूर्वक० इत्यारभ्य विनियोगः इत्यन्तम् ॥ 'आत्मनः समन्तात्प्रदक्षिणवदुदकक्षेपणम्'—ॐ नमो भगवते वासुदेवाय ॥ 'पूरकादिप्राणायामाः'—ॐ भूः० इत्यारभ्य स्वरोम् इत्यन्तम् ॥ 'हृदिपवित्रकरणम्'—ॐ विष्णुर्विष्णुः० इत्यारभ्य शुचिः पर्यन्तम् ॥ 'सङ्कल्पः'—ममोपात्तदुरितक्षयद्वारा श्रीविष्णुप्रीत्यर्थं सायंसन्ध्योपासनमहं करिष्ये ॥ 'भूप्रार्थना'—पृथिवीत्यस्य० इत्यारभ्य चासनमित्यन्तम् ॥ 'अभिषेकः'—ॐ भूः० इत्यारभ्य सत्यं पुनातु इत्यन्तम् ॥ 'अम्बुप्राशनम्'—अग्निश्चमेति नारायणऋषिः अग्निर्देवता अनुष्टुप् छन्दः अम्बुप्राशने विनियोगः—ॐ अग्निश्च मामन्युश्च मन्युपतयश्च मन्युकृतेभ्यः । पापेभ्यो रक्षन्ताम् । यदह्ना पापमकार्षं । मनसा वाचा हस्ताभ्याम् । पद्भ्यामुदरेण शिश्ना । अहस्तदवलुम्पतु । यत्किञ्चित् दुरितं मयि । इदमहं माममृतयोनौ । सत्ये ज्योतिषि जुहोमि स्वाहा ॥ 'द्विराचमनम्'—ॐ केशवाय० इत्यारभ्य माधवाय नमः स्वाहा इत्यन्तम् ॥ 'हस्तप्रक्षालनम्'—ॐ गोविन्दाय नमः ॥ 'मार्जनम्'—आपो हिष्ठेति० इत्यारभ्य यथाचन इत्यन्तम् ॥ 'जलावग्रहणम्'—सुमित्रिया० इत्यारभ्य द्विष्मः इत्यन्तम् ॥ 'अघमर्षणम्'—द्रुपदादिव० इत्यारभ्य मैनसः इत्यन्तम् ॥ 'पापपुरुषनिरसनम्'—ॐ ऋतं च सत्यं० इत्यारभ्य मथोस्वः इत्यन्तम् । 'अर्घ्यम्'—( गायत्रीमन्त्रेणार्घ्यत्रयं दद्यात् )—यथा—ॐ भूर्भुवः स्वः । ॐ तत्सवि० विष्णुस्वरूपिणे सूर्यनारायणाय नमः इदमर्घ्यं दत्तं न मम ॥ ॐ भूर्भुवः स्वः । ॐ तत्सवि० वि० इ० ॥ ॐ भूर्भुवः स्वः । ॐ तत्सवि० वि० इ० ॥ 'आचम्य प्राणानाय-

म्य' ॥ 'सूर्योपस्थानम्'—उद्वयमुदुत्य० इत्यारभ्य शतात् इत्यन्तम् ॥ 'सरस्वत्यावाहनम्'—वृद्धां सरस्वतीं कृष्णां पीतवस्त्रां चतुर्भुजाम् । शङ्खचक्रगदापद्महस्तां गरुडवाहिनीम् । सामवेदकृतोत्सङ्गां सर्वलक्षणसंयुताम् । वैष्णवीं विष्णुदैवत्यां विष्णुलोकनिवासिनीम् । आवाहयाम्यहं देवीमायान्तीं विष्णुमण्डलात् । आगच्छ वरदे देवि त्र्यक्षरे विष्णुवादिनि । सरस्वति च्छन्दसां मातर्विष्णुयोनि नमोऽस्तु ते ॥ तेजोसी० इत्यारभ्य यजनमसि इत्यन्तम् ॥ 'सरस्वत्युपस्थानम्'—तुरीयपदस्य० इत्यारभ्य सावदोम् इत्यन्तम् ॥ 'गायत्रीजपः'—प्रणवस्य० इत्यारभ्य ॐ तत्सवि० इत्यन्तम् ॥ 'जपान्ते षडङ्गन्यासाः'—ॐ अङ्गुष्ठाग्रे० इत्यारभ्य माधवमित्यन्तम् ॥ 'सूर्यप्रदक्षिणा'—विश्वतश्च० इत्यारभ्य एक÷ इत्यन्तम् ॥ 'दिग्देवतानां नमस्कारः'—पूर्वे—इन्द्राय० इत्यारभ्य अनन्ताय नमः इत्यन्तम् ॥ 'जपनिवेदनम्'—देवागातुविद० इत्यारभ्य सङ्ख्याकेन पर्यन्तम् ॥ सायंसन्ध्याङ्गभूतगायत्रीमन्त्रजपाख्येन कर्मणा विष्णुस्वरूपी श्रीसूर्यनारायणः प्रीयतां न मम ॥ 'गोत्रोच्चारणं तथा अभिवादनम्'—अमुकगोत्रो० इत्यारभ्य शर्माऽहमित्यन्तम् ॥ भोवाहुल्यगोत्रधारिणि विष्णुरूपे सरस्वति त्वामभिवादयामि । भोवैश्वानर० इत्यारभ्य प्रियवादिनि इत्यन्तम् ॥ 'प्रार्थना'—आकाशा० इत्यारभ्य तमच्युतमित्यन्तम् ॥ 'अर्पणम्'—अनेन सायंसन्ध्योपासनाख्येन कर्मणा श्रीभगवान् विष्णुस्वरूपीपरमेश्वरः प्रीयतां न मम ॥ 'शिखामुक्तिः—ब्रह्मपाश० इत्यारभ्य करोम्यहम् इत्यन्तम् ॥ 'शिखाबन्धनम्'—तूष्णीम् ॥ 'सन्ध्याभूमृत्तिकावन्दनम्'—ॐ भूर्भुवः स्वः० इत्यारभ्य ॐ इत्यन्तम् ॥ ॐ विष्णवे नमः । ॐ विष्णवे नमः । ॐ विष्णवे नमः ॥ इति संक्षेपतः सायंसन्ध्याप्रयोगः ॥

४६६. अथ 'सायंपञ्चोपचारपूजाप्रयोगः'–(आचम्य प्राणानायम्य) 'सङ्कल्पः'—सद्यः ममाऽऽत्मनः श्रुतिस्मृतिपुराणोक्तफलप्राप्त्यर्थं

(१) अत्र संक्षेपेण दर्शिता मन्त्राः श्लोका वा संक्षेपतः प्रातःसन्ध्याप्रयोगे द्रष्टव्याः । (२) अत्र संक्षेपेण दर्शिता मन्त्राः श्लोका वा देवपूजाप्रयोगे द्रष्टव्याः ॥ (३) देवपूजाप्रयोगवत् ज्ञेया ॥

ॐ भूर्भुवः स्वः अमुकपञ्चायतनदेवताप्रीत्यर्थं पञ्चोपचारपूजनमहं करिष्ये ॥ 'गन्धम्'—श्रीखण्डं च० )—ॐ तं यज्ञ० । १ $\frac{९}{३१}$ ॥ ॐ भू० अ० पं० गन्धं समर्पयामि ॥ 'पुष्पम्'—(माल्यादि०)—ॐ यत्पुरुषं० । २ $\frac{१०}{३१}$ ॥ ॐ भू० अ० प० पुष्पाणि स० ॥ 'धूपम्'—( वनस्प० )—ॐ ब्राह्मणो० । ३ $\frac{११}{३१}$ ॥ ॐ भू० अ० प० धूपं स० ॥ 'दीपम्'—( तैलं चवर्तिसं० ) ॐ चन्द्रमा० । ४ $\frac{१२}{३१}$ ॥ ॐ भू० अ० प० दीपं दर्शयामि ॥ 'नैवेद्यम्'—( शर्कराघृ० )—ॐ नाभ्याऽआ० । ५ $\frac{१३}{३१}$ ॥ ॐ भू० अ० प० नैवेद्यं समर्पयामि ॥ 'अर्पणम्'—अनेन पञ्चोपचारपूजनकृतेन श्री-अ० प० प्रीयतां न मम ॥ 'शङ्खोदकेन'—स्वशरीरं मार्जयेत् । 'गन्धतिलकं'—स्वयं कुर्यात् ॥ इति सायं पञ्चोपचारपूजाप्रयोगः ॥

४६७. 'स्त्रीपुरुषयोर्व्यवायः.' पारस्करगृह्यसूत्रे—चतुर्थ्यामपररात्रेऽभ्यन्तरतोऽग्निमुपसमाधाय दक्षिणतो ब्रह्माणमुपवेश्योत्तरतऽउदपात्रं प्रतिष्ठाप्य स्थालीपाकꣳ श्रपयित्वाज्यभागाविष्ट्वाज्याहुतीर्जुहोत्यग्नेःप्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकामऽउपधावामि यास्यै पतिघ्नी तनूस्तामस्यै नाशय स्वाहा । वायोः प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकामऽउपधावामि यास्यै प्रजाघ्नी तनूस्तामस्यै नाशय स्वाहा । सूर्यप्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकामऽ उपधावामि यास्यै पशुघ्नी तनूस्तामस्यै नाशय स्वाहा । चन्द्रप्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकामऽ उपधावामि यास्यै गृहघ्नी तनूस्तामस्यै नाशय स्वाहा । गन्धर्वप्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकामऽउपधावामि यास्यै यशोघ्नी तनूस्तामस्यै नाशय स्वाहेति स्थालीपाकस्य जुहोति प्रजापतये स्वाहेति हुत्वा हुत्वैतासामाहुतीनामुदपात्रे सꣳस्रवान्त्समवनीय ततऽएनां मूर्द्धन्यभिषिञ्चति या ते पतिघ्नी प्रजाघ्नी पशुघ्नी गृहघ्नी यशोघ्नी निन्दिता

तनूर्जारघ्नीं ततऽएनां करोमि सा जीर्य त्वं मया सहासावित्यथैनाः स्थालीपाकं प्राशयति प्राणैस्ते प्राणान्त्सन्दधाम्यस्थिभिरस्थीनि माꣳसैर्माꣳसानि त्वचा त्वचमिति । तस्मादेवंविच्छ्रोत्रियस्य दारेण नोपहासमिच्छेदुत ह्येवंवित्परो भवति तासुदुह्य यथर्तुप्रवेशनं यथा-कामी वा काममाविजनितोः सम्भवामेति वचनादथास्यै दक्षिणाꣳस-मधिहृदयमालभते यत्ते सुशीमे हृदयं दिवि चन्द्रमसि श्रितम् । वेदाहं तन्मां तद्विद्यात्पश्येम शरदः शतं जीवेम शरदः शतꣳ शृणुयाम शरदः शतमित्येवमतऽऊर्ध्वम् । ११ ॥ अथर्तुमतीं जायामभिगच्छे-त्पिण्डपितृयज्ञेन यजेत मध्यमपिण्डं पत्नी प्राश्नाति पुत्रकामा ततऽए-तामाहुतिं जुहोत्याधत्त पितरऽइत्यलङ्कारमवजिघ्रत्यायन्तु नऽ इति जपत्येवमथर्तुमती जाया हृदयमालभ्य पूर्ववत्सव्येन पाणिनोपस्थम-भिमृशति भगप्रणेतरिति प्रागुतेदानीमिति रेतोमूत्रमिति सन्धत्ते गाय-त्रेणेति प्रतिमन्त्रं मन्थति पुत्रकामोऽभिगच्छेन्नित्यम् । १३ ॥ अथ गर्भाधानꣳस्त्रियाः पुष्पवत्याश्चतुरहादूर्ध्वꣳस्नात्वा विरजायास्तस्मि-न्नेव दिवाऽआदित्यं गर्भमित्यादित्यमवेक्षते गृहे वा स्नापयित्वा ताम-भिगच्छेदिति श्रुतेस्तस्मिन्प्रजायाः सम्भवकाले निशायां कुर्याद्यदि दिवा मैथुनं वर्जयेत् क्लीवाऽअल्पवीर्याऽअल्पायुषाश्च प्रसूयन्ते त-स्मादेतद्वर्जयेत्प्रजाकामो गृही । श्रुतिस्मृत्यविरोधाभ्यां दक्षिणेन पा-णिनाऽऊरू प्रसार्य प्रजास्थानमभिमृशति पूषा भगꣳसविता मे द-दातु रुद्रः कल्पयति ललामगुं विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिꣳशतु । आसिञ्चतु प्रजापतिर्धाता गर्भं दधातु ते । गर्भं धेहि सि-नीवालि गर्भं धेहि पृथुष्टुके । गर्भं तेऽअश्विनौ देवावाधत्तां पुष्कर-स्रजाविति सꣳसृजेथास्तेजो वैश्वानरो दद्याद्ब्रह्माणमामन्त्रयते ब्रह्मा गर्भं दधात्विति प्राङ्मुख उदङ्मुखो घोपविष्टो मन्थेद्रेतो मूत्रमिति चैके स्रावणं कुर्यात् । १४ ॥ सा यदि गर्भं न दधीत सिꣳह्याः श्वेतपुष्पा याऽउपोष्य पुष्पेण मूलमुत्थाप्य चतुर्थेऽहनि स्नातायां निशायामु-दपेषं पिष्ट्वा दक्षिणस्यां नासिकायामासिञ्चतीयमोषधी त्रायमाणा सहमाना सरस्वती । अस्याऽअहं बृहत्याः पुत्रः पितुरिव नाम जग्रभ-मिति । १५ ॥

४६८. 'स्त्रीपुरुषयोग्यायोग्यविचारः.' याज्ञवल्क्यः—अविप्लुतब्रह्मचर्यो लक्षण्यां स्त्रियमुद्वहेत् । अनन्यपूर्विकां कान्तामसपिण्डां यवीयसीम् । अरोगिणीं भ्रातृमतीमसमानार्षगोत्रजाम् । पञ्चमात्सप्तमादूर्ध्वं मातृतः पितृतस्तथा ॥ दशपुरुषविख्याताच्छ्रोत्रियाणां महाकुलात् । स्फीतादपि न सञ्चारि रोगदोषसमन्वितात् ॥ एतैरेव गुणैर्युक्तः सवर्णः श्रोत्रियो वरः । यत्नात्परीक्षितः पुंस्त्वे युवा धीमान्जनप्रियः ॥

४६९. 'प्रजोत्पादने स्त्रीपुरुषयोग्यायोग्यविचारः' सुश्रुते भगवान् धन्वन्तरिः—अथास्मै पञ्चविंशतिवर्षाय द्वादशवर्षां पत्नीमावहेत् । पित्र्यधर्मार्थकामप्रजाः प्राप्स्यतीति ॥ किंच—तद्वर्षाद्द्वादशात्काले वर्तमानमसृक् पुनः । जरापक्वशरीराणां याति पञ्चाशता क्षयम् ॥ ऊनषोडशवर्षायामप्राप्तः पञ्चविंशतिम् । यद्याधत्ते पुमान्गर्भं कुक्षिस्थः स विपद्यते ॥ जातो वा न चिरञ्जीवेज्जीवेद्वा दुर्बलेन्द्रियः । तस्मादत्यन्तबालायां गर्भाधानं न कारयेत् । अतिवृद्धायां दीर्घरोगिण्यामन्येन वा विकारेणोपसृष्टायां गर्भाधानं नैव कुर्वीत । पुरुषस्याप्येवंविधस्य त एव दोषाः सम्भवन्ति ॥

४७०. 'ऋतुमतीस्त्रीधर्माः.' धन्वन्तरिः—ततः स्त्रियं सुस्नातां चतुर्थेऽहनि धौतवाससमलङ्कृतां कृतमङ्गलस्वस्तिवाचनां भर्ता पश्येत् । तत्र—रात्रौ—परस्परोपकारात्परस्परानुग्रहात्परानुप्रवेशाच्च । ततः स्त्रीपुंसयोगे तेजःशरीराद्वायुरुदीरयति । ततस्तेजोऽनिलसन्निपाताच्छुक्रं च्युतं योनिमभिप्रतिपद्यते । संसृज्यते चार्तवेन । ततोऽग्निसोमसंयोगात्संसृज्यमानो गर्भो गर्भाशयमनुप्रतिपद्यते । आचारार्के—धौतवस्त्रं च ताम्बूलं संयोगे च सुखावहम् । भर्तुः पादौ नमस्कृत्य पश्चाच्छय्यां समाविशेत् । संस्मृत्य परमात्मानं पत्न्या स्त्रङ्गे प्रसारयेत् । रेतः सिञ्चेत्ततो योन्यां तस्माद्गर्भं बिभर्त्विति ॥ उज्ज्वलायाम्—उपचारक्रिया केलिः स्पर्शो भूषणवाससाम् । एकशय्यासनक्रीडाश्चुम्बनालिङ्गने तथा ॥ कोपो रोषश्च निर्भर्त्सः सम्भोगे च न दोषभाक् । कञ्चुकेन समं नारी भर्तुः सङ्गं समाचरेत् । त्रिभिर्वर्षैश्च मध्ये वा विधवा भवति ध्रुवम् ॥ उक्तं च शम्भुरहस्ये—गवां पश्चाद्द्विजस्याङ्घ्रिर्योगिनां स्त्रीकवेर्वचः । परं शुचितमं विद्यान्मुखं स्त्रीवह्निवाजिनाम् ॥

४७१. 'पुंस्त्रीगर्भोत्पत्तिविचारः.' धन्वन्तरिः—तत्रैव—शुक्रबाहुल्यात्पुमानार्तवबाहुल्यात्स्त्री साम्यादुभयोर्नपुंसकमिति । ऋतुस्तु द्वादशरात्राद्भवति नष्टार्तवः इति । विकल्प्येवं चतुर्थ्यां षष्ठ्यामा-

२०

ष्टम्यां दशम्यां द्वादश्यां चोपेयादयं पुत्रकामः । अतःपरं पञ्चम्यां सप्तम्यां नवम्यामेकादश्यां च स्त्रीकामः । त्रयोदशीप्रभृतयो निन्द्याः ॥

४७२. 'गर्भिणीलिङ्गानि.' धन्वन्तरिः—श्रमो ग्लानिः पिपासा सक्थिसदनं शुक्रशोणितयोरवबन्धः स्फुरणं च योनेः कृष्णमुखतारोमराज्युद्गमस्तथा । अक्षिपक्ष्माणि चाप्यस्याः सम्मील्यन्ते विशेषतः । अकामतश्छर्दयति गन्धादुद्विजते शुभात् । प्रसेकः सदनं चाऽपि गर्भिण्या लिङ्गमुच्यते ॥

४७३. 'गर्भिणीकर्माणि.' धन्वन्तरिः—तदा प्रभृत्येव व्यायामं व्यवायमपतर्पणमतिकर्षणं दिवास्वप्नं रात्रिजागरणं शोकं यानावरोहणं भयमुत्कटकासनं चैकान्ततः स्नेहादिक्रियां शोणितमोक्षणं चाऽकाले वेगविधारणं च न सेवेत ॥

४७४. 'गर्भिणी अकर्मकरणात्परिणामः.' धन्वन्तरिः—दोषाभिघातैर्गर्भिण्या यो यो भागः प्रपीड्यते । स स भागः शिशोस्तस्य गर्भस्थस्य प्रपीड्यते ॥

४७५. 'ऋतुस्नातायास्तु न सेवनाद्दोषः.' पराशरः—ऋतुस्नातां तु या नारी भर्तारं नोपसर्पति । सा मृता नरकं याति विधवा च पुनः पुनः ॥ ऋतौ स्नातां तु यो भार्यां सन्निधौ नोपगच्छति । घोरायां भ्रूणहत्यायां भुज्यते नात्र संशयः ॥ अदुष्टापतितां भार्यां यौवने यः परित्यजेत् । सप्तजन्म भवेत्स्त्रीत्वं वैधव्यं च पुनः पुनः ॥ याज्ञवल्क्यः—लोकानन्त्यं दिवः प्राप्तिः पुत्रपौत्रप्रपौत्रकैः । यस्मात्तस्मात्स्त्रियः सेव्या भर्तव्याश्च सुरक्षिताः ॥ षोडशर्तुनिशाः स्त्रीणां तासु युग्मासु संविशेत् । ब्रह्मचार्येव पर्वाण्याद्याश्चतस्रस्तु वर्जयेत् ॥

४७६. 'स्त्रीणां मैथुनात्प्राग्विधिः.' धन्वन्तरिः—लब्धगर्भायाश्चैतेष्वहःसु लक्ष्मणावटशृङ्गासहदेवाविश्वदेवानामन्यतमां क्षीरेणाभिषुत्य त्रींश्चतुरो वा बिन्दून्दद्याद्दक्षिणे नासापुटे पुत्रकामायै न च तान्निष्ठीवेत् । उक्तंच—आहाराचारचेष्टाभिर्यादृशीभिः समन्वितौ । स्त्रीपुंसौ समुपेयातां तयोः पुत्रोऽपि तादृशः ॥ परश्च—कर्मणा चोदितं जन्तोर्भवितव्यं पुनर्भवेत् । यथा तथा दैवयोगाद्दौर्हृदं जनयेद्धृदि ॥

४७७. 'वर्ज्यस्त्री.' धन्वन्तरिः—स्तोकां तु न स्त्रियं गच्छेन्नातुरां च रजस्वलाम् । नाऽतिबालां न कुपितामप्रशस्तां च गर्भिणीम् ॥ शिवसंहितायां—मासे षष्ठे सप्तमे वाऽष्टमे वा प्राप्ते पत्न्या नैव कुर्यात्कदाचित् । होमं यानं देवयात्रां तथैव तस्या हस्तेनाशनं विप्रपुण्यम् ॥

४७८. 'रतिवर्ज्यदिनानि.' मनुः—तासामाद्याश्चतस्रस्तु निन्दितैकादशी तथा। त्रयोदशी च शेषास्तु प्रशस्तास्त्वत्र रात्रयः। अमावास्याष्टमी चैव पौर्णमासी चतुर्दशी। ब्रह्मचारी भवेन्नित्यमप्यृतौ स्नातको द्विजः॥

४७९. 'अष्टाङ्गमैथुनम्.' वाचस्पतौ—स्मरणं कीर्तनं केलिः प्रेक्षणं गुह्यभाषणम्। सङ्कल्पोऽध्यवसायश्च क्रियानिष्पत्तिरेव च। एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः॥ दक्षोक्तेः—स्त्रीणां स्मरणादिषु अष्टसु। यद्भावो ब्रह्मचर्यम्॥

४८०. 'शयनकालः.' याज्ञवल्क्यः—उपास्य पश्चिमां सन्ध्यां हुत्वाग्नींस्तानुपास्य च। भृत्यैः परिवृतो भुक्त्वा नातितृप्याथ संविशेत्॥ धन्वन्तरिः—पूर्वदेवानुभूतांस्तु भूतात्मा स्वपतः प्रभुः। रजोयुक्तेन मनसा गृह्णात्यर्थान् शुभाशुभान्॥ यमः—पूर्वरात्रे व्यतीते तु सञ्चछेद्रतिमन्दिरम्। पादौ प्रक्षालयेत्पूर्वं पश्चाच्छय्यां समाविशेत्॥

४८१. 'शयने भूमिः.' मात्स्ये—शुचिदेशं विविक्तं तु गोमयेनोपलेपयेत्। वैदिकैर्गारुडैर्मन्त्रैरभिमन्त्र्य स्वपेत्ततः॥ माङ्गल्यं पूर्णकुम्भं च शिरःस्थाने निधापयेत्। रात्रिसूक्तं जपन् रात्रौ रात्रिक्षेमो भवेन्नरः॥

४८२. 'शय्याविचारः.' शिल्पशास्त्रे—चतुराशीतिपर्वाणि दैर्घ्येण परिकल्पयेत्। षष्टयङ्गुलानि विस्तारं मञ्चकं हस्तसंमितम्॥ एवं शय्या विधातव्या सर्वेषां शयनोचिता। मानाधिक्ये दरिद्रः स्यान्मानहीने सुखक्षयः॥

४८३. 'अयोग्यशय्या.' विष्णुपुराणे—न विशालां न वा भग्नां नासमां मलिनां न च। न च जन्तुमयीं शय्यामधितिष्ठेदनास्तृताम्॥

४८४. 'पर्यङ्कोऽप्युक्तस्तत्रैव'—आयामः सप्ततालः स्याच्चतुस्तालं तु विस्तृतः। द्वितालमुन्नतो ज्ञेय एतत्पर्यङ्कलक्षणम्॥

४८५. 'तालादिप्रमाणम्.'—विष्णुपुराणे—अङ्गुष्ठादिकनिष्ठान्तं भवेन्मानचतुष्टयम्। प्रादेशतालगोकर्णा वितस्तिस्तु यथाक्रमम्॥

४८६. 'निषिद्धशय्यागारम्.' मार्कण्डेयः—नार्द्रवासाश्च नग्नश्च नोत्तरापरमस्तकः। नाकाशे सर्वतः शून्ये न च चैत्यद्रुमे तथा॥ गार्ग्यः—शून्यालये स्मशाने च एकवृक्षे चतुष्पथे। महादेवगृहे वापि मातृवेश्मनि न स्वपेत्॥ न यक्षनागायतने स्कन्दस्यायतने तथा। कूलच्छायासु च तथा शर्करालोष्ठपांसुषु॥ न स्वपेच्च तथा भूमौ विना दीक्षां कथञ्चन। धान्यगोधनविप्राणां गुरूणां च तथोपरि॥ मृतदन्तमये चैव विद्युद्दग्धे पलाशजे। न शयीत नरो धान्ये शयने पञ्चदारुजे॥

४८७. 'पञ्च दारूणि.'—मार्कण्डेयः—पञ्च दारूणि चोक्तानि चूतजम्बूद्रुमौ तथा । अश्मपीठोत्थितश्चैव स्वेन सिक्तस्तरुस्तथा । करिभग्नस्तथा चैव न शयीत क्वचिन्नरः ॥

४८८. 'उक्तशय्यादीनि.' धन्वन्तरिः—शयनासनयानानि मनोज्ञानि मृदूनि च । निद्रानाशे तु कुर्वीत तथान्यान्यपि बुद्धिमान् ॥

४८९. 'शयने दिग्विचारः.' मार्कण्डेयः—प्राक्शिराः शयने विन्द्याद्धनमायुश्च दक्षिणे । पश्चिमे प्रबला चिन्ता हानिर्मृत्युरथोत्तरे ॥ गार्ग्यः—स्वगृहे प्राक्शिराः शेते श्वाशुर्ये दक्षिणाशिराः । प्रत्यक्शिरा प्रवासे तु न कदाचिदुदक्शिराः ॥ विष्णुपुराणे—प्राच्यां दिशि शिरः शस्तं याम्यायामथवा नृप । सदैव स्वपतः पुंसो विपरीतं तु रोगदम् ॥

४९०. 'दिवाशयने योग्याः.' धन्वन्तरिः—दिवास्वप्नं च तृट्शूलहिक्काऽजीर्णातिसारिणाम् ॥ (अन्यैस्तु दिवास्वप्नं वर्ज्यम्) ॥

४९१. 'शयने आवश्यककर्माणि.' मार्कण्डेयः—रात्रिसूक्तं जपन्स्मृत्वा देवांश्च सुखशायिनः । नमस्कृत्वाव्ययं विष्णुं समाधिस्थं स्वपेन्निशि ॥ दक्षः—निद्रासमयमासाद्य ताम्बूलं वदनात्त्यजेत् । पर्यङ्कात्प्रमदां भालात्पुण्ड्रं पुष्पाणि मस्तकात् ॥ गार्ग्यः—यानि कानि च पुष्पाणि यत्किञ्चिदनुलेपनम् । अलक्ष्मीपरिहारार्थं नित्यं कुरु युधिष्ठिर ॥ अन्यच्च—उपानहौ वेणुदण्डमम्बुपात्रं तथैव च । ताम्बूलादीनि सर्वाणि समीपे स्थापयेन्निशि ॥

४९२. 'शयनात्प्राक्स्मरणे योग्याः.'—ग्रन्थान्तरे—जले रक्षतु वाराहः स्थले रक्षतु वामनः । अटव्यां नारसिंहश्च सर्वतः पातु केशवः ॥ जले रक्षतु नन्दीशः स्थले रक्षतु भैरवः । अटव्यां वीरभद्रश्च सर्वतः पातु शङ्करः ॥ अर्जुनः फाल्गुनो जिष्णुः किरीटी श्वेतवाहनः । वीभत्सुर्विजयः कृष्णः सव्यसाची धनञ्जयः ॥ तिस्रो भार्याः कफल्लस्य दाहिनी मोहिनी सती । तासां स्मरणमात्रेण चोरो गच्छति निष्फलः ॥ कफल्लकः । कफल्लकः । कफल्लकः ॥

४९३. 'सुखशायिनां स्मरणम्.' गोभिलः—अगस्तिर्माधवश्चैव मुचुकुन्दो महाबलः । कपिलो मुनिरास्तीकः पञ्चैते सुखशायिनः ॥ हारीतः—नर्मदायै नमः प्रातर्नर्मदायै नमो निशि । नमोऽस्तु नर्मदे तुभ्यं त्राहि मां विषसर्पतः ॥ सर्पापसर्प भद्रं ते दूरं ग

(१) रात्रौ वामकुक्षिशयनं नित्यमेव कर्तव्यम् ॥

च्छ महाविष । जन्मेजयस्य यज्ञान्ते आस्तीकवचनं स्मर । आस्तीकवचनं श्रुत्वा यः सर्पो न निवर्त्तते । शतधा भिद्यते मूर्ध्नि शिंशवृक्षफलं यथा ॥ एतान् गारुडमन्त्रांस्तु निशायां पठते यदि । मुच्यते सर्वबाधाभ्यो नात्र कार्या विचारणा ॥ ऋग्वेदीयशान्तिपाठे— स्वप्नस्वप्नाधिकरणे सर्वन्निष्वापयाजिनम् । आसूर्यमन्यान्त्स्वापयन्व्युष १ळहं जाग्रियादहम् ॥ अजगरोनामसर्पः सर्पिरविषोमहान् । तस्मिन्हि सर्पः सुधितस्तेनत्वा स्वापयामसि ॥ सर्पः सर्पो अजगरः सर्पिरविषो महान् । यस्य शुष्कात्सिन्धवस्तस्य गाधमशीमहि ॥ कालिको नामसर्पो नवनागसहस्रबलः । यमुनाह्रदेह सो जातो ३ यो नारायणवाहनः । यदि कालिकदूतस्य यदि काः कालिकाद्भयात् ॥ जन्मभूमिमतिक्रान्तो निर्विषो याति कालिकः । आयाहीन्द्र पथिभिरीळितेभिर्यज्ञमिमन्नो भागधेयं जुषस्व ॥ तृप्तां जहुर्मातुळस्येव शेषां भागस्ते पैतृष्वसेयीवपामिव । यशस्करं बलवन्तं प्रभुत्वंतमेव राजाधिपतिर्बभूव ॥ सङ्कीर्णनागाश्वपतिर्नराणां सुमङ्गल्यं सततं दीर्घमायुः । कर्कोटकोनामसर्पो यो दृष्टीविष उच्यते । तस्य सर्पस्य सर्पत्वं तस्मै सर्प नमोऽस्तुते । अतिकालिकरौद्रस्य विष्णुसोमेन भामिनि । यमुनन्तदिकालिकं ते विष्णुस्तोत्रमनुस्मरन् २० ॥ मा बिभेर्न मरिष्यसि परित्वा पामि सर्वतः । अनेन हन्मि वृश्चिकमहं दण्डेनागतम् ॥ आदित्यरथवेगेन विष्णोर्बाहुबलेन च । गरुडपक्षनिपातेन भूमिं गच्छ महायशाः ॥ गरुडस्य जातमात्रेण त्रयोलोकाः प्रकम्पिताः । प्रकम्पिता मही सर्वा सशैलवनकानना ॥ ग-

गतं नष्टचन्द्रार्कं ज्योतिषं न प्रकाशते । देवताभयभि-
न्नाता मारुतो न प्रवायति मारुतो न प्रवायत्योंनमः॥
भोसर्प भद्र भद्रं ते दूरं गच्छ महायशाः । जन्मेजयस्य
यज्ञान्ते आस्तीकवचनं स्मर ॥ आस्तीकवचनं श्रुत्वा
यः सर्पो न निवर्तते । शतधा भिद्यते मूर्ध्नि शिंशवृक्ष-
फलं यथा ॥ अगस्त्यं माधवं चैव मुचुकुन्दो महामुनिः।
कपिलोमुनिरास्तीकः पञ्चैते सुखशायिनः ॥ नर्मदायै
नमः प्रातर्नर्मदायै नमो निशि । नमोऽस्तु नर्मदे तुभ्यं
त्राहि मां विषसर्पतः ॥ यो जरत्कारुणा जातो जरत्क-
न्यां महायशाः । तस्य सर्पोऽपि भद्रं ते दूरं गच्छ म-
हायशाः॥ तस्य सर्पस्य सर्पत्वं तस्मै सर्प नमोऽस्तु ते।२१॥
आस्तिकः । आस्तिकः । आस्तिकः ॥

४९४. अथ 'रात्रिस्मरणसूक्तम्.'—हरिः—ॐ आरात्रि
पार्थिवर्ठ० रजः पितुरं प्रायि धामभिः । दिवः सदाᳪसि
बृहती वितिष्ठस आत्वेषं वर्त्तते तमः । २ $\frac{32}{34}$ ॥ उषस-
श्चित्रमाभरास्मभ्यं वाजिनीवति । येन तोकञ्च तनयञ्च
धामहे । २ $\frac{33}{34}$ ॥ इति रात्रिस्मरणसूक्तम् ॥

४९५. 'आचारसम्पन्ने फलश्रुतिः.'—एवं यथोक्तविधिना नित्या-
चारसम्पन्नो ब्राह्मण इहैव ब्रह्मर्षित्वमुपेत्यान्ते ब्रह्मसायुज्यमाप्नोति॥ आचारस-
म्पन्नस्य ब्रह्मर्षित्वमाह ॥ यथा—भगवान् धन्वन्तरिः—जपव्रतब्रह्मचर्य-
होमाध्ययनसेविनम् । ज्ञानविज्ञानसम्पन्नमृषिसत्वं नरं विदुः ॥ ॐ तत्सत् ।
ॐ नमो याज्ञवल्क्याय । ॐ नमो याज्ञवल्क्याय । ॐ नमो याज्ञ-
वल्क्याय ॥ इति श्रीपुरन्दरोपाह्वविठ्ठलात्मजनारायणेन विरचि-
तायां वाजसनेयाह्निकसूत्रावल्यां अष्टमभागकृत्यानि समाप्तानि ॥

( १ ) एतत्सूक्तं शयनसमये शयनात्प्राक् हस्तौ पादौ प्रक्षाल्याचम्य ( तूष्णीम् )
पठेत् ॥ ( २ ) इदं सूक्तं पठित्वानन्तरं सुखेन निद्रां कुर्यात् ॥

# अथ स्त्रीणामाह्निकाचारः ॥

४९६. 'सुवासिनीनित्यकृत्यम्.' व्याससंहितायाम्—पत्युः पूर्वं समुत्थाय देहशुद्धिं विधाय च । उत्थाप्य शयनाद्यानि कृत्वा वेश्मविशोधनम् ॥ मार्जनैर्लेपनैः प्राप्य साग्निशालं स्वमङ्गनम् । शोधयेदग्निकार्याणि स्निग्धान्युष्णेन वारिणा ॥ प्रोक्षणैरिति तान्येव यथास्थानं प्रकल्पयेत् । द्वन्द्वपात्राणि सर्वाणि न कदाचिद्वियोजयेत् ॥ मृद्भिश्च शोधयेच्चुल्लीं तत्राग्निं विन्यसेत्ततः । स्मृत्वा नियोगपात्राणि रसांश्च द्रविणानि च ॥ वस्त्रालङ्काररत्नानि प्रदत्तान्येव धारयेत् । मनोवाक्कर्मभिः शुद्धा पतिदेशानुवर्तिनी ॥ ततोऽन्नसाधनं कृत्वा पतये विनिवेद्य तत् । वैश्वदेवकृतैरन्नैर्भोजनीयांश्च भोजयेत् ॥ पुनः सायं पुनः प्रातर्गृहशुद्धिं विधाय च । कृतान्नसाधना साध्वी सुभृशं भोजयेत्पतिम् ॥ आस्तीर्य साधुशयनं ततः परिचरेत्पतिम् ॥

४९७. 'सुवासिनीकर्म.' सौभाग्यकल्पद्रुमे—बुध्वा ब्राह्मे मुहूर्ते निजपतिचरणौ सम्प्रणम्यास्यमस्य प्रेक्ष्य प्रेम्णाथ नैजं शुभमुकुरतले भूमिमभ्यर्च्य पत्नी । प्रातःस्मृत्यादि कृत्वा पतिपरिचरणं संविधायैव वेणीं संरच्याधाय भाले तिलकमथ गलाऽधो निमज्जेत्सभूषा ॥ स्कान्दे—प्रसुप्तं च सुखासीनं रममाणं यदृच्छया । आतुरेष्वपि कालेषु पतिं नोत्थापयेत्क्वचित् ॥ हरिद्रां कुङ्कुमं चैव सिन्दूरं कज्जलं तथा । कूर्पासकं च ताम्बूलं माङ्गल्याभरणं शुभम् ॥ केशसंस्कारकबरीकरकर्णविभूषणम् । भर्त्तुरायुष्यमिच्छन्ती दूरयेन्न क्वचित्सती ॥ नियमोदकवर्हींश्च पत्रपुष्पादिकं च यत् ॥ सेवेत भर्त्तुरुच्छिष्टमिष्टमन्नं फलादिकम् ॥ तीर्थस्नानार्थिनी नारी पतिपादोदकं पिवेत् । शङ्करादपि विष्णोर्वा पतिरेकोऽधिकः स्त्रियाः ॥

४९८. 'स्त्रीधर्मः.' श्रीमद्भागवते—स्त्रीणां च पतिदेवानां तच्छुश्रूषानुकूलता । तद्बन्धुष्वनुवृत्तिश्च नित्यं तद्व्रतधारणम् ॥ संमार्जनोपलेपाभ्यां सेकमण्डलवर्तनैः । स्वयं च मण्डिता नित्यं परिमृष्टपरिच्छदा ॥ कामैरुच्चावचैः साध्वी प्रश्रयेण दमेन च । वाक्यैः सत्यैः प्रियैः प्रेम्णा काले काले भजेत्पतिम् ॥ सन्तुष्टाऽलोलुपा दक्षा धर्मज्ञा प्रियसत्यवाक् । अप्रमत्ता शुचिः स्निग्धा पतिं त्वपतितं भजेत् ॥ या पतिं हरिभावेन भजेच्छ्रीरिव तत्परा । हर्यात्मना हरेर्लोके पत्या श्रीरिव मोदते ॥ दुःशीलो दुर्भगो वृद्धो जडो रोग्यधनोऽपि वा । पतिः स्त्रीभिर्न हातव्यो लोकेप्सुभिरपातकी ॥

अस्वर्ग्यमयशस्यं च फल्गु कृच्छ्रं भयावहम् । जुगुप्सितं च सर्वत्र औपपत्यं कुलस्त्रियः ॥

४९९. '**स्त्रीस्वातन्त्र्यनिषेधः.**' **याज्ञवल्क्यस्मृतौ**—रक्षेत्कन्यां पिता विन्नां पतिः पुत्रास्तु वार्धके । अभावे ज्ञातयस्तेषां स्वातन्त्र्यं न क्वचित्स्त्रियाः ॥ **वसिष्ठसंहितायाम्**—पिता रक्षति कौमारे भर्ता रक्षति यौवने । पुत्राश्च स्थाविरे भावे न स्त्री स्वातन्त्र्यमर्हति ॥

५००. '**कुलयोषितां दूषणम्.**' **व्यासः**—द्वारोपवेशनं नित्यं गवाक्षेण निरीक्षणम् । असत्प्रलापो हास्यं च दूषणं कुलयोषिताम् ॥

५०१. '**रजस्वलास्त्रीकृत्यम्.**' **धन्वन्तरिः**—ऋतौ प्रथमदिवसात्प्रभृति ब्रह्मचारिणी दिवास्वप्नाञ्जनाश्रुपातस्नानानुलेपनाभ्यङ्गालङ्कारमाल्यनखच्छेदनप्रधावनहसनकथनातिशब्दश्रवणावलेखनायासान्परिहरेत् । दर्भसंस्तरशायिनीं करतलशरावपर्णान्यतमभोजिनीं हविष्याशिनीं त्र्यहं च भर्ता संरक्षेत् ॥ **किञ्च**—तत्र प्रथमदिवसे ऋतुमत्यां मैथुनगमनमनायुष्यं पुंसां भवति । यश्च तत्राधीयते गर्भः सोऽप्रसवमानो विमुच्यते प्राणैः । द्वितीयेऽप्येवं सूतिकागृहे वा । तृतीयेऽप्येवमसम्पूर्णाङ्गोऽल्पायुर्वा भवति । चतुर्थे तु सम्पूर्णाङ्गो दीर्घायुश्च भवति ॥

५०२. '**ऋतुमत्यां प्रथमदिनत्रये पुरुषसेवने दोषः.**' **धन्वन्तरिः**—**तद्यथा**—यथा नद्यां प्रतिस्रोतःप्लावि द्रव्यं प्रक्षिप्तं प्रतिनिवर्तते नोर्ध्वं गच्छति तद्वदेव द्रष्टव्यम् । तस्मान्नियमवतीं त्रिरात्रं परिहरेत् ॥ **बृहन्नारदीये नारायणः**—त्रेताप्रभृति नारीणां मासि मास्यार्तवं मुने । तदा दिनत्रयं त्यक्त्वा शुद्धा स्याद्गृहकर्मणि ॥ मैथुनं मानसं वापि वाचिकं देवतार्चनम् । वर्जयेच्च नमस्कारं देवतानां रजस्वला ॥ स्नात्वान्यं पुरुषं नारी न पश्येच्च रजस्वला । ईक्षेत भास्करं देवं ब्रह्मकूर्चं ( पञ्चगव्यं ) ततः पिबेत् ॥

५०३. '**विधवाधर्माः.**' **वृद्धहारीतसंहितायाम्**—केशरञ्जनताम्बूलगन्धपुष्पादिसेवनम् । भूषितं रङ्गवस्त्रं च कांस्यपात्रे च भोजनम् । द्विवारभोजनं चाक्ष्णोरञ्जनं वर्जयेत् सदा । स्नात्वा शुक्लाम्बरधरा जितक्रोधा जितेन्द्रिया । न कल्ककुहका साध्वी तन्द्रालस्यविवर्जिता । सुनिर्मला शुभाचारा नित्यं सम्पूजयेद्धरिम् ॥

५०४. 'विधवाऽऽचाराः.' श्रीबृहन्नारदीये नारायणः—विधवाकबरीबन्धो भर्तृबन्धाय जायते । शिरसो वपनं कार्यं तस्माद्विधवया सदा ॥ एकाहारः सदा कार्यो न द्वितीयः कदाचन । पर्यङ्कशायिनी नारी विधवा पातयेत्पतिम् । तस्माद्भूशयनं कार्यं पतिसौख्यसमीहया । नैवाङ्गोद्वर्त्तनं कार्यं ताम्बूलस्य च भक्षणम् । गन्धद्रव्यस्य सम्भोगो नैव कार्यस्तया क्वचित् । श्वेतवस्त्रं सदा धार्यमन्यथा रौरवं व्रजेत् ॥ उपवासव्रतादौ तु नित्यं कार्यं यथोदितम् । इत्येवं नियमैर्युक्ता कर्म कुर्यादनिन्दितम् ॥

५०५. 'स्त्रीणां देवतार्चनविधिः.' स्मृत्यन्तरे—स्त्रीशूद्रोऽनुपनीतश्च वेदमन्त्रान्विवर्जयेत् ॥ ( अतः स्त्रीभिः कलौ पुराणविधिना देवतार्चनादिकं कर्त्तव्यम् ॥ वैशेषिककार्यसमये देवतार्चनादौ तु पतिना सह वेदोक्तकर्मण्यपि स्त्रीणामधिकारः । स्त्रीभिर्ब्राह्मणं पुरस्कृत्य अष्टादशपुराणानि श्रोतव्यानि ) ॥

५०६. 'प्रदक्षिणाविधिः.'—स्त्रीभिः प्रदक्षिणाः कार्या विष्णुमग्निं गुरुं तथा । जितेन्द्रिया जितप्राणा नाममन्त्रं समुच्चरेत् ॥

५०७. 'स्त्रीणां धर्मपालनात्फलम्.' अन्यच्च—एते वै विधिना प्रोक्ताः स्त्रीणां धर्माः सनातनाः । ते नौकाः परमाः प्रोक्ता भवसंसारतारणे ॥

५०८. 'अथ श्रीतुलसीपूजाप्रयोगः.' 'आचमनम्'—केशवाय नमः । नारायणाय नमः । माधवाय नमः । इति पिबेत् ॥ 'हस्तप्रक्षालनम्'—गोविन्दाय नमः ( इति करं प्रक्षाल्य ) । विष्णवे नमः—( इति नेत्रयोरुदकस्पर्शनम् ) ॥ 'मङ्गलोच्चारणम्'—श्रीमन्महागणाधिपतये नमः । श्रीलक्ष्मीनारायणाभ्यां नमः । श्रीउमामहेश्वराभ्यां नमः । वाणीहिरण्यगर्भाभ्यां नमः । शचीपुरन्दराभ्यां नमः । कुलदेताभ्यो नमः । ग्रामदेवताभ्यो नमः । स्थानदेवताभ्यो नमः । वास्तुदेवताभ्यो नमः । मातापितृचरणकमलेभ्यो

---

(१) ( शुचिर्भूताभिः स्त्रीभिर्दन्तधावनानन्तरं केशान् गजदन्तकङ्कतेन प्रमार्ज्य वेणीबन्धादिकं रचयित्वा हरिद्राकुङ्कुमाद्यलङ्कारान्धृत्वा पश्चान्नित्यं तूष्णीं स्नानमाचरेत् । स्नानान्तरं धौतं वासः कञ्चुकीं च परिधाय ॥ (गतभर्तृकाभिः स्त्रीभिः केवलं शुभ्राम्बरं धाय) गृहकृत्याऽविरोधेन पुराणोक्तविधिना तुलसीपूजा कर्तव्या ) ॥ (२) स्त्रियस्तु आचमनस्थाने उदकेन नेत्रस्पर्शं कुर्वन्ति ॥

नमः । पतिचरणारविन्दाभ्यां नमः । सर्वेभ्यो देवेभ्यो नमः । सर्वेभ्यो ब्राह्मणेभ्यो नमो नमः । निर्विघ्नमस्तु । पुण्यं पुण्याहं दीर्घमायुरस्तु ॥ 'मङ्गलदेवताप्रार्थना'—सुमुखश्चैकदन्तश्च कपिलो गजकर्णकः । लम्बोदरश्च विकटो विघ्ननाशो गणाधिपः । धूम्रकेतुर्गणाध्यक्षो भालचन्द्रो गजाननः । द्वादशैतानि नामानि यः पठेच्छृणुयादपि । विद्यारम्भे विवाहे च प्रवेशे निर्गमे तथा ॥ संग्रामे संकटे चैव विघ्नस्तस्य न जायते । शुक्लाम्बरधरं देवं शशिवर्णं चतुर्भुजम् । प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये । अभीप्सितार्थसिद्ध्यर्थं पूजितो यः सुरासुरैः । सर्वविघ्नहरस्तस्मै गणाधिपतये नमः ॥ सर्वमङ्गलमाङ्गल्ये शिवे सर्वार्थसाधिके । शरण्ये त्र्यम्बके गौरि नारायणि नमोऽस्तु ते ॥ सर्वदा सर्वकार्येषु नास्ति तेषाममङ्गलम् । येषां हृदिस्थो भगवान् मङ्गलायतनो हरिः । तदेव लग्नं सुदिनं तदेव ताराबलं चन्द्रबलं तदेव । विद्याबलं दैवबलं तदेव लक्ष्मीपते तेऽङ्घ्रियुगं स्मरामि ॥ लाभस्तेषां जयस्तेषां कुतस्तेषां पराजयः । येषामिन्दीवरश्यामो हृदयस्थो जनार्दनः ॥ विनायकं गुरुं भानुं ब्रह्मविष्णुमहेश्वरान् । सरस्वतीं प्रणौम्यादौ सर्वकार्यार्थसिद्धये ॥ यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः । तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम ॥ सर्वेष्वारम्भकार्येषु त्रयस्त्रिभुवनेश्वराः । देवा दिशन्तु नः सिद्धिं ब्रह्मेशानजनार्दनाः ॥ 'सङ्कल्पः'—विष्णवे नमः विष्णुर्विष्णुर्विष्णुः श्रीमद्भगवतो महापुरुषस्य विष्णोराज्ञया प्रवर्त्तमानस्य अद्य ब्रह्मणः द्वितीये परार्धे श्रीश्वेतवाराहकल्पे अष्टाविंशतितमे कलियुगे कलिप्रथमचरणे भारतवर्षे (भारतखण्डे) जम्बुद्वीपे दण्डकारण्ये देशे (संवत्सरायनऋतुमासपक्षतिथिवासरनक्षत्रयोगप्रातःकालादिनामान्युत्कीर्त्य)ममाऽत्मनः पुराणोक्तफलप्राप्त्यर्थं तथा च मम भर्त्रासह अखण्डितसुखसौभाग्यसन्तत्यायुरारोग्यैश्वर्याभिवृद्धिद्वारा श्रीतुलसीदेवताप्रीत्यर्थं वृन्दावने तुलसीपूजनमहं करिष्ये ॥ 'कलशपूजनम्'—गङ्गे च यमुने चैव गोदावरि सरस्वति । नर्मदे सिन्धु कावेरि जलेऽस्मिन्सन्निधिं कुरु ॥ कलशस्थवरुणदेवतायै नमः सकलपूजापरिपूर्णार्थे

(१) कलशे उदकं पूर्य तीर्थानि प्रार्थयेत् ॥

गन्धाक्षतपुष्पाणि समर्पयामि नमस्करोमि । अस्मिन्कलशे सर्वाणि तीर्थानि आवाहयामि स्थापयामि कल्पयामि नमस्करोमि ॥ 'पूजाद्रव्यप्रोक्षणम्'[1]—अपवित्रः पवित्रो वा सर्वावस्थां गतोऽपि वा। यः स्मरेत्पुण्डरीकाक्षं स बाह्याऽभ्यन्तरः शुचिः ॥ 'घण्टापूजनम्'—आगमार्थं तु देवानां गमनार्थं तु रक्षसाम् । कुरु घण्टे महानादं देवतार्चनसन्निधौ ॥ घण्टास्थगरुडदेवतायै नमः सकलपूजापरिपूरणार्थे गन्धपुष्पाणि समर्पयामि नमस्करोमि ॥ 'दीपपूजनम्'—दीपस्त्वं ब्रह्मरूपोऽसि ज्योतिषां प्रभुरव्ययः । सौभाग्यं देहि पुत्रांश्च सर्वान्कामांश्च देहि मे । दीपदेवताभ्यो नमः सकलपूजापरिपूरणार्थे गन्धाक्षतपुष्पाणि समर्पयामि नमस्करोमि ॥ 'श्रीतुलसीध्यानम्'—ध्यायेच्च तुलसीं देवीं श्यामां कमललोचनाम् । प्रसन्नां पद्मवदनां वराभयचतुर्भुजाम् । किरीटहारकेयूरकुण्डलादिविभूषणाम् । धवलाङ्कुशसंयुक्तां पद्मासननिषेविताम् । प्रियां च सर्वदा विष्णोः सर्वदेवनमस्कृताम् ॥ श्रीतुलस्यै नमः ध्यायामि॥ 'आवाहनम्'—देवि त्र्यैलोक्यजननि सर्वलोकैकपावनि । आगच्छ वरदे मातः प्रसीद तुलसि प्रिये । श्रीतुलस्यै नमः आवाहयामि ॥ 'आसनम्'—सर्वदेवमये देवि सर्वदा विष्णुवल्लभे । देवि स्वर्णमयं दिव्यं गृहाणासनमव्यये ॥ श्रीतुलस्यै नमः आसनार्थे अक्षतान्समर्पयामि ॥ 'पाद्यम्'—सर्वदेवा यथा स्वर्गे तथा त्वं भुवि सर्वदा । दत्तं पाद्यं गृहाणेदं तुलसि त्वं प्रसीद मे ॥ श्रीतुलस्यै नमः पाद्यं समर्पयामि ॥ 'अर्घ्यम्'—गन्धपुष्पसमायुक्तं सर्वेषां प्रीतिदायकम् । अर्घ्यं गृहाण त्वं देवि दैत्यान्तकरणप्रिये ॥ श्रीतुलस्यै नमः अर्घ्यं समर्पयामि 'आचमनम्'—कर्पूरवासितं तोयं सुवर्णकलशे स्थितम् । दत्तमाचमनीयं च गृहाण हरिवल्लभे ॥ श्रीतुलस्यै नमः आचमनं समर्पयामि ॥ 'स्नानम्'—गङ्गासरस्वतीरेवापयोष्णीनर्मदाजलैः । स्नापितासि मया देवि तथा शान्तिं कुरुष्व मे ॥ श्रीतुलस्यै नमः स्नानं समर्पयामि ॥ 'क्षेपकम्'—'मलापकर्षणस्नानम्'—गङ्गा गोदावरी

(१) अनेन मन्त्रेण तुलसीदलेन कलशोदकं गृहीत्वा पूजाद्रव्याणि सम्प्रोक्ष्य तद्वदात्मानं सम्प्रोक्षेत् ॥

कृष्णा पयोष्ण्याद्यापगास्तथा । आयान्तु ताः सदा देव्यस्तुलसीस्ना-
नकर्मणि ॥ श्रीतुलस्यै नमः मलापकर्षणस्नानं समर्पयामि ॥ 'पञ्चामृ-
तस्नानम्'—पञ्चामृतं मयाऽनीतं पयो दधि घृतं मधु । सह श-
र्करया देवि स्नानार्थं प्रतिगृह्यताम् ॥ श्रीतुलस्यै नमः पञ्चामृतस्नानं
समर्पयामि । पञ्चामृतस्नानान्ते शुद्धोदकस्नानं समर्पयामि । शुद्धोदक-
स्नानान्ते आचमनं समर्पयामि । सकलपूजापरिपूरणार्थे गन्धाक्षतपु-
ष्पाणि समर्पयामि ॥ ( निर्माल्यं विसृज्य पुनश्च गन्धाक्षतपुष्पाण्यर्पयि-
त्वानन्तरमभिषेकं कुर्यात् ) ॥ यथा-'अभिषेकः'—कृष्णा सरस्वती काली
तुङ्गभद्रा शची तथा । भागीरथी पार्वती च रमा नारायणी कृपी ।
सुभद्रा द्रौपदी साध्वी माता चैवाप्यरुन्धती । सावित्री कालि-
काऽहल्या स्नापयिष्यन्तु सर्वदा । आभिः कृताभिषेका त्वं द-
दासि गुरुसौभगम् । अतस्त्वां स्नापयिष्यामि तुलसि विष्णुवल्लभे ।
शान्तिः शान्तिः सुशान्तिर्भवतु ॥ अमृताभिषेकोऽस्तु ॥ श्रीतुलस्यै
नमः अभिषेकं समर्पयामि । अभिषेकान्ते आचमनं समर्पयामि ॥
इति क्षेपकम् ॥ 'वस्त्रम्'—क्षीरोदमथनोद्भूते चन्द्रलक्ष्मीसहोदरे ।
गृह्यतां परिधानार्थमिदं क्षौमाम्बरं शुभे । श्रीतुलस्यै नमः वस्त्रं
( वस्त्राऽभावे अक्षतान् ) समर्पयामि ॥ 'कञ्चुकीसुपवस्त्रम्'—कञ्चु-
कीसुपवस्त्रं च नानारत्नैः समन्वितम् । गृहाण त्वं मया दत्तं
तुलसि भयहारिणि ॥ श्रीतुलस्यै नमः कञ्चुकीसुपवस्त्रं ( कञ्चुक्युपव-
स्त्राऽभावे अक्षतान् ) समर्पयामि ॥ 'कुङ्कुमम्'—केशराऽगरुसंयुक्तं
चन्दनादिसमन्वितम् । कस्तूरिकासमायुक्तं कुङ्कुमं प्रतिगृह्यताम् ॥
श्रीतुलस्यै नमः कुङ्कुमं समर्पयामि ॥ 'क्षेपकम्'—'अक्षतान्'—
अक्षतांश्च महादेवि तुलसि सौख्यदायके । अर्पयामि सदा भक्त्या
सुखसन्ततिलब्धये । श्रीतुलस्यै नमः अक्षतान् समर्पयामि ॥ 'सौ-
भाग्यद्रव्यम्'—हरिद्रां कुङ्कुमं चैव सिन्दूरं कज्जलान्वितम् ।
मया निवेदितं भक्त्या गृहाण परमेश्वरि । श्रीतुलस्यै नमः सौभाग्यद्रव्यं
समर्पयामि ॥ इति क्षेपकम् ॥ 'पुष्पाणि'—माल्यादीनि सुगन्धीनि
मालत्यादीनि सत्तमे । मयाहृतानि पूजार्थं पुष्पाणि प्रतिगृह्यताम् ।
श्रीतुलस्यै नमः पुष्पाणि समर्पयामि ॥ 'धूपम्'—वनस्पतिरसो-

द्भूतो गन्धाढ्यो गन्ध उत्तमः । आघ्रेयः सर्वदेवानां धूपोऽयं प्रतिगृह्यताम् । श्रीतुलस्यै नमः धूपं समर्पयामि ॥ 'नीराजनम्'—वैश्वानरप्रज्वलितं घृतकार्पासनिर्मितम् । दीपं भक्त्या गृहाणेदं त्रैलोक्यध्वान्तनाशके । श्रीतुलस्यै नमः नीराजनं दर्शयामि ॥ 'नैवेद्यम्'—अन्नं चतुर्विधं स्वादु रसैः षड्भिः समन्वितम् । नैवेद्यार्थेऽर्पयामि त्वां तुलसि माधवप्रिये । प्राणाय नमः । अपानाय नमः । व्यानाय नमः । समानाय नमः । उदानाय नमः । ( इति मन्त्रैः ग्रासमुद्राः प्रदर्श्य ) श्रीतुलस्यै नमः नैवेद्यं समर्पयामि ॥ नैवेद्यान्ते आचमनं समर्पयामि ॥ मध्ये पानीयं उत्तरापोशनं हस्तप्रक्षालनं मुखप्रक्षालनं करोद्वर्त्तनार्थे चन्दनं च समर्पयामि ॥ 'क्षेपकम्'—'फलम्'—इदं फलं मया देवि स्थापितं पुरतस्तव । तेन मे सफलावाप्तिर्भवेजन्मनिजन्मनि । श्रीतुलस्यै नमः फलं समर्पयामि इति क्षेपकम्' ॥ 'ताम्बूलम्'—पूगीफलं महद्दिव्यं नागवल्लीदलैर्युतम् । कर्पूरैलासमायुक्तं ताम्बूलं प्रतिगृह्यताम् ॥ श्रीतुलस्यै नमः ताम्बूलं समर्पयामि ॥ 'क्षेपकम्'—'दक्षिणा'—हिरण्यगर्भगर्भस्थं हेमबीजं विभावसोः । अनन्तपुण्यफलदमतः शान्तिं प्रयच्छ मे । श्रीतुलस्यै नमः दक्षिणां समर्पयामि ॥ 'कर्पूरारार्तिक्यम्'—नीराजयामि सततं हरिवल्लभे वै कर्पूरवर्तिभिरलं सुखदायके त्वाम् । पादौ भजास्यविरतं तव देवि मायें वंशाय सौख्यमपि देहि बलं च पूर्णम् ॥ श्रीतुलस्यै नमः कर्पूरारार्त्तिक्यं समर्पयामि ॥ इति क्षेपकम् ॥ 'प्रदक्षिणा'—यानि कानि च पापानि जन्मान्तरकृतानि च । तानि सर्वाणि नश्यन्ति प्रदक्षिणपदेपदे ॥ ( 'प्रदक्षिणामन्त्रः'—नमस्ते गार्हपत्याय नमस्ते दक्षिणाग्नये । नम आहवनीयाय तुलस्यै नमो नमः । श्रीतुलस्यै नमः प्रदक्षिणां समर्पयामि ॥ 'मन्त्रपुष्पयुक्तो नमस्कारः'—विष्णुप्रियकरे देवि तुलसि सुखदायके ।

(१) स्त्रीभिरपि स्वस्वभोजनात्प्राक् तुलस्यै सिद्धान्नस्य सोपस्करनैवेद्योऽर्पणीयः पूजासमये तु पयोघृतशर्करादिनैवेद्योऽर्पणीयः ॥ (२) इति मन्त्रेण स्त्रीभिरष्टोत्तरशतं प्रदक्षिणाः कार्याः । तत्र सुवासिनीभिः सङ्ख्याज्ञानार्थं स्फटिकधातुमण्यादीनां माला ग्राह्या । गतभर्तृकाभिस्तु तुलसीकाष्ठमाला ॥

पुष्पाञ्जलिं प्रयच्छामि पतेरायुष्यवर्द्धके । श्रीतुलस्यै नमः मन्त्रपुष्पाञ्जलियुक्तं नमस्कारं समर्पयामि ॥ 'क्षेपकम्'—'विशेषार्घ्यः'—गन्धप्रसूनसंयुक्तं फलमुद्रादिशोभितम् । अर्घ्यं ददामि तुलसि तव प्रीत्यै नमो नमः ॥ श्रीतुलस्यै नमः विशेषार्घ्यं समर्पयामि ॥ 'प्रार्थना'—सौभाग्यं सन्ततिं देवि धनं धान्यं च मे सदा । आरोग्यं शोकशमनं कुरु मे माधवप्रिये । अभीष्टफलसिद्धिं च सदा देहि हरिप्रिये । देवैस्त्वं निर्मिता पूर्वमर्चितासि मुनीश्वरैः । अतो मां सर्वदा भक्त्या कृपादृष्ट्या विलोकय । पतेरायुश्च भाग्यं च सदा देहि हरिप्रिये । पूतनाभयसन्त्रासाद्रक्षितश्च यथा हरिः । तथा संसारसन्त्रासाद्रक्ष मे वंशमुत्तमम् ॥ श्रीतुलस्यै नमः प्रार्थनां समर्पयामि ॥ इति क्षेपकम् ॥ 'अर्पणम्'—अनेन मया यथाशक्त्या पूजनेन श्रीतुलसीदेवता प्रीयतां न मम ॥ इति तुलसीनित्यपूजाप्रयोगः ॥

५०९. 'स्त्रीपुंसामाचरणीया धर्माः.' मनुः—पुरुषस्य स्त्रियाश्चैव धर्मे वर्त्मनि तिष्ठतोः । संयोगे विप्रयोगे च धर्मान् वक्ष्यामि शाश्वतान् ॥ सूक्ष्मेभ्योऽपि प्रसङ्गेभ्यः स्त्रियो रक्ष्या विशेषतः । द्वयोर्हि कुलयोः शोकमावहेयुररक्षिताः ॥ इमं हि सर्ववर्णानां पश्यतां धर्ममुत्तमम् । यतन्ते रक्षितुं भार्यां भर्तारो दुर्बला अपि ॥ स्वां प्रसूतिं चरित्रं च कुलमात्मानमेव च ॥ स्वधर्मं हि प्रयत्नेन जायां रक्षन् हि रक्षितः ॥ दक्षः—जलौकावत् स्त्रियः सर्वा भूषणाच्छादनाशनैः । सुहिताऽपि कृता नित्यं पुरुषं ह्यपकर्षति ॥ तस्मात्—मनुराह—अर्थस्य सङ्ग्रहे चैनां व्यये चैव नियोजयेत् । शौचे धर्मेऽन्नपक्त्यां च पारिणाह्यस्य चेक्षणे ॥ अतएव—इत्येवं ऋषिणा प्रोक्ता नानाधर्माः सनातनाः । इहामुत्राहृताः पुंसां नारीणामपि मोददाः ॥

इति श्रीपुरन्दरोपाह्वविठ्ठलात्मजनारायणेन विरचितायां वाजसनेयाह्निकसूत्रावल्यां स्त्रीणामाह्निकाचारः समाप्तः ॥

# अथ श्रीशुक्लयजुर्वेदीयमाध्यन्दिनवाजसनेयाऽह्निकसूत्रावल्यां परिशिष्टम् ॥

## अथाऽभिषेकादिप्रयोगाः ॥

५१०. तत्रादौ—'शिवे रुद्राऽभिषेकप्रयोगः'—(पृष्ठ १३२) देवपूजाप्रयोगे दर्शितक्रमेण 'आचम्य' इत्यारभ्य पृष्ठ १३४ पङ्क्ति १२ शुभपुण्यतिथौ (इत्यन्तं ज्ञेयम्) मम (अमुकशर्मणो यजमानस्य वा) आत्मनः श्रुतिस्मृतिपुराणोक्तफलप्राप्त्यर्थं मम (यजमानस्य वा) अमुकसङ्कटरोगादि वा विनाशनार्थं मम (यजमानस्य वा) ऐश्वर्याभिवृद्ध्यर्थम् (इत्यारभ्य) वाप्त्यर्थं च (इतन्त्यम्) ॥ ॐ भूर्भुवः स्वः श्रीभवानीशङ्करमहारुद्रदेवताप्रीत्यर्थं यथाज्ञानेन यथामिलितोपचारैः षडङ्गन्यासपूर्वकं पुरुषसूक्तेन ध्यानाऽवाहनादि षोडशोपचारैः अन्योपचारैश्च सकृद्रुद्रावर्तनेनाऽभिषेक (रुद्रिं महारुद्रमतिरुद्रं वा) पूर्वकपूजनमहं करिष्ये ॥ ततो 'षडङ्गन्यासाः'—(पृष्ठ ११० दर्शितक्रमेण) कुर्यात् ॥ तदनन्तरं 'कलशादिपूजनादा'रभ्य (पृष्ठ १३५) नमस्करोमि (पृष्ठ १३६ पङ्क्ति २४) पर्यन्तं ज्ञेयम् ॥ 'ध्यानम्'—शिवानुलक्षितमन्त्रैः श्लोकैः देवपूजाप्रयोगवत् कुर्यात् तद्वत् अस्मिन् सर्वत्रप्रयोगे 'समर्पणम्' ज्ञेयम् ॥ 'आवाहनादा'—रभ्य-(पृष्ठ १३८) ततो (पृष्ठ १४२ पङ्क्ति १३) पर्यन्तम् ॥ पश्चादधोलिखितरुद्रमन्त्रैः जलधारया 'ऽभिषेकं' कुर्यात् ॥ शेषविधिः देवपूजाप्रयोगवत् बोध्यः ॥ स चाऽभिषेकं अधोलिखित 'रुद्रमन्त्रैः' कुर्यात्—

५११. अथ 'रुद्रः' तत्रादौ—'रुद्रे प्रथमोऽध्यायः'—हरिःॐ गणानान्त्वा। गणपति ᳪ हवामहे प्रियाणान्त्वा प्रियपति ᳪ हवामहे निधीनान्त्वा निधिपति ᳪ हवामहे वसो मम। आहमजानि गर्ब्भधमात्त्वमजासि गर्ब्भधम् । १ $\frac{१६}{२३}$ ॥

(१) 'अभिषेकादिविधिः' विस्तारपूर्वकं २२५ पृष्ठे ३०३ परिच्छेदे द्रष्टव्यः ॥

गायत्री त्रिष्टुब्जगत्यनुष्टुप्पङ्क्त्या सुह। बृहत्युष्णिहा कुकुप्सूचीभिः शम्यन्तु त्वा। २ ३३/२३ ॥ द्विपदा याश्चतुष्पदास्त्रिपदा याश्च षट्पदाः। विच्छन्दा याश्च सच्छन्दाः सूचीभिः शम्यन्तु त्वा। ३ ३४/२३ ॥ सहस्तोमाः सहछन्दसऽआवृतः सहप्प्रमाऽऋषयः सुप्तदैव्याः। पूर्वेषाम्पन्थामनुदृश्य धीराऽअन्वालेभिरे रथ्यो न रश्मीन्। ४ ४५/३४ ॥ यज्जाग्रतो दूरमुदैति दैवन्तदु सुप्तस्य तथैवैति। दूरङ्गमञ्ज्योतिषाञ्ज्योतिरेकन्तन्मे मनः शिवसङ्कल्पमस्तु। ५ १/३४ ॥ येन कर्माण्यपसो मनीषिणो यज्ञे कृण्वन्ति विदथेषु धीराः। यदपूर्वं यक्षमन्तः प्रजानान्तन्मे मनः शिवसङ्कल्पमस्तु। ६ २/३४ ॥ यत्प्रज्ञानमुतचेतो धृतिश्च यज्ज्योतिरन्तरमृतम्प्रजासु। यस्मान्नऽऋते किञ्चन कर्म क्रियते तन्मे मनः शिवसङ्कल्पमस्तु। ७ ३/३४ ॥ येनेदम्भूतम्भुवनम्भविष्यत्परिगृहीतममृतेन सर्वम्। येन यज्ञस्तायते सप्तहोता तन्मे मनः शिवसङ्कल्पमस्तु। ८ ४/३४ ॥ यस्मिन्नृचः साम यजूंषि यस्मिन्प्रतिष्ठिता रथनाभाविवाराः। यस्मिँश्चित्तं सर्वमोतम्प्रजानान्तन्मे मनः शिवसङ्कल्पमस्तु। ९ ५/३४ ॥ सुषारथिरश्वानिव यन्मनुष्यान्नेनीयतेऽभीशुभिर्वाजिनऽइव। हृत्प्रतिष्ठं यदजिरञ्जविष्ठन्तन्मे मनः शिवसङ्कल्पमस्तु। १० ६/३४ ॥

इति रुद्रे प्रथमोऽध्यायः॥ (एते ६ मन्त्राः ३४ अध्यायोक्ता माद्याः)॥

अथ 'रुद्रे द्वितीयोऽध्यायः।' हरिः ॐ—सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्। सभूमिं सर्वतस्पृत्वा त्यति-

ष्ठद्दशाङ्गुलम् । १ ॥ पुरुषऽएवेदꣳ सर्वं यद्भूतं यच्च
भाव्यम् । उतामृतत्वस्येशानो यदन्नेनातिरोहति । २ ॥
एतावानस्य । महिमा तो ज्यायाँश्च पूरुषः । पादोस्य
विश्वाभूतानि त्रिपादस्यामृतन्दिवि । ३ ॥ त्रिपादू-
र्ध्वऽउदैत्पुरुषः पादोस्येहा भवत्पुनः । ततो विष्वङ्-
व्यक्रामत्साशनानशनेऽअभि । ४ ॥ ततो विराड-
जायत विराजोऽअधिपूरुषः । स जातोऽअत्यरिच्यत
पश्चाद्भूमिमथो पुरः । ५ ॥ तस्माद्यज्ञात्सर्वहुतः स-
म्भृतम्पृषदाज्यम् । पशूँस्ताँश्चक्रे वायव्या नारण्या
ग्राम्याश्च ये । ६ ॥ तस्माद्यज्ञात्सर्वहुतऽऋचः
सामानि जज्ञिरे । छन्दाꣳसि जज्ञिरे तस्माद्यजुस्त-
स्मादजायत । ७ ॥ तस्मादश्वाऽअजायन्त ये के चो-
भयादतः । गावोह जज्ञिरे तस्मात्तस्माज्जाताऽ अ-
जावयः । ८ ॥ तं यज्ञम्बर्हिषि प्रौक्षन्पुरुषञ्जातम-
ग्रतः । तेन देवाऽ अयजन्त साध्याऽ ऋषयश्च ये
। ९ ॥ यत्पुरुषं व्यदधुः कतिधा व्यकल्पयन् । मुखङ्कि-
मस्याऽसीत्किम्बाहू किमूरूपादाऽउच्येते । १० ॥
ब्राह्मणोस्य मुखमासीद्बाहू राजन्यः कृतः । ऊरू त-
दस्य यद्वैश्यः पद्भ्याꣳ शूद्रोऽअजायत । ११ ॥ चन्द्र-
मा मनसो जातश्चक्षोः सूर्योऽअजायत । श्रोत्राद्वा-
युश्च प्राणश्च मुखादग्निरजायत । १२ ॥ नाभ्याऽ-
आसीदन्तरिक्षꣳ शीर्ष्णो द्यौः समवर्तत । पद्भ्याम्भू-
मिर्दिशः श्रोत्रात्तथा लोकाँ २ ॥ ऽअकल्पयन् । १३ ॥
यत्पुरुषेण । हविषा देवा यज्ञमतन्वत । वसन्तोस्यासी-

दाज्ज्यंङ्ग्रीष्ष्मऽइद्ध्मः शुरद्धुविः । १४ ॥ सुप्प्तास्या-
सन्नपरिधयुस्त्रिः सुप्प्तसमिधं÷कृताः । देवा यद्यज्ञन्त-
न्वानाऽ अबंद्धन्नपुरुषम्पुशुम् । १५ ॥ युज्ञेनं युज्ञम-
यजन्त देवास्तानि धर्म्माणि प्प्रथमान्न्यासन् । ते हुना-
कम्महिमानं÷ सचन्तु यत्र पूर्वे साद्ध्याःसन्ति देवाः
। १६ ॥ अुद्भ्यःसम्भृतः । पृथिव्व्यै रसांच्च व्विश्श्वकर्म्म-
णः समवर्त्तुताग्ग्रे । तस्यु त्वष्टा व्विदधंद्रूपमैति तन्म-
र्त्यस्य देवुत्त्वमाजानुमग्ग्रे । १७ ॥ व्वेदाहमेतम्पुरुष-
म्मुहान्तमादित्त्यवर्णन्तमसः परस्तात् । तमेव व्विदि-
त्त्वाति मृत्युमैति नान्न्यःपन्था व्विद्युते यनाय । १८ ॥
प्प्रजापतिश्चरति गर्ब्भे ऽअन्तरजायमानो बहुधा व्वि-
जायते । तस्यु योनिम्परि पश्यन्ति धीरास्तस्मिन्हतस्थु-
र्ब्भुवनानि व्विश्श्वा । १९ ॥ यो देवेब्भ्यंऽआतपति यो
देवानाम्पुरोहितः । पूर्व्वो यो देवेब्भ्यो जातो नमो
रुचाय ब्राह्मये । २० ॥ रुचम्ब्राह्म्यञ्जनयन्तो देवाऽ
अग्ग्रे तदब्रुवन् । यस्त्वैवम्ब्राह्मणो व्विद्यात्तस्य देवा-
ऽअसन्वशे । २१ ॥ श्रीश्चते लक्ष्मीश्चपत्न्यावहो-
रात्रे पार्श्वे नक्षत्राणि रूपमुश्श्विनौ व्यात्तम् । इष्णन्निषा-
णामुम्मऽइषाण सर्व्वलोकम्मऽइषाण । २२ ॥ इति
द्वितीयोऽध्यायः ॥ ( एते२२मन्त्रा ३१ दध्यायोक्ताः १ माद्याः ) ॥

अथ 'रुद्रे तृतीयोऽध्यायः' हरिः—ॐ—आशुःशिशानो
वृषभो न भीमो घनाघुनः क्षोभणश्चर्षणीनाम् । सु-
ङ्क्रन्दनो निमिषऽएक वीरःशतꣳ सेनाऽअजयत्साक-
मिन्द्रं÷ । १ ॥ सुङ्क्रन्दनेना निमिषेणं । जिष्णुना यु-

त्कारेण दुश्च्यवनेन धृष्णुना। तदिन्द्रेण जयत तत्स-
हध्वं युधो नरऽइषुहस्तेन वृष्णा। २॥ सऽइषु हस्तैः
स निषङ्गिभिर्वशी सꣳस्रष्टा स युधऽइन्द्रो गणेन।
सꣳसृष्टजित्सोमपा बाहुशर्द्ध्युग्रधन्वा प्प्रतिहिता-
भिरस्ता। ३॥ बृहस्प्पते परि। दीया रथेन रक्षोहा
मित्राँ२ ॥ ऽअप बाधमानः। प्प्रभञ्जन्त्सेनाः प्प्रमृणो
युधा जयन्नस्स्माकमेद्ध्यविता रथानाम्। ४॥ बलवि-
ज्ञायस्थविरः प्प्रवीरः सहस्वान्वाजी सहमानऽउग्ग्रः।
अभिवीरोऽअभिसत्वा सहोजा जैत्रमिन्द्र रथमातिष्ठ गो-
वित्। ५॥ गोत्रभिदं गोविदं वज्रबाहुं जयन्तमज्म
प्प्रमृणन्तमोजसा। इमꣳ सजाताऽअनु वीरयध्वमि-
न्द्रꣳ सखायोऽअनु सꣳरभध्वम्। ६॥ अभिगोत्राणि
सहसा गाहमानो दयो वीरः शतमन्युरिन्द्रः। दुश्च्यवनः
पृतनाषाडयुद्ध्योऽस्स्माकꣳ सेनाऽअवतु प्प्रयुत्सु। ७॥
इन्द्रऽ आसान्नेता बृहस्पतिर्द्दक्षिणा यज्ञः पुरऽएतु सो-
मः। देवसेनानामभिभञ्जतीनाञ्जयन्तीनाम्मरुतो
यन्त्वग्ग्रम्। ८॥ इन्द्रस्य वृष्णो वरुणस्य राज्ञऽ आ-
दित्यानाम्मरुताꣳ शर्द्धऽउग्ग्रम्। महामनसाम्भुवन-
च्यवानाङ्घोषो देवानाञ्जयतामुदस्थात्। ९॥ उद्ध-
र्षय। मघवन्नायुधान्युत्सत्वनाम्मामकानाम्मनाꣳसि।
उद्वृत्रहन्वाजिनां वाजिनान्युद्रथानाञ्जयतां यन्तु घो-
षाः। १०॥ अस्स्माकमिन्द्रः। समृतेषु ध्वजेष्ष्व-
स्स्माकं याऽइषवस्ता जयन्तु। अस्स्माकं वीराऽ
उत्तरे भवन्त्वस्स्माँ२ ॥ ऽउदेवाऽअवताहवेषु। ११॥
अमीषाञ्चित्तम्प्रतिलोभयन्ती गृहाणाङ्गान्यप्वे परेहि।

अभिप्प्रेहि निर्द्दह हृत्सु शोकैरन्धेनामित्रास्तमसा सच-
न्ताम् । १२ । अवसृष्टा परा । पत शरव्ये ब्रह्मसंशिते ।
गच्छामित्रान्प्रपद्यस्व मामीषाङ्कञ्चनोच्छिषः । १३ ॥
प्रेता जयता नरऽइन्द्रो वः शर्म्म यच्छतु । उग्रा वः
सन्तु बाहवो नाधृष्या यथासथ । १४ ॥ असौ या ।
सेना मरुतः परेषामभ्यैति नऽओजसा स्पर्द्धमाना ।
ताङ्गूहत तमसापव्रतेन यथा मीऽअन्योऽअन्यन्न जा-
नन् । १५ ॥ यत्र बाणाः सम्पतन्ति कुमारा विशिखा-
ऽइव । तन्नऽइन्द्रो बृहस्पतिरदितिः शर्म्म यच्छतु विश्वा-
हा शर्म्म यच्छतु । १६ ॥ मर्म्माणि ते वर्म्मणा छाद-
यामि सोमस्त्वा राजामृतेनानुवस्ताम् । उरोर्वरीयो
वरुणस्ते कृणोतु जयन्तन्त्वानु देवामदन्तु । १७ ॥
इति रुद्रे तृतीयोऽध्यायः ॥ ( एते १७ मन्त्राः १७ ध्यायोक्ताः
३३ दाघाः ) ॥

अथ 'रुद्रे चतुर्थोऽध्यायः'—हरिः—ॐ विभ्राड्बृहत्पि-
बतु सोम्यम्मध्वायुर्द्दधद्यज्ञपतावविह्रुतम् । वातजूतो
योऽअभिरक्षति त्मना प्रजाः पुपोष पुरुधा विराजति
। १ $\frac{३०}{३३}$ ॥ उदु त्यञ्जातवेदसन्देवं वहन्ति केतवः । दृशे
विश्वाय सूर्य्यम् । २ $\frac{३१}{३३}$ ॥ येना पावकचक्षसा भुरण्यन्तञ्ज-
नाँ२ ॥ ऽअनु । त्वं वरुण पश्यसि । ३ $\frac{३२}{३३}$ ॥ दैव्यावध्व-
र्य्यूऽआगतं रथेन सूर्य्यत्वचा । मध्वा यज्ञं समञ्जाथे ।
तम्प्रत्नथायं वेनश्चित्रन्देवानाम् । ४ $\frac{३३}{३३}$ ॥ तम्प्रत्नथा
पूर्वथा विश्वथेमथा ज्येष्ठतातिम्बर्हिषदं स्वर्व्विदम् ।
प्रतीचीनं वृजनन्दोहसे धुनिमाशुञ्जयन्तमनु या सुवर्द्धं
से । * * । ५ $\frac{१२}{७}$ ॥ अयं वेनश्चोदयत्पृश्निगर्भा ज्यो-

तिर्जरायू रजसो व्विमाने। इममपाॐ सङ्गमे सूर्यस्य शिशुन्न व्विप्रा मतिभीरिहन्ति। * ६$\frac{१६}{७}$॥ चित्रन्देवाना-मुदगादनीकञ्चक्षुर्म्मित्रस्य व्वरुणस्याग्नेः। आप्रा द्यावापृथिवीऽअन्तरिक्षॅ सूर्य्यऽआत्मा जगतस्तस्थुषश्च। ७$\frac{४६}{१३}$॥ आनऽइडाभिर्व्विदथे सुशस्ति व्विश्वानरः सविता देवऽएतु। अपि यथा युवानो मत्सथानो व्विश्वञ्जगदभिपित्वे मनीषा। ८$\frac{३४}{३३}$॥ यदद्य। कच्च वृत्रहन्नुदगाऽअभिसूर्य्य। सर्व्वन्तादिन्द्रते व्वशे। ९$\frac{३५}{३३}$॥ तरणिर्व्विश्वदर्शतो ज्योतिष्कृदसि सूर्य्य। व्विश्वमाभासि रोचनम्। १०$\frac{३६}{३३}$॥ तत्सूर्य्यस्य। देवत्वतन्महित्वम्मद्ध्या कर्त्तोर्व्विततॅ सञ्जभार। यदेदयुक्त हरितः सधस्थादाद्रात्री व्वासस्तनुते सिमस्मै। ११$\frac{३७}{३३}$॥ तन्मित्रस्य व्वरुणस्याभिचक्षे सूर्य्यो रूपङ्कृणुते द्योरुपस्थे। अनन्तमन्यद्रुशदस्य पाजः कृष्णमन्यद्धरितः सम्भरन्ति। १२$\frac{३८}{३३}$॥ बण्महाँ॥ऽअसि सूर्य्य बडादित्य महाँ॥ऽअसि। महस्ते सतो महिमा पनस्यतेद्धा देव महाँ॥ऽअसि। १३$\frac{३९}{३३}$॥ बट्सूर्य्यश्रवसा महाँ॥ऽअसि सत्रा देव महाँ॥ऽअसि। मन्हा देवानामसुर्य्यः पुरोहितो व्विभुज्योतिरदाभ्यम्। १४$\frac{४०}{३३}$। श्रायन्तऽइव सूर्य्यं व्विश्वेदिन्द्रस्य भक्षत। व्वसूनि जाते जनमानऽओजसा प्रतिभागन्नदीधिम। १५$\frac{४१}{३३}$॥ अद्याद्देवाऽउदिता सूर्य्यस्य निरॅहसः पिपृता निरवद्यात्। तन्नो मित्रो व्वरुणो मामहन्तामदितिः सिन्धुः पृथिवीऽउत द्यौः। १६$\frac{४२}{३३}$॥ आकृष्णेन रजसा वर्त्तमानो निवेशय-

न्नमृतम्मर्त्यञ्च । हिरण्ययेन सविता रथेना देवो याति भुवनानि पश्यन् । १७$^{४३}_{३३}$ ॥ इति रुद्रे चतुर्थोऽध्यायः ॥

अथ 'रुद्रे पञ्चमोऽध्यायः'—हरिः—ॐ—नमस्ते रुद्रमन्यवऽउतो तऽइषवे नमः । बाहुब्भ्यामुत ते नमः । १ ॥ याते । रुद्र शिवा तनूरघोरा पापकाशिनी । तया नस्तन्वा शन्तमया गिरिशन्ताभिचाकशीहि । २ ॥ यामिषुङ्गिरिशन्त हस्ते बिभर्ष्यस्तवे । शिवाङ्गिरित्रताङ्कुरु मा हिꣳसीः पुरुषञ्जगत् । ३ ॥ शिवेन वचसा । त्वा गिरिशाच्छा वदामसि । यथा नः सर्वमिज्जगदयक्ष्मꣳ सुमना ऽअसत् । ४ ॥ अद्ध्यवोचदधिवक्ता प्रथमो दैव्यो भिषक् । अहींश्च सर्वाञ्जम्भयन्त्सर्वाश्च यातुधान्यो धराचीः परासुव । ५ ॥ असौ यस्ताम्रोऽअरुणऽउत बभ्रुः सुमङ्गलः । ये चैनꣳ रुद्रा ऽअभितो दिक्षुश्रिताः सहस्रशो वैषाꣳ हेडऽईमहे । ६ ॥ असौ योऽवसर्प्पति नीलग्ग्रीवो विलोहितः । उतैनङ्गोपाऽ अदृश्रन्नदृश्रन्नुदहार्य्यः स दृष्टो मृडयाति नः । ७ ॥ नमोऽस्तु नीलग्ग्रीवाय सहस्राक्षाय मीढुषे । अथो येऽअस्य सत्त्वानो हन्तेब्भ्यो करन्नमः । ८ ॥ प्रमुञ्च धन्वनस्त्वमुभयो रार्त्न्योर्ज्याम् । याश्च ते हस्तऽ इषवः परा ता भगवो वप । ९ ॥ विज्ज्यन्धनुः । कपर्दिनो विशल्यो बाणवाँ ॥ ऽउत । अनेशन्नस्य याऽ इषवऽआभुरस्य निषङ्गधिः । १० ॥ याते । हेतिर्म्मीढुष्टम हस्ते बभूव ते धनुः । तयास्म्मान्विश्श्वतस्त्वमयक्ष्मया परिब्भुज । ११ ॥ परिते धन्वनो हेतिरस्म्मान्वृणक्तु विश्श्वतः । अथो यऽइषुधिस्तवारेऽ अस्म्मन्निधेहि तम्

। १२ ॥ अवतत्त्य धनुष्ट्वꣳ सहस्राक्ष शतेषुधे । निशीर्य्य
शल्यानाम्मुखा शिवो नः सुमना भव । १३ ॥ नम-
स्तऽआयुधायानाततय धृष्णवे । उभाब्भ्यामुत ते-
नमो बाहुब्भ्यान्तव धन्वने । १४ ॥ मा नो महान्तमुत
मा नोऽ अर्ब्भकम्मा नऽउक्षन्तमुत मा नऽ उक्षितम् ।
मा नो व्वधीः पितरम्मोत मातरम्मा नः प्प्रियास्त-
न्न्वो रुद्र रीरिषः । १५ ॥ मा नस्तोके । तनये मा
नऽआयुषि मा नो गोषु मा नोऽअश्श्वेषुरीरिषः । मा
नो व्वीरान्न्रुद्र भामिनो व्वधीर्हविष्मन्तः सदमित्त्वा
हवामहे । १६ ॥ नमो हिरण्यबाहवे । सेनान्न्ये दि-
शाञ्च पतये नमो नमो व्वृक्षेब्भ्यो हरिकेशेब्भ्यः पशूना-
म्पतये नमो नमः शष्पिञ्जराय त्त्विषीमते पथीना-
म्पतये नमो नमो हरिकेशायोपवीतिने पुष्टानाम्पतये
नमो नमो बब्भ्लुशाय । १७ ॥ नमो बब्भ्लुशाय । व्व्या-
धिनेन्नानाम्पतये नमो नमो भवस्य हेत्यै जगताम्प-
तये नमो नमो रुद्रायाततायिने क्षेत्राणाम्पतये नमो
नमः सूतायाहन्त्यै व्वनानाम्पतये नमो नमो रोहिताय
। १८ ॥ नमो रोहिताय । स्त्थपतये व्वृक्षाणाम्पतये
नमो नमो भुवन्तये व्वारिवस्कृतायौषधीनाम्पतये
नमो नमो मन्त्रिणे व्वाणिजाय कक्षाणाम्पतये नमो न-
मऽउच्चैर्घोषायाक्क्रन्दयते पत्तीनाम्पतये नमो नमः-
कृत्स्नायत या । १९ ॥ नमः कृत्स्नायतया । धावते सत्त्वना-
म्पतये नमो नमः सहमानाय निव्व्याधिनऽआव्व्याधिनी-
नाम्पतये नमो नमो निषङ्गिणे ककुभाय स्तेनानाम्पतये
नमो नमो निचेरवे परिचरायारण्यानाम्पतये नमो

नमो वञ्चते । २० ॥ नमो वञ्चते । परिवञ्चते स्तायूना-
म्पतये नमो नमो निषङ्गिणऽइषुधिमते तस्कराणाम्प-
तये नमो नमः सृकायिभ्यो जिघांᳫसद्भ्यो मुष्णताम्प-
तये नमो नमोऽसिमद्भ्यो नक्तञ्चरद्भ्यो विकृन्तानाम्प-
तये नमः । २१ ॥ नमऽउष्णीषिणे । गिरिचराय कुलु-
ञ्चानाम्पतये नमो नमऽइषुमद्भ्यो धन्वायिभ्यश्च वो
नमो नमऽआतन्वानेभ्यः प्प्रतिदधानेभ्यश्च वो नमो
नमऽआयच्छद्भ्योऽस्यद्भ्यश्च वो नमो नमो विसृजद्भ्यः ।
२२ ॥ नमो विसृजद्भ्यो विध्यद्भ्यश्च वो नमो नमः स्व-
पद्भ्यो जाग्ग्रद्भ्यश्च वो नमो नमः शयानेभ्यऽआ-
सीनेभ्यश्च वो नमो नमस्तिष्ठद्भ्यो धावद्भ्यश्च वो नमो
नमः सभाभ्यः । २३ ॥ नमः सभाभ्यः । सभापति-
भ्यश्च वो नमो नमोऽश्वेभ्योऽश्वपतिभ्यश्च वो नमो
नमऽआव्याधिनीभ्यो विविध्यन्तीभ्यश्च वो नमो न-
मऽउगणाभ्यस्तृᳫहतीभ्यश्च वो नमो नमो गणेभ्यः ।
२४ ॥ नमो गणेभ्यो । गणपतिभ्यश्च वो नमो नमो
व्रातेभ्यो व्रातपतिभ्यश्च वो नमो नमो गृत्सेभ्यो गृत्स-
पतिभ्यश्च वो नमो नमो विरूपेभ्यो विश्वरूपेभ्यश्च
वो नमो नमः सेनाभ्यः । २५ ॥ नमः सेनाभ्यः । सेना-
निभ्यश्च वो नमो नमो रथिभ्योऽअरथेभ्यश्च वो नमो
नमः क्षत्तृभ्यः सङ्ग्रहीतृभ्यश्च वो नमो नमो महद्भ्योऽअ-
र्भकेभ्यश्च वो नमः ।२६॥ नमस्तक्षभ्यो रथकारेभ्यश्च
वो नमो नमः कुलालेभ्यः कर्म्मारेभ्यश्च वो नमो न-
मो निषादेभ्यः पुञ्जिष्ठेभ्यश्च वो नमो नमः श्वनिभ्यो

मृगयुभ्यश्च वो नमो नमः श्वभ्यः। २७॥ नमः श्व-भ्यः। श्वपतिभ्यश्च वो नमो नमो भवाय च रुद्राय च नमः शर्वाय च पशुपतये च नमो नीलग्रीवाय च शितिकण्ठाय च नमः कपर्दिने। २८॥ नमः कपर्दिने। च व्युप्तकेशाय च नमः सहस्राक्षाय च शतधन्वने च नमो गिरिशयाय च शिपिविष्टाय च नमो मीढुष्टमाय चेषुमते च नमो ह्रस्वाय। २९॥ नमो ह्रस्वाय। च वामनाय च नमो बृहते च वर्षीयसे च नमो वृद्धाय च सवृधे च नमोऽग्र्याय च प्रथमाय च नमऽआशवे। ३०॥ नमऽआशवे। चाजिराय च नमः शीघ्र्याय च शीभ्याय च नमऽऊर्म्याय चावस्वन्याय च नमो नादेयाय च द्वीप्याय च। ३१॥ नमो ज्येष्ठाय। च कनिष्ठाय च नमः पूर्वजाय चापरजाय च नमो मध्यमाय चापगल्भाय च नमो जघन्याय च बुध्न्याय च नमः सोभ्याय। ३२॥ नमः सोभ्याय। च प्रतिसर्याय च नमो याम्याय च क्षेम्याय च नमः श्लोक्याय चावसान्याय च नमऽउर्वर्याय च खलाय च नमो वन्याय। ३३॥ नमो वन्याय। च कक्ष्याय च नमः श्रवाय च प्रतिश्रवाय च नमऽआशुषेणाय चाशुरथाय च नमः शूराय चावभेदिने च नमो बिल्मिने। ३४॥ नमो बिल्मिने। च कवचिने च नमो वर्म्मिणे च वरूथिने च नमः श्रुताय च श्रुतसेनाय च नमो दुन्दुभ्याय चाहनन्याय च नमो धृष्णवे। ३५॥ नमो धृष्णवे। च प्रमृशाय च नमो निषङ्गिणे चेषुधिमते च नमस्तीक्ष्णेषवे चायुधिने

च नम॑÷स्वायुधाय॑ च सुधन्व॑ने च । ३६ ॥ नमः॒ स्रु-
त्या॑य । च॒ पथ्या॑य च॒ नमः॒ काट्या॑य च॒ नीप्या॑य च॒
नमः॒ कुल्या॑य च सरस्या॑य च॒ नमो॑ नादेया॑य च वैश-
न्ताय॑ च॒ नमः॒ कूप्या॑य । ३७ ॥ नमः॒ कूप्या॑य । चाव-
ट्या॑य च॒ नमो॒ वीध्र्या॑य चातप्या॑य च॒ नमो॑ मेघ्या॑य
च विद्युत्या॑य च॒ नमो॒ वर्ष्या॑य चावर्ष्या॑य च॒ नमो॑
वात्या॑य । ३८ ॥ नमो॒ वात्या॑य । च॒ रेष्म्या॑य च॒
नमो॑ वास्तव्या॑य च वास्तुपा॑य च॒ नमः॒ सोमा॑य च रु-
द्राय॑ च॒ नम॑स्ताम्राय॑ चारुणाय॑ च॒ नम॑÷शङ्गवे॑ ।३९।
नम॑÷शङ्गवे॑ । च पशुपत॑ये च॒ नम॑ऽउग्राय॑ च भीमाय॑ च॒
नमो॑ऽग्रेवधाय॑ च दूरे वधाय॑ च॒ नमो॑ हन्त्रे च॒ हनी॑-
यसे च॒ नमो॑ वृक्षेभ्यो॒ हरि॑केशेभ्यो॒ नम॑स्ताराय॑ ।
४० ॥ नम॑÷शम्भवाय॑ । च मयो भवाय॑ च॒ नम॑÷ श-
ङ्कराय॑ च मयस्कराय॑ च॒ नम॑÷शिवाय॑ च शिवत॑राय च
। ४१ ॥ नमः॒ पार्य्या॑य । चावार्य्या॑य च॒ नम॑÷प्रतर॑-
णाय चोत्तर॑णाय च॒ नम॒स्तीर्थ्या॑य च॒ कूल्या॑य च॒ न-
मः॒ शष्प्या॑य च॒ फेन्या॑य च॒ नम॑÷सिकत्या॑य । ४२ ।
नम॑÷सिकत्या॑य । च प्रवाह्या॑य च॒ नम॑÷किꣳशिला॑य
च क्षयणाय॑ च॒ नम॑÷कपर्दिने॑ च पुलस्तये॑ च॒ नम॑ऽइरि-
ण्या॑य च प्रपथ्या॑य च॒ नमो॒ व्रज्या॑य । ४३ ॥ नमो॒
व्रज्या॑य । च॒ गोष्ठ्या॑य च॒ नम॒स्तल्प्या॑य च॒ गेह्या॑य
च॒ नमो॑ हृदय्या॑य च निवेष्प्या॑य च॒ नमः॒ काट्या॑य च
गह्वरेष्ठाय च॒ नमः॒ शुष्क्या॑य । ४४ ॥ नमः॒ शुष्क्या॑य
च हरित्या॑य च॒ नम॑÷पाꣳसव्या॑य च रजस्या॑य च॒
नमो॒ लोप्या॑य चोलप्या॑य च॒ नम॑ऽऊर्व्या॑य च॒ सू-

श्रायँ च नमः॑ पुर्णाय॑। ४५ ॥ नमः॑ पुर्णाय॑। च पर्णश-
दाय॑ चु नमः॑ऽउद्गुरमा॑णाय चाभिघ्नुते च नमः॑ऽआखि-
दुते च॑ प्रखिदुते चु नमः॑ऽइषुकृद्भ्यो॑ धनुष्कृद्भ्य॑श्च वो-
नमो॒ नमो॑ वः॑ किरि॒केभ्यो॑ देवाना॒ᳪ हृद॑येभ्यो नमो॑
विचिन्वुत्केभ्यो नमो॑ विक्षिणुत्केभ्यो नमः॑ऽआनिर्हु-
तेभ्यः॑ ।४६॥ द्रापेऽअन्ध॑सस्पते दरि॑द्रुन्नील॑लोहित ॥
आसाम्प्रजाना॑मेषाम्प॑शूनाम्माभेर्म्मारोङ्मो॑ च॑ नः॑ किं-
चुना म॑मत्। ४७ ॥ इुमा रुद्राय॑। तुवसे॑ कपुर्द्दिने॑ क्षु-
यद्वी॑राय प्रभ॑रामहे मुतीः। यथा॑ शमस॑द्द्विपदे च-
तु॑ष्पदे विश्व॑म्पुष्टङ्ग्रामे॑ऽ अुस्मिन्न॑नातुरम् । ४८ ॥
याते॑। रुद्र शिवा तुनूः शिवा विश्वा॑ हं भेषुजी। शि-
वारुत॑स्य॑ भेषुजी तया॑ नो मृड जीवसे॑। ४९ ॥ परि॑नो
रुद्र॑स्य॑ हेतिर्वृ॑णक्तु परि॑त्वेषस्य॑ दुर्म्मुतिर॑घायोः। अव॑-
स्थिरा मुघव॑द्भ्यस्तनुष्व मीढ्वस्तो॒काय तन॑याय मृड
। ५० ॥ मीढु॑ष्टमुशिव॑तम । शिवो न॑ सुमना॑ भव।
पुरमे वृक्षऽआयु॑धन्निधाय कृत्तिं वसा॑नुऽआच॑र पिना॑कं-
म्बिभ्रुदाग॑हि । ५१ ॥ विकि॑रिद्र विलो॑हितु । नमः॑-
स्तेऽअस्तु भगवः। यास्ते॑ सुहस्र॑ᳪ हेतयोन्यमुस्मन्नि-
वपन्तु ताः। ५२ ॥ सुहस्रा॑णि सहस्रुशो बाह्वोस्तव॑ हे-
तयः॑। तासामीशा॑नो भगवः पराचीना मुखा॑कृधि।
। ५३ ॥ असंख्याता सुहस्रा॑णि। ये रुद्राऽअधिभूम्म्याम्
तेषाᳪ सहस्रयोजुनेवुधन्वा॑नि तन्मसि । ५४ ॥
अुस्मिन्नम॑हत्त्यर्णुवेन्तरि॑क्षे भवाऽअधि॑। तेषा॑ᳪ सह-
स्रयोजुनेवु धन्वा॑नि तन्मसि। ५५ नील॑ग्ग्रीवाः शि-

त्तिकण्ठा दिवꣳ रुद्राऽउपश्रिताः । तेषाᳬं सहस्र-
योजनेवधन्वानितन्मसि । ५६ ॥ नीलग्रीवाःशि-
तिकण्ठाः । शर्वाऽअधःक्षमाचराः । तेषाᳬं सहस्रयो-
जनेवधन्वानितन्मसि । ५७ ॥ ये वृक्षेषु । शष्पिञ्जरा
नीलग्रीवा विलोहिताः । तेषाᳬं सहस्रयोजनेवधन्वा-
नितन्मसि । ५८ ॥ ये भूतानामधिपतयो विशिखासः
कपर्दिनः । तेषाᳬं सहस्रयोजनेवधन्वानितन्मसि ।
। ५९ ॥ ये पथाम्पथिरक्षयऽऐलबृदाऽआयुर्युधः । ते-
षाᳬं सहस्रयोजनेवधन्वानितन्मसि । ६० ॥ ये ती-
र्थानि । प्रचरन्ति सृकाहस्ता निषङ्गिणः । तेषाᳬं स-
हस्रयोजनेवधन्वानितन्मसि । ६१ ॥ येन्नेषु । विवि-
ध्यन्ति पात्रेषु पिबतो जनान् । तेषाᳬं सहस्रयोजनेव-
धन्वानितन्मसि । ६२ ॥ यऽएतावन्तश्च भूयाᳬं स-
श्च दिशो रुद्रा वितस्थिरे । तेषाᳬं सहस्रयोजनेवध-
न्वानितन्मसि । ६३ ॥ नमोस्तु । रुद्रेभ्यो ये दिवि
येषां वर्षमिषवः । तेभ्यो दशप्राचीर्दशदक्षिणा दशप्र-
तीचीर्दशोदीचीर्दशोर्ध्वाः । तेभ्यो नमोऽअस्तु ते नो
वन्तु ते नो मृडयन्तु ते यन्द्विष्मो यश्च नो द्वेष्टितमे-
षाञ्जम्भे दध्मः । ६४ ॥ नमोस्तु । रुद्रेभ्यो येन्तरिक्षे
येषां वातऽइषवः । तेभ्यो दशप्राचीर्दशदक्षिणा दश-
प्रतीचीर्दशोदीचीर्दशोर्ध्वाः । तेभ्यो नमोऽअस्तु ते नो
वन्तु ते नो मृडयन्तु ते यन्द्विष्मो यश्च नो द्वेष्टितमे-
षाञ्जम्भे दध्मः । ६५ ॥ नमोस्तु । रुद्रेभ्यो ये पृथि-
व्यां य्येषामन्नमिषवः । तेभ्यो दशप्राचीर्दशदक्षिणा
दशप्रतीचीर्दशोदीचीर्दशोर्ध्वाः । तेभ्यो नमोऽअस्तु

ते नो॑ वन्तु ते नो॑ मृडयन्तु ते यन्द्विष्मो यश्च॑ नो द्वेष्टि तमे॑षाञ्जम्भे॑ दध्मः ॥ ६६ ॥ इति रुद्रे पञ्चमोध्यायः ॥ (एते ६६ मन्त्राः १६ ध्यायोक्ताः १ माद्याः)

अथ 'रुद्रे षष्ठोध्यायः.' हरिः—ॐ—वयꣳ सोम व्रते तव मनस्तनूषु बिभ्रतः । प्रजावन्तःसचेमहि । १ ॥ एषते । रुद्रभागः सहस्वस्राम्बिकया । तञ्जुषस्व स्वाहैषते रुद्र भागऽआखुस्ते पशुः । २ ॥ अव रुद्रमदीमह्यव देवन्त्र्यम्बकम् । यथा नो वस्य सस्करद्यथा नःश्रेयसस्करद्यथा नो व्यवसाययात् । ३ ॥ भेषजमसि । भेषजङ्गवेश्वाय पुरुषाय भेषजम् । सुखम्मेषाय मेष्यै । ४ त्र्यम्बकं यजामहे । सुगन्धिम्पुष्टिवर्द्धनम् । उर्वारुकमिव बन्धनान्मृत्योर्म्मुक्षीय मामृतात् । त्र्यम्बकं यजामहे सुगन्धिम्पतिवेदनम् । उर्वारुकमिव बन्धनादितो मुक्षीयमामुतः । ५ ॥ एतत्ते । रुद्रा वसन्तेन परो मूजवतोतीहि । अवततधन्वा पिनाकवासः कृत्तिवासाऽअहिꣳसन्नः शिवोतीहि । ६ ॥ त्र्यायुषं जमदग्नेः कश्यपस्य त्र्यायुषम् । यद्देवेषु त्र्यायुषन्तन्नोऽअस्तु त्र्यायुषम् । ७ ॥ शिवो नामासि स्वधितिस्ते पिता नमस्तेऽअस्तु मा माहिꣳसीः । निवर्त्तयाम्म्यायुषेन्नाद्याय प्रजननाय रायस्पोषाय सुप्रजास्त्वाय सुवीर्य्याय । ८ ॥ इति रुद्रे षष्ठोध्यायः ॥ (एते ८ मन्त्राः २ याध्यायोक्ताः ५६ दाद्याः) ॥

अथ 'रुद्रे सप्तमोध्यायः.' हरिः—ॐ—उग्रश्च । भीमश्च ध्वान्तश्च धुनिश्च । सासह्वाँश्चाभियुग्वा च विक्षिपः स्वाहा । १ ॥ अग्निꣳहृदयेना शनिꣳहृदयाग्ग्रेण प-

सुपतिङ्कृत्त्स्नुहृदयेन भवं य्यक्का । शर्व्वम्मतस्नाब्भ्या-
मीशानम्मन्युना महादेवमन्तःपर्श्शव्येनोग्ग्रदेवं व्वनि-
ष्ठुना व्वसिष्ठ हनुःशिङ्गीनि कोश्याब्भ्याम्।२॥ उग्ग्रं लो-
हितेन। मित्रꣳ सौव्व्रत्त्येन रुद्रन्दौर्व्व्रत्त्येनेन्द्रम्प्रक्क्रीडेन म-
रुतो बलेन साद्ध्यान्प्रमुदा । भवस्य कण्ठ्यꣳ रुद्र-
स्यान्तःपार्श्व्यम्महादेवस्य यकृच्छर्व्वस्य व्वनिष्ठुः पशुप-
तेः पुरीतत् । ३ ॥ लोमब्भ्यः स्वाहा । लोमब्भ्यः स्वाहा
त्त्वचे स्वाहा त्त्वचे स्वाहा लोहिताय स्वाहा लोहिताय
स्वाहा मेदोब्भ्यः स्वाहा मेदोब्भ्यः स्वाहा । माꣳसेब्भ्यः
स्वाहा माꣳसेब्भ्यः स्वाहा स्नावब्भ्यः स्वाहा स्नाव-
ब्भ्यः स्वाहा स्त्थब्भ्यः स्वाहा स्त्थब्भ्यः स्वाहा मज्जब्भ्यः
स्वाहा मज्जब्भ्यः स्वाहा । रेतसे स्वाहा पायवे स्वाहा
। ४ ॥ आयासाय स्वाहा । प्प्रायासाय स्वाहा सं य्या-
साय स्वाहा व्वियासाय स्वाहोद्द्यासाय स्वाहा । शुचे
स्वाहा शोचते स्वाहा शोचमानाय स्वाहा शोकाय
स्वाहा । ५ ॥ तपसे स्वाहा तप्प्यते स्वाहा तप्प्यमा-
नाय स्वाहा तप्ताय स्वाहा घर्म्माय स्वाहा । निष्कृ-
त्यै स्वाहा प्प्रायश्चित्त्यै स्वाहा । भेषजाय स्वाहा ।६॥
यमाय स्वाहान्तकाय स्वाहा मृत्यवे स्वाहा । ब्रह्मणे
स्वाहा ब्रह्महत्त्यायै स्वाहा व्विश्श्वेब्भ्यो देवेब्भ्यः स्वाहा
द्यावापृथिवीब्भ्याꣳ स्वाहा।७॥ इति रुद्रे सप्तमोध्यायः॥

( एते ७ मन्त्राः ३९ दध्यायोक्ताः ७ माद्याः )

य १८ अथ 'रुद्रे अष्टमोध्यायः'. हरिः—ॐ—व्वाजश्च । मे प्प्रस-
वश्च मे प्प्रयतिश्च मे प्प्रसितिश्च मे धीतिश्च मे क्क्रतुश्च मे
स्वरश्च मे श्श्लोकश्च मे श्श्रवश्च मे श्श्रुतिश्च मे ज्ज्योतिश्च

मे स्वश्च मे यज्ञेन कल्पन्ताम् । १ ॥ प्राणश्च । मे पा-
नश्च मे व्यानश्च मे सुश्च मे चित्तञ्च मऽआधीतञ्च मे
वाक्च मे मनश्च मे चक्षुश्च मे श्रोत्रञ्च मे दक्षश्च मे
बलञ्च मे यज्ञेन कल्पन्ताम् । २ ॥ ओजश्च । मे सह-
श्च मऽआत्मा च मे तनूश्च मे शर्म्म च मे वर्म्म च
मेङ्गानि च मे स्त्थीनि च मे परूꣳषि च मे शरी-
राणि च मऽआयुश्च मे जरा च मे यज्ञेन कल्पन्ताम्
। ३ ॥ ज्यैष्ठ्यञ्च । मऽआधिपत्यञ्च मे मन्युश्च मे भा-
मश्च मे मश्च मेम्भश्च मे जेमा च मे महिमा च मे
वरिमा च मे प्रथिमा च मे वर्षिमा च मे द्राघिमा
च मे वृद्धञ्च मे वृद्धिश्च मे यज्ञेन कल्पन्ताम् । ४ ॥
सत्यञ्च मे । श्रद्धा च मे जगच्च मे धनञ्च मे विश्वञ्च मे
महश्च मे क्रीडा च मे मोदश्च मे जातञ्च मे जनिष्य-
माणञ्च मे सूक्तञ्च मे सुकृतञ्च मे यज्ञेन कल्पन्ताम्
। ५ ॥ ऋतञ्च । मे मृतञ्च मे यक्ष्मञ्च मे नामयच्च मे
जीवातुश्च मे दीर्घायुत्वञ्च मे नमित्रञ्च मे भयञ्च मे
सुखञ्च मे शयनञ्च मे सूषाश्च मे सुदिनञ्च मे यज्ञेन
कल्पन्ताम् । ६ ॥ यन्ता च । मे धर्त्ता च मे क्षेमश्च
मे धृतिश्च मे विश्वञ्च मे महश्च मे संविच्च मे ज्ञात्रञ्च
मे सूश्च मे प्रसूश्च मे सीरञ्च मे लयश्च मे यज्ञेन क-
ल्पन्ताम् । ७ ॥ शञ्च मे मयश्च मे प्रियञ्च मे नुका-
मश्च मे कामश्च मे सौमनसश्च मे भगश्च मे द्रविणञ्च
मे भद्रञ्च मे श्रेयश्च मे वसीयश्च मे यशश्च मे यज्ञेन
कल्पन्ताम् । ८ ॥ ऊर्क्च । मे सूनृता च मे पयश्च मे
रसश्च मे घृतञ्च मे मधु च मे सग्धिश्च मे सपीतिश्च

मे कृषिश्च मे वृष्टिश्च मे जैत्रञ्च मऽऔद्भिद्यञ्च मे यु-
ज्ञेन कल्पन्ताम्। ९ ॥ रयिश्च। मे रायश्च मे पुष्टञ्च
मे पुष्टिश्च मे विभु च मे प्रभु च मे पूर्णञ्च मे पूर्णत-
रञ्च मे कुयवञ्च मे क्षितञ्च मे न्नञ्च मे क्षुच्च मे यज्ञेन
कल्पन्ताम् । १० ॥ वित्तञ्च । मे वेद्यञ्च मे भूतञ्च
मे भविष्यच्च मे सुगञ्च मे सुपथ्यञ्च मऽऋद्धञ्च मऽ-
ऋद्धिश्चमे क्लृप्तञ्च मे क्लृप्तिश्च मे मतिश्च मे सुमतिश्च
मे यज्ञेन कल्पन्ताम् । ११ ॥ व्रीहयश्च । मे यवाश्च
मे माषाश्च मे तिलाश्च मे मुद्गाश्च मे खल्वाश्च मे
प्रियङ्गवश्च मेऽणवश्च मे श्यामाकाश्च मे नीवाराश्च मे
गोधूमाश्च मे मसूराश्च मे यज्ञेन कल्पन्ताम्।१२॥ अ-
श्मा च। मे मृत्तिका च मे गिरयश्च मे पर्वताश्च मे सिक-
ताश्च मे वनस्पतयश्च मे हिरण्यञ्च मे यश्च मे श्यामञ्च
मे लोहञ्च मे सीसञ्च मे त्रपु च मे यज्ञेन कल्पन्ताम्
। १३ ॥ अग्निश्च । मऽआपश्च मे वीरुधश्च मऽओष-
धयश्चमे कृष्टपच्याश्च मे कृष्टपच्याश्च मे ग्राम्याश्च
मे पशवऽआरण्याश्च मे वित्तञ्च मे वित्तिश्च मे भूतञ्च
मे भूतिश्च मे यज्ञेन कल्पन्ताम् । १४ ॥ वसु च । मे
वसतिश्च मे कर्म्म च मे शक्तिश्च मेऽर्थश्च मऽएमश्च
मऽइत्या च मे गतिश्च मे यज्ञेन कल्पन्ताम् । १५ ॥
अग्निश्च । मऽइन्द्रश्च मे सोमश्च मऽइन्द्रश्च मे सवि-
ता च मऽइन्द्रश्च मे सरस्वती च मऽइन्द्रश्च मे पूषा च
मऽइन्द्रश्च मे बृहस्पतिश्च मऽइन्द्रश्च मे यज्ञेन क-
ल्पन्ताम् । १६ ॥ मित्रश्च । मऽइन्द्रश्च मे वरुणश्च

मुऽइन्द्रंश्च मे धाता च मुऽइन्द्रंश्च मे त्वष्टा च मुऽइन्द्रंश्च मे मुरुतंश्च मुऽइन्द्रंश्च मे विश्वे च मे देवाऽइन्द्रंश्च मे युज्ञेन कल्पन्ताम्। १७ ॥ पृथिवी च। मुऽइन्द्रंश्च मेन्तरिक्षञ्च मुऽइन्द्रंश्च मे द्यौश्च मुऽइन्द्रंश्च मे समाश्च मुऽइन्द्रंश्च मे नक्षत्राणि चमुऽइन्द्रंश्च मे दिशंश्च मुऽइन्द्रंश्च मे युज्ञेन कल्पन्ताम्। १८ ॥ अंशुश्च। मे रश्मिश्च मे दाभ्यश्च मे धिपतिश्च मऽउपाꣳशुश्च मेन्तर्यामश्च मऽऐन्द्रवायुवश्च मे मैत्रावरुणश्च मऽआश्विनश्च मे प्रतिप्रस्थानंश्च मे शुक्रश्च मे मन्थी च मे युज्ञेन कल्पन्ताम्। १९ ॥ आग्रयणश्च। मे वैश्वदेवश्च मे ध्रुवश्च मे वैश्वानरश्च मऽऐन्द्राग्नश्च मे महावैश्वदेवश्च मे मरुत्वतीयांश्च मे निष्केवल्यश्च मे सावित्रश्च मे सारस्वतश्च मे पात्नीवतश्च मे हारियोजनश्च मे युज्ञेन कल्पन्ताम्। २० ॥ स्रुचश्च। मे चमसाश्च मे वायव्यानि च मे द्रोणकलशश्च मे ग्रावाणश्च मे धिषवणे च मे पूतभृच्च मऽआधवनीयश्च मे वेदिश्च मे बर्हिश्च मे वभृथश्च मे स्वगाकारश्च मे युज्ञेन कल्पन्ताम् ॥ २१ ॥ अग्निश्च। मे घर्मश्च मेर्कश्च मे सूर्य्यश्च मे प्राणश्च मेश्वमेधश्च मे पृथिवी च मे दितिश्च मे दितिश्च मे द्यौश्च मेङ्गुलयꣳशक्करयो दिशश्च मे युज्ञेन कल्पन्ताम्। २२ ॥ व्रतञ्च। मऽऋतवश्च मे तपश्च मे संवत्सरश्च मे होरात्रेऽऊर्वष्ठीवे बृहद्रथन्तरे च मे युज्ञेन कल्पन्ताम्। २३ ॥ एका च। मे तिस्रश्च मे तिस्रश्च मे पञ्च च मे पञ्च च मे सप्त च

मे सप्तचं मे नवं च मे नवं च मऽ एकादश च मऽए-
कादश च मे त्रयोदश च मे त्रयोदश च मे पञ्च-
दश च मे पञ्चदश च मे सप्तदश च मे सप्तदश च
मे नवदश च मे नवदश च मऽएकविꣳशति-
श्च मऽएकविꣳशतिश्च मे त्रयोविꣳशतिश्च मे त्रयो-
विꣳशतिश्च मे पञ्चविꣳशतिश्च मे पञ्चविꣳशतिश्च
मे सप्तविꣳशतिश्च मे सप्तविꣳशतिश्च मे नवविꣳ
शतिश्च मे नवविꣳशतिश्च मऽ एकत्रिꣳशच्च मऽ एक-
त्रिꣳशच्चमे त्रयस्त्रिꣳशच्च मे यज्ञेन कल्पन्ताम् ।२४॥
चतस्रश्च । मे ष्टौ चं मे ष्टौ चं मे द्वादश च मे द्वादश
च मे षोडश च मे षोडश च मे द्विꣳशतिश्च मे विꣳ
शतिश्च मे चतुर्विꣳशतिश्च मे चतुर्विꣳशतिश्च मे ष्टाविꣳ
शतिश्च मे ष्टाविꣳशतिश्च मे द्वात्रिꣳशच्च मे द्वात्रिꣳ
शच्च मे षट्त्रिꣳशच्च मे षट्त्रिꣳशच्च मे चत्वारिꣳशच्च
मे चत्वारिꣳशच्च मे चतुश्चत्वारिꣳशच्च मे चतुश्चत्वारिꣳ
शच्च मे ष्टाचत्वारिꣳशच्च मे यज्ञेन कल्पन्ताम् ।२५॥
त्र्यविश्च । मे त्र्यवी चं मे दित्यवाट् च मे दित्यौहि चं मे
पञ्चाविश्च मे पञ्चावी चं मे त्रिवत्सश्च मे त्रिवत्सा चं
मे तुर्य्यवाट् च मे तुर्य्यौही चं मे यज्ञेन कल्पन्ताम् ।२६॥
पृष्ठवाट् । मे पष्ठौही चं मऽउक्षा चं मे वशा चं मऽ-
ऋषभश्च मे वेहच्च मे नड्वाँश्च मे धेनुश्च मे यज्ञेन क-
ल्पन्ताम् । २७ ॥ वाजाय स्वाहा । प्रसवाय स्वाहा
पिजाय स्वाहा क्रतवे स्वाहा वसवे स्वाहा हर्पतये
स्वाहान्हे मुग्धाय स्वाहा मुग्धाय वै नꣳशिनाय
स्वाहा विनꣳशिनऽआन्त्यायनाय स्वाहान्त्याय भौव-

नाय स्वाहा भुवनस्य पतये स्वाहाधिपतये स्वाहा प्प्र-
जापतये स्वाहा। इयन्ते राण्मित्रायं यन्तासि यमन-
ऽऊर्ज्जे त्वा वृष्ट्यै त्वा प्प्रजानान्त्वाधिपत्याय। २८॥
आयुर्य्यज्ञेन कल्पतामप्प्राणो यज्ञेन कल्प्पताञ्चक्षुर्य्यज्ञेन
कल्प्पताᳪ श्श्रोत्रं यज्ञेन कल्प्पतां व्वाग्ग्यज्ञेन कल्प्पता-
म्मनो यज्ञेन कल्प्पतामात्त्मा यज्ञेन कल्प्पताम्ब्रम्ह्मा
यज्ञेन कल्प्पताञ्ज्योतिर्य्यज्ञेन कल्प्पताᳪ स्वर्य्यज्ञेन क-
ल्प्पतास्पृष्ठं य्यज्ञेन कल्प्पतां यज्ञो यज्ञेन कल्प्पताम्।
स्तोमश्च यजुश्च ऽऋक्‍च साम च बृहच्च रथन्तरञ्च।
स्वर्द्देवाऽअगन्मामृताऽअभूमप्प्रजापतेःप्प्रजाऽ अभूम-
व्वेट्स्वाहा। २९॥ इति रुद्रे अष्टमोध्यायः॥ (एते २९
मन्त्राः १८ ध्यायोक्ताः १ माद्याः)॥

अथ 'रुद्रे शान्त्याध्यायः' हरिः—ॐ—ऋचं व्वाचम्प्रप-
द्ये मनो यजुःप्प्रपद्ये सामप्प्राणम्प्रपद्ये चक्षुःश्श्रोत्रम्प्र-
पद्ये। व्वागोजः सहौजो मयिप्प्राणापानौ। १॥ य-
न्मे। छिद्रञ्चक्षुषो हृदयस्य मनसो व्वातितृण्णम्बृहस्प्प-
तिर्म्मे तद्दधातु शन्नो भवतु भुवनस्य यस्प्पतिः। २॥
भूर्ब्भुवःस्वः तत्सवितुर्व्वरेण्यं०। ३॥ कयान श्चित्रऽ-
आभुव दूती सदा वृधःसखा। कयाशचिष्ठ या वृता
। ४॥ कस्त्वा। सत्यो मदानाम्मꣳहिष्ठो मत्सदन्ध-
सः। दृढाचिदारुजे व्वसु। ५॥ अभीषुणः। सखीना-
मविता जरितॄणाम्। शतम्भवास्यूतिभिः। ६॥
कया त्वन्नऽऊत्याभिप्प्रमन्दसे वृषन्। कयास्तोतृ-
भ्यऽआभर। ७॥ इन्द्रो व्विश्वस्य। राजति। शन्नोऽ-
अस्तु द्विपदे शञ्चतुष्प्पदे। ८॥ शन्नो मित्रःशं व्वरु-

णऽशन्नो भवत्त्वर्य्यमा । शन्नऽइन्द्रो बृहस्प्पतिःशन्नो
व्विष्णुरुरुक्क्रमः । ९ ॥ शन्नो व्वातः । पवताᳬशन्न-
स्तपतु सूर्य्यः । शन्नःकनिक्रदद्देवः पर्ज्जन्योऽअभिवर्ष-
तु । १० ॥ अहा निशम्भवन्तु नःशᳬ रात्रीः प्रति-
धीयताम् शन्नऽइन्द्राग्ग्नी भवतामवोभिः शन्नऽइन्द्रा
वरुणा रातहव्व्या । शन्नऽइन्द्रा पूषणा व्वाजसा तौ
शमिन्द्रा सोमा सुविताय शं य्योः । ११ ॥ शन्नो
देवीरभिष्ट्टयऽआपो भवन्तु पीतये । शं य्योरभिस्र-
वन्तु नः । १२ ॥ स्योना पृथिवि । नो भवानृक्षरा
निवेशनी । यच्छा नःशर्म्म सप्प्रथाः । १३ ॥ आपो
हि । ष्ठामयो भुवस्तानऽऊर्ज्जे दधातन । महेरणाय च-
क्षसे । १४ ॥ यो वःशिवतमो रसस्तस्य भाजयते हनः
उशतीरिवमातरः । १५ ॥ तस्म्माऽअरङ्गमामवो यस्य
क्षयाय जिन्वथ । आपो जनयथा च नः । १६ ॥
द्यौःशान्तिरन्तरिक्षᳬ शान्तिः पृथिवी शान्तिराप-
शान्तिरोषधयःशान्तिः । व्वनस्प्पतयःशान्तिर्व्विश्वेदेवाः
शान्तिर्ब्रह्मशान्तिः सर्व्वᳬशान्तिःशान्तिरेव शान्तिᳬ सा
मा शान्तिरेधि । १७ ॥ दृते दृᳬहं मा मित्रस्य मा च-
क्षुषा सर्वाणि भूतानि समीक्षन्ताम् । मित्रस्याहञ्चक्षुषा
सर्व्वाणि भूतानि समीक्षे । मित्रस्य चक्षुषा समीक्षामहे
। १८ ॥ दृते दृᳬ हमा । ज्योक्तेसन्दृशि जीव्व्यासं
ज्ज्योक्ते सन्दृशि जीव्व्यासम् । १९ ॥ नमस्ते हरसे
शोचिषे नमस्तेऽ अस्त्वर्च्चिषे । अन्याँस्तेऽअस्म्मत्तपन्तु
हेतयःपावकोऽअस्म्मभ्यᳬ शिवो भव । २० ॥ नमस्ते
ऽअस्तु व्विद्युते नमस्ते स्तनयित्त्नवे । नमस्ते भगवन्नस्तु

यतः स्व÷सुमीहसे । २१ ॥ यतो यतःसुमीहसे ततो नोऽअभयङ्कुरु । शन्नः÷कुरु प्रजाभ्यो भयन्नः पशुभ्यः÷ । २२ ॥ सुमित्रियानुऽ आपुऽ ओषधयः सन्तु दुर्म्मित्रियास्तस्मै सन्तु योस्मान्द्वेष्टियञ्च वयन्द्विष्मः । २३ ॥ तच्चक्षुर्देवहितम्पुरस्ताच्छुक्रमुच्चरत् । पश्येम शरदः÷शतञ्जीवेम शरदः÷शतꣳ शृणुयाम शरदः÷शतम्प्रब्रवाम शरदः÷ शतमदीनाःस्याम शरदः÷ शतम्भूयश्च शरदः÷शतात् । २४ ॥ इति रुद्रे शान्त्यध्यायः ॥ (एते २४ मन्त्राः ३६ दध्यायोक्ताः १ माद्याः)

अथ 'रुद्रे स्वस्तिप्रार्थनामन्त्राध्यायः । ('अथक्षेपकम्')—ॐ स्वस्ति नुऽइन्द्रो० । १ $\frac{१९}{२५}$ ॥ पयः÷पृथिव्याम्० । २ $\frac{३६}{३८}$ ॥ सद्योजातं प्रपद्यामि सद्योजाताय वै नमो नमः । भवे भवे नाति भवे भवस्वमां भवोद्भवाय नमः । ३ ॥ वामदेवाय नमो ज्येष्ठाय नमः श्रेष्ठाय नमो रुद्राय नमः । कालाय नमः कलविकरणाय नमो बलविकरणाय नमो । ४ ॥ बलाय नमो बलप्रमथनाय नमः । सर्वभूतदमनाय नमो मनोन्मनाय नमः । ५ ॥ अघोरेभ्योऽथघोरेभ्यो घोरघोरतरेभ्यः । सर्वेभ्यः सर्व सर्वेभ्यो नमस्ते अस्तु रुद्ररूपेभ्यः । ६ ॥ तत्पुरुषाय विद्महे महादेवाय धीमहि । तन्नो रुद्रः प्रचोदयात् । ७ ॥ ईशानः सर्वविद्यानामीश्वरः सर्वभूतानाम । ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिर्ब्रह्मा शिवो मे अस्तु सदाशिवोम् । ८ ॥ ॐ सर्वेषां वाऽएष वेदानाꣳ रसो यत्साम सर्वेषामेवैनमेतद्दानाꣳ रसेनाभिषिञ्चति । ९ ॥ ॐ शान्ति शान्तिः सुशान्तिर्भवतु । सर्वारिष्टशान्तिर्भवतु ॥ (इति क्षेपकम् ।)

इति रुद्रे स्वस्तिप्रार्थनामन्त्राध्यायः ॥ इति रुद्रः ॥

५१२. अथ 'गणेशाथर्वशीर्षम्'—ॐ नमस्ते गणपतये। त्वमेव प्रत्यक्षं तत्त्वमसि। त्वमेव केवलं कर्त्तासि। त्वमेव केवलं धर्त्तासि। त्वमेव केवलं हर्त्तासि। त्वमेव सर्वं खल्विदं ब्रह्मासि। त्वं साक्षादात्मासि नित्यम्। ऋतं वच्मि। सत्यं वच्मि। अव त्वं माम्। अव वक्तारम्। अव श्रोतारम्। अव दातारम्। अव धातारम्। अवानूचानमव शिष्यम्। अव पश्चात्तात्। अव पुरस्तात्। अवोत्तरात्तात्। अव दक्षिणात्तात्। अव चोर्ध्वात्तात्। अवाधरात्तात्। सर्वतो मां पाहि पाहि समन्तात्। त्वं वाङ्मयस्त्वं चिन्मयः। त्वमानन्दमयस्त्वं ब्रह्ममयः। त्वं सच्चिदानन्दाद्वितीयोऽसि। त्वं प्रत्यक्षं ब्रह्मासि। त्वं ज्ञानमयो विज्ञानमयोऽसि। सर्वं जगदिदं त्वत्तो जायते। सर्वं जगदिदं त्वत्तस्तिष्ठति। सर्वं जगदिदं त्वयि लयमेष्यति। सर्वं जगदिदं त्वयि प्रत्येति। त्वं भूमिरापोऽनलोऽनिलो नभः। त्वं चत्वारिवाक् पदानि। त्वं गुणत्रयातीतः। त्वमवस्थात्रयातीतः। त्वं देहत्रयातीतः। त्वं कालत्रयातीतः। त्वं मूलाधारस्थितोऽसि नित्यम्। त्वं शक्तित्रयात्मकः। त्वां योगिनो ध्यायन्ति नित्यम्। त्वं ब्रह्मा त्वं विष्णुस्त्वं रुद्रस्त्वमिन्द्रस्त्वमग्निस्त्वं वायुस्त्वं सूर्यस्त्वं चन्द्रमास्त्वं ब्रह्मभूर्भुवः स्वरोम्। गणादीन्पूर्वमुच्चार्य वर्णादींस्तदनन्तरम्। अनुस्वारः परतरः। अर्धेन्दुलसितम्। तारेण रुद्धम्। एतत्तव मनुस्वरूपम्। गकारः पूर्वरूपम्। अकारो मध्यमरूपम्। अनुस्वारश्चान्त्यरूपम्। बिन्दुरुत्तररूपम्। नादः सन्धानम्। सꣳहिता सन्धिः। सैषा गणेशविद्या। गणक ऋषिः निचृद्गायत्री छन्दः। गणपतिर्देवता ॐ गं गणपतये नमः। एकदन्ताय विद्महे वक्रतुण्डाय धीमहि। तन्नो दन्ती प्रचोदयात्। एकदन्तं चतुर्हस्तं पाशमङ्कुशधारिणम्। रदं च वरदं हस्तैर्बिभ्राणं मूषकध्वजम्। रक्तं लम्बोदरं शूर्पकर्णकं रक्तवाससम्। रक्तगन्धानुलिप्ताङ्गं रक्तपुष्पैः सुपूजितम्। भक्तानुकम्पिनं देवं जगत्कारणमच्युतम्। आविर्भूतञ्च सृष्ट्यादौ प्रकृतेः पुरुषात्परम्। एवं ध्यायति यो नित्यं स योगी योगिनां वरः। नमो व्रातपतये नमो गणपतये नमः प्रमथपतये नमस्तेऽस्तु लम्बो-

दरायैकदन्ताय विघ्ननाशिने शिवसुताय श्रीवरदमूर्त्तये नमः। एतदथर्वशीर्षं योधीते। स ब्रह्मभूयाय कल्पते। स सर्वविघ्नैर्न बाध्यते। स सर्वतः सुखमेधते। स पञ्चमहापापात्प्रमुच्यते। सायमधीयानो दिवसकृतं पापं नाशयति। प्रातरधीयानो रात्रिकृतं पापं नाशयति। सायम्प्रातः प्रयुञ्जानो अपापो भवति। सर्वत्राधीयानोऽपविघ्नो भवति। धर्ममर्थकामं मोक्षञ्च विन्दति। इदमथर्वशीर्षमशिष्याय न देयम्। यो यदि मोहाद्दास्यति। स पापीयान् भवति। सहस्रावर्तनाद्यं यं काममधीते। तं तमनेन साधयेत्। अनेन गणपतिमभिषिञ्चति। स वाग्मी भवति। चतुर्थ्यामनश्नञ्जपति। स विद्यावान् भवति। इत्यथर्वणवाक्यम्। ब्रह्माद्यावरणं विद्यान्न बिभेति कदाचनेति। यो दूर्वाङ्कुरैर्यजति। स वैश्रवणोपमो भवति। यो लाजैर्यजति। स यशोवान् भवति। स मेधावान् भवति। यो मोदकसहस्रेण यजति। स वांछितफलमवाप्नोति। यः साज्यसमिद्भिर्यजति। स सर्वं लभते स सर्वं लभते। अष्टौ ब्राह्मणान् सम्यग्ग्राहयित्वा। सूर्यवर्चस्वी भवति। सूर्यग्रहे महानद्यां प्रतिमासन्निधौ वा जप्त्वा। सिद्धमन्त्रो भवति। महाविघ्नात्प्रमुच्यते। महादोषात्प्रमुच्यते। महाप्रत्यवायात्प्रमुच्यते। स सर्वविद्भवति स सर्वविद्भवति। य एवं वेद। इत्युपनिषत्। ॐ शान्तिः शान्तिः शान्तिः॥ इति गणेशाथर्वशीर्षम्॥

५१३. अथ 'नारायणाथर्वशीर्षम्.'—अथ पुरुषो ह वै नारायणोऽकामयत प्रजाः सृजेयेति। नारायणात्प्राणो जायते। मनः सर्वेन्द्रियाणि च। खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी। नारायणाद्ब्रह्मा जायते। नारायणाद्विष्णुर्जायते। नारायणाद्रुद्रो जायते। नारायणादिन्द्रो जायते। नारायणात्प्रजापतिः प्रजायते। नारायणाद्द्वादशादित्या रुद्रा वसवः सर्वाणि छन्दांसि। नारायणाद्देवाः समुत्पद्यन्ते। नारायणात्प्रवर्तन्ते। नारायणे प्रलीयन्ते। अथादित्यो नारायणः। ब्रह्मा नारायणः। शिवश्च नारायणः। शक्रश्च नारायणः। कालश्च नारायणः। दिशश्च नारायणः। ऊर्ध्वं च नारायणः। अधश्च नारायणः। अन्तर्बहिश्च नारायणः।

नारायण एवेदꣳसर्वं यद्भूतं यच्च भाव्यम् । निष्कलो निरञ्जनो निर्विकल्पो निराख्यातः शुद्धो देव एको नारायणो न द्वितीयोऽस्ति कश्चित् । य एवं वेद । स विष्णुरेव भवति स विष्णुरेव भवति । ॐ इत्यग्रे व्याहरेत् । नम इति पश्चात् । नारायणायेत्युपरिष्टात् । ॐ इत्येकाक्षरम् । नम इति द्वे अक्षरे । नारायणायेति पञ्चाक्षराणि । एतद्वै नारायणस्याष्टाक्षरं पदम् । यो ह वै नारायणस्याष्टाक्षरं पदमध्येति । अनुपब्रवः सर्वमायुरेति । विन्दते प्राजापत्यं रायस्पोषं गौपत्यम् ततोऽमृतत्वमश्नुते ततोऽमृतत्वमश्नुत इति । प्रत्यगानन्दं ब्रह्मपुरुषं प्रणवस्वरूपम् । अकार उकारो मकार इति । तानेकधा संयोज्य तदेव तदोमिति । यमुक्त्वा मुच्यते योगी जन्मसंसारबन्धनात् । ॐ नमो नारायणायेति मन्त्रोपासकः वैकुण्ठभुवनं गच्छति । तदिदं परमं पुण्डरीकं विज्ञानघनम् । तस्मात्तडिदाभमात्रम् । ब्रह्मण्यो देवकीपुत्रो ब्रह्मण्यो मधुसूदनः । सर्वभूतस्थमेकं वै नारायणम् । कारणरूपं परब्रह्मकम् । एतदथर्वशीर्षं योऽधीते । सायमधीयानो दिवसकृतं पापं नाशयति । प्रातरधीयानो रात्रिकृतं पापं नाशयति । सायं प्रातः प्रयुञ्जानो अपापो भवति । मध्यन्दिनमादित्याभिमुखोऽधीयानः सद्यः पञ्चमहापातकोपपातकेभ्यो मुच्यते । सर्ववेदपारायणपुण्यं लभते । श्रीनारायणसायुज्यमवाप्नोति । य एवं वेद । इत्युपनिषत् ॥ इति नारायणाथर्वशीर्षम् ॥

५१४. अथ 'शिवाथर्वशीर्षम्.'—(शिरउपनिषत्)—ॐ देवा ह वै स्वर्गलोकमायंस्ते रुद्रमपृच्छन् को भवानिति । सोऽब्रवीदहमेकः प्रथममासोद्वर्तामि च भविष्यामि च नान्यः कश्चिन्मत्तो व्यतिरिक्त इति । सोऽन्तरादन्तरं प्राविशद्दिशश्चान्तरं प्राविशत्सोऽहं नित्यानित्यो व्यक्ताव्यक्तो ब्रह्माब्रह्माहं प्राञ्चः प्रत्यञ्चोऽहं दक्षिणाञ्च उदञ्चोऽहमधश्चोर्ध्वश्चाहं दिशश्च प्रतिदिशश्चाहं पुमानपुमान्स्त्रियश्चाहं सावित्र्यहं गायत्र्यहं त्रिष्टुब्जगत्यनुष्टुप्चाऽहं छन्दोऽहं सत्योऽहं गार्हपत्यो दक्षिणाग्निराहवनीयोऽहं गौरहं गौर्यहमृगहं यजुरहं सामाहमथर्वाङ्गिरसोऽहं ज्येष्ठोऽहं श्रेष्ठोऽहं वरिष्ठोऽहमा-

पोहं तेजोऽहं गुह्योऽहमरण्योऽहमक्षरमहं क्षरमहं पुष्करमहं पवित्रमहमुग्रश्च वलिश्च पुरस्ताज्ज्योतिरित्यहमेव सर्वेभ्यो मामेव स सर्वः समायो मां वेद स देवान्वेद सर्वांश्च वेदान् साङ्गानपि ब्रह्म ब्राह्मणैश्च गां गोभिर्ब्राह्मणान् ब्राह्मणेन हविर्हविषा आयुरायुषा सत्यं सत्येन धर्मेण धर्मं तर्पयामि स्वेन तेजसा । ततो ह वै ते देवा रुद्रमपृच्छन् ते देवा रुद्रमपश्यन् ते देवा रुद्रमध्यायन् ते देवा ऊर्ध्वबाहवो रुद्रं स्तुवन्ति । १ ॥ ॐ यो वै रुद्रः स भगवान् यश्च ब्रह्मा तस्मै वै नमो नमः । १ ॥ यो वै रुद्रः स भगवान् यश्च विष्णुस्तस्मै० । २ ॥ यो वै रुद्रः स भगवान् यश्च स्कन्दस्तस्मै० । ३ ॥ यो वै रुद्रः स भगवान् यश्चेन्द्रस्तस्मै० । ४ ॥ यो वै रुद्रः स भगवान् यश्चाग्निस्तस्मै० । ५ ॥ यो वै रुद्रः स भगवान् यश्च वायुस्तस्मै० । ६ ॥ यो वै रुद्रः स भगवान् यश्च सूर्यस्तस्मै० । ७ ॥ यो वै रुद्रः स भगवान् यश्च सोमस्तस्मै० । ८ ॥ यो वै रुद्रः स भगवान् येऽष्टौ ग्रहास्तस्मै० । ९ ॥ यो वै रुद्रः स भगवान् ये चाष्टौ प्रतिग्रहास्तस्मै० । १० ॥ यो वै रुद्रः स भगवान् यच्च भूस्तस्मै० । ११ ॥ यो वै रुद्रः स भगवान् यच्च भुवस्तस्मै० । १२ ॥ यो वै रुद्रः स भगवान् यच्च स्वस्तस्मै० । १३ ॥ यो वै रुद्रः स भगवान् यच्च महस्तस्मै० । १४ ॥ यो वै रुद्रः स भगवान् या च पृथिवी तस्मै० । १५ ॥ यो वै रुद्रः स भगवान् यच्चान्तरिक्षं तस्मै० । १६ ॥ यो वै रुद्रः स भगवान् या च द्यौस्तस्मै० । १७ ॥ यो वै रुद्रः स भगवान् याश्चापस्तस्मै० । १८ ॥ यो वै रुद्रः स भगवान् यच्च तेजस्तस्मै० । १९ ॥ यो वै रुद्रः स भगवान् यश्च कालस्तस्मै० । २० ॥ यो वै रुद्रः स भगवान् यश्च यमस्तस्मै० ॥२१॥ यो वै रुद्रः स भगवान् यश्च मृत्युस्तस्मै० । २२ ॥ यो वै रुद्रः स भगवान् यच्चामृतं तस्मै० । २३ ॥ यो वै रुद्रः स भगवान् यच्चाकाशं तस्मै० । २४ ॥ यो वै रुद्रः स भगवान् यच्च विश्वं तस्मै० । २५ ॥ यो वै रुद्रः स भगवान् यच्च स्थूलं तस्मै० । २६ ॥ यो वै रुद्रः स भगवान् यच्च सूक्ष्मं तस्मै० । २७ ॥ यो वै रुद्रः स भगवान् यच्च शुक्लं तस्मै० । २८ ॥ यो वै रुद्रः स भगवान् यच्च कृष्णं

तस्मै० । २९ ॥ यो वै रुद्रः स भगवान् यच्च कृत्स्नं तस्मै० । ३० ॥ यो वै रुद्रः स भगवान् यच्च सत्यं तस्मै० । ३१ ॥ यो वै रुद्रः स भगवान् यच्च सर्वं तस्मै० । ३२ ॥ भूस्ते आदिर्मध्यं भुवस्ते स्वस्ते शीर्षं विश्वरूपोऽसि ब्रह्मैकस्त्वं द्विधा त्रिधा वृद्धिस्त्वं शान्तिस्त्वं पुष्टिस्त्वं हुतमहुतं दत्तमदत्तं सर्वमसर्वं विश्वमविश्वं कृतमकृतं परमपरं परायणञ्च त्वम् अपामसोमममृता अभूमागन्म ज्योतिरविदाम देवान् । किंनूनमस्मान् कृणवदरातिः । किमु धूर्तिरमृतं मर्त्यस्य सोमसूर्यपुरस्तात्सूक्ष्मः पुरुषः सर्वं जगद्धितं वा एतदक्षरं प्राजापत्यं सौम्यं सूक्ष्मं पुरुषं ग्राह्यमग्राह्येण भावं भावेन सौम्यं सौम्येन सूक्ष्मं सूक्ष्मेण वायव्यं वायव्येन ग्रसति तस्मै महाग्रासाय वै नमो नमः । हृदिस्था देवताः सर्वा हृदि प्राणाः प्रतिष्ठिताः । हृदि त्वमसि यो नित्यं तिस्रो मात्राः परस्तु सः । तस्योत्तरतः शिरो दक्षिणतः पादौ य उत्तरतः स ओङ्कारः य ओङ्कारः स प्रणवः यः प्रणवः स सर्वव्यापी यः सर्वव्यापी सोऽनन्तः योऽनन्तस्तत्तारं यत्तारं तच्छुक्लं यच्छुक्लं तत्सूक्ष्मं यत्सूक्ष्मं तद्वैद्युतं तद्वैद्युतं तत्परं ब्रह्म यत् परं ब्रह्म स एकः य एकः स रुद्रः यो रुद्रः स ईशानः य ईशानः स भगवान् महेश्वरः । ३ ॥ अथ कस्मादुच्यते ओङ्कारः यस्मादुच्चार्यमाण एव प्राणानूर्ध्वमुत्क्रामयति तस्मादुच्यते ओङ्कारः । अथ कस्मादुच्यते प्रणवः यस्मादुच्चार्यमाण एव ऋग्यजुःसामाथर्वाङ्गिरसं ब्रह्म ब्राह्मणेभ्यः प्रणामयति नामयति च तस्मादुच्यते प्रणवः । अथ कस्मादुच्यते सर्वव्यापी यस्मादुच्चार्यमाण एव यथा स्नेहेन पललपिण्डमिव शान्तरूपमोतप्रोतमनुप्राप्तो व्यतिषक्तश्च तस्मादुच्यते सर्वव्यापी । अथ कस्मादुच्यतेऽनन्तः यस्मादुच्चार्यमाण एव तिर्यगूर्ध्वमधस्ताच्चास्यान्तो नोपलभ्यते तस्मादुच्यतेऽनन्तः । अथ कस्मादुच्यते तारं यस्मादुच्चार्यमाण एव गर्भजन्मव्याधिजरामरणसंसारमहाभयात्तारयति त्रायते च तस्मादुच्यते तारम् । अथ कस्मादुच्यते शुक्लं यस्मादुच्चार्यमाण एव क्रन्दते क्लामयति च तस्मादुच्यते शुक्लम् । अथ कस्मादुच्यते सूक्ष्मं यस्मादुच्चार्यमाण एव सूक्ष्मो भूत्वा शरीराण्यधितिष्ठति सर्वाणि चाङ्गान्यभिमृश्यति तस्मादुच्यते सूक्ष्मम् । अथ कस्मादुच्यते वैद्युतम् यस्मादुच्चार्यमाण

एव व्यक्ते महति तमसि द्योतयति तस्मादुच्यते वैद्युतम् । अथ कस्मादुच्यते परं ब्रह्म यस्मात् परमपरं परायणञ्च बृहद्बृहत्या बृंहयति तस्मादुच्यते परं ब्रह्म । अथ कस्मादुच्यते एकः यः सर्वान् प्राणान् सम्भक्ष्य सम्भक्षणेनाजः संसृजति विसृजति तीर्थमेके व्रजन्ति तीर्थमेके दक्षिणाः प्रत्यञ्च उदञ्चः प्राञ्चोऽभिव्रजन्त्येके तेषां सर्वेषामिह सङ्गतिः साकं स एकोऽभूदन्तश्चरति प्रजानां तस्मादुच्यते एकः । अथ कस्मादुच्यते रुद्रः यस्मादृषिभिर्नान्यैर्भक्तैर्द्रुतमस्य रूपमुपलभ्यते तस्मादुच्यते रुद्रः । अथ कस्मादुच्यते ईशानः यः सर्वान्देवानीशते ईशानीभिर्जननीभिश्च शक्तिभिः । अभित्वा शूरणोनुमो दुग्धा इव धेनवः । ईशानमस्य जगतः स्वर्दृशमीशानमिन्द्र तस्थुष इति तस्मादुच्यते ईशानः । अथ कस्मादुच्यते भगवान् महेश्वरः यस्माद्भक्तान् ज्ञानेन भजत्यनुगृह्णाति च वाचं संसृजति विसृजति च सर्वान् भावान्परित्यज्यात्मज्ञानेन योगैश्वर्येण महति महीयते तस्मादुच्यते भगवान् महेश्वरः । तदेतद्रुद्रचरितम् । ४ ॥ एषो ह देवः प्रदिशोऽनु सर्वाः पूर्वो ह जातः स उ गर्भे अन्तः । स एव जातः स जनिष्यमाणः प्रत्यङ् जनास्तिष्ठति सर्वतोमुखः । एको रुद्रो न द्वितीयाय तस्मै य इमाँल्लोकानीशत ईशनीभिः । प्रत्यङ्जनास्तिष्ठति चान्तकाले संसृज्य विश्वाभुवनानि गोप्ता ॥ यो योनिं योनिमधितिष्ठत्येको येनेदं सर्वं विचरति सर्वम् । तमीशानं वरदं देवमीड्यं निचाय्येमां शान्तिमत्यन्तमेति । क्षमां हित्वा हेतुजालस्य मूलं बुद्ध्या सञ्चितं स्थापयित्वा तु रुद्रे । रुद्रमेकत्वमाहुः शाश्वतं वै पुराणमिषमूर्जेण पशवोनुनामयन्तं मृत्युपाशान् । तदेतेनात्मन्नेतेनार्धचतुर्थेन मात्रेण शान्ति संसृजति पशुपाशविमोक्षणं या सा प्रथमा मात्रा ब्रह्मदेवत्या रक्ता वर्णेन यस्तां ध्यायते नित्यं स गच्छेद्ब्रह्मपदम् । या सा द्वितीया मात्रा विष्णुदेवत्या कृष्णवर्णेन यस्तां ध्यायते नित्यं स गच्छेद्वैष्णवं पदम् । या सा तृतीया मात्रा ईशानदेवत्या कपिला वर्णेन यस्तां ध्यायते नित्यं स गच्छेदैशानं पदम् । या सार्धचतूर्थी मात्रा सर्वदेवत्याऽव्यक्तीभूता खं विचरति शुद्धा स्फटिकसन्निभा वर्णेन यस्तां ध्यायते नित्यं स ग-

च्छेत्पदमनामयम् । तदेतदुपासीत मुनयो वाग्वदन्ति न तस्य ग्रहणमयं पन्था विहित उत्तरेण येन देवा यान्ति येन पितरो येन ऋषयः परमपरं परायणं चेति वालाग्रमात्रं हृदयस्य मध्ये विश्वं देवं जातरूपं वरेण्यम् । तमात्मस्थं ये नु पश्यन्ति धीरास्तेषां शान्तिर्भवति नेतरेषाम् । यस्मिन् क्रोधं याञ्च तृष्णां क्षमाञ्चाक्षमां हित्वा हेतुजालस्य मूलं । बुद्ध्या सञ्चितं स्थापयित्वा तु रुद्रे रुद्रमेकत्वमाहुः । रुद्रो हि शाश्वतेन वै पुराणेनेषमूर्जेण तपसा नियन्ताग्निरिति भस्म वायुरिति भस्म जलमिति भस्म व्योमेति भस्म सर्वं ह वा इदं भस्म मन एतानि चक्षूंषि यस्मादव्रतमिदं पाशुपतं यद्भस्म नाङ्गानि संस्पृशेत् तस्मादब्रह्म तदेतत्पाशुपतं पशुपाशविमोक्षणाय । ५ ॥ योऽग्नौ रुद्रो योऽप्स्वन्तर्य ओषधीर्वीरुध आविवेश । य इमा विश्वा भुवनानि चक्लृपे तस्मै रुद्राय नमोऽस्त्वग्नये । योरुद्रोऽग्नौ यो रुद्रोऽप्स्वन्तर्यो रुद्र ओषधीर्वीरुध आविवेश । यो रुद्र इमा विश्वा भुवनानि चक्लृपे तस्मै रुद्राय वै नमो नमः । यो रुद्रोऽप्सु यो रुद्र ओषधीषु यो रुद्रो वनस्पतिषु । येन रुद्रेण जगदूर्ध्वं धारितं पृथिवी द्विधा त्रिधा धर्त्ता धारिता नागा येन्तरिक्षे तस्मै रुद्राय वै नमो नमः । मूर्धानमस्य संसेव्याप्यथर्वा हृदयञ्च यत् । मस्तिष्कादूर्ध्वं प्रेरयत्यवमानोऽधिशीर्षतः । तद्वा अथर्वणः शिरो देवकोशः समुज्झितः । तत् प्राणोऽभिरक्षति शिरोऽन्तमथो मनः । न च दिवो देवजनेन गुप्ता न चान्तरिक्षाणि न च भूम इमाः । यस्मिन्निदं सर्वमोतप्रोतं तस्मादन्यन्न परं किञ्च नास्ति । न तस्मात्पूर्वं न परं तदस्ति न भूतं नोत भव्यं यदासीत् । सहस्रपादेकमूर्ध्ना व्याप्तं स एवेदमावरीवर्ति भूतम् । अक्षरात् सञ्जायते कालः कालाद्व्यापक उच्यते । व्यापकोहि भगवान् रुद्रो भोगायमानो यदा शेते रुद्रस्तदा संहार्यते प्रजाः । उच्छ्वसिते तमो भवति तमस आपोऽश्वङ्गुल्या मथिते मथितं शिशिरे शिशिरं मथ्यमानं फेनं भवति फेनादण्डं भवत्यण्डाद्ब्रह्मा भवति ब्रह्मणो वायुः वायोरोङ्कारः ओङ्कारात्सावित्री सावित्र्या गायत्री गायत्र्या लोका भवन्ति । अर्चयन्ति तपः सत्यं मधुक्षरन्ति यद्ध्रुवम् । एतद्धि परमं तपः । आपो ज्योती रसोऽमृतं ब्रह्मभूर्भुवः

स्वरों नम इति ॥ ६ ॥ य इदमथर्वशिरोब्राह्मणोऽधीते। अश्रोत्रियः श्रोत्रियो भवति। अनुपनीत उपनीतो भवति। सोऽग्निपूतो भवति। स वायुपूतो भवति। स सूर्यपूतो भवति। स सोमपूतो भवति। स सत्यपूतो भवति। स सर्वैर्देवैर्ज्ञातो भवति। स सर्वैर्वेदैरनुध्यातो भवति। स सर्वेषु तीर्थेषु स्नातो भवति। तेन सर्वैः क्रतुभिरिष्टं भवति। गायत्र्याः षष्टिसहस्राणि जप्तानि भवन्ति। प्रणवानामयुतं जप्तं भवति। स चक्षुषः पङ्क्तिं पुनाति। आसप्तमात् पुरुषयुगान्पुनातीत्याह भगवानथर्वशिरः सकृज्जप्त्वैव शुचिः स पूतः कर्मण्यो भवति। द्वितीयं जप्त्वा गणाधिपत्यमवाप्नोति। तृतीयं जप्त्वैवमेवानुप्रविशत्यों सत्यमों सत्यमों सत्यम्। इत्यथर्ववेदे शिवाथर्वशीर्षम्(इति शिरउपनिषत्)॥

५१५. अथ 'सूर्याथर्वशीर्षम्.'—अथ सूर्याथर्वाङ्गिरसं व्याख्यास्यामः ब्रह्मा ऋषिः। आदित्यो देवता। गायत्री छन्दः। हंसाद्यग्निनारायणयुक्तं बीजम्। हृल्लेखा शक्तिः। द्विपदादि सर्गसंयुक्तं कीलकम्। धर्मार्थकाममोक्षेषु जपे विनियोगः। षट्स्वरारूढबीजेन षडङ्गं रक्ताम्बुजसंस्थितं सप्ताश्वरथिनं हिरण्यवर्णं चतुर्भुजं पद्मद्वयाभयवरदहस्तं कालचक्रप्रणेतारं च श्रीसूर्यनारायणं यऽएवं वेद स वै ब्राह्मणः॥ ॐ भूः। ॐ भुवः। ॐ स्वः। ॐ महः। ॐ जनः। ॐ तपः। ॐ सत्यम्। ॐ तत्सवि०। परोरजसेसावदोम्। ॐ आपोज्योतीरसोऽमृतं ब्रह्मभूर्भुवः स्वरोम्। सूर्य आत्मा जगतस्तस्थुषश्च। सूर्याद्वै खल्विमानि भूतानि जायन्ते। सूर्याद्यज्ञः पर्जन्योऽन्नमात्मा। नमस्ते आदित्याय त्वमेव केवलं कर्त्तासि। त्वमेव प्रत्यक्षं विष्णुरसि। त्वमेव प्रत्यक्षं ब्रह्मासि। त्वमेव प्रत्यक्षं रुद्रोऽसि। त्वमेव प्रत्यक्षमृगसि। त्वमेव प्रत्यक्षं यजुरसि। त्वमेव प्रत्यक्षं सामासि। त्वमेव प्रत्यक्षमथर्वासि। त्वमेव सर्वं छन्दोसि। आदित्याद्वायुर्जायते आदित्याद्भूमिर्जायते। आदित्यादापो जायन्ते। आदित्याज्ज्योतिर्जायते। आदित्याद्व्योम दिशो जायन्ते। आदित्याद्वेदा जायन्ते। आदित्याद्देवा जायन्ते। आदित्यो वा एष एतन्मण्डलं तपति। असावादित्यो ब्रह्म। आदित्योऽन्तःकरणमनोबुद्धिचित्ताहङ्काराः। आदित्यो वै व्यानसमानोदानापानप्राणाः।

आदित्यो वै श्रोत्रत्वक्चक्षुरसनानासाः । आदित्यो वै वाक्पाणिपादोपस्थपायूनि । आदित्यो वै शब्दस्पर्शरूपरसगन्धाः ॥ आदित्यो वै वचनादानगमनानन्दविसर्गाः आनन्दमयो ज्ञानमयो विज्ञानमय आदित्यः । नमो मित्राय भानवे मृत्योर्मा पाहि भ्राजिष्णवे विश्वहेतवे नमः । सूर्यो नो दिवस्पातु वातो अन्तरिक्षात् । अग्निर्नः पार्थिवेभ्यः । सूर्याद्भवन्ति भूतानि । सूर्येण पालितानि तु । सूर्ये लयं प्राप्नुवन्ति । यः सूर्यः सोहमेव च । चक्षुर्नो देवः सविता । चक्षुर्न उत पर्वतः । चक्षुर्धाता दधातु नः । आदित्याय विद्महे सहस्रकराय धीमहि । तन्नः सूर्यः प्रचोदयात् । सविता पश्चातात् । सविता पुरस्तात् । सवितोत्तरात्तात् । सविताधरात्तात् । सविता नः सुवतु सर्वतातिम् । सवितानो रासतां दीर्घमायुः । ओमित्येकाक्षरं ब्रह्म घृणिरिति द्वे अक्षरे सूर्य इत्यक्षरद्वयम् । आदित्य इति त्रीण्यक्षराणि एतद्वै सूर्यस्याष्टाक्षरं मनुम् । यः सदाहरहर्जपति । सो ब्रह्मण्यो ब्राह्मणो भवति । सूर्याभिमुखं जप्त्वा महाव्याधिभयात्प्रमुच्यते । अलक्ष्मीर्नश्यति । अभक्ष्यभक्षणात्पूतो भवति । अपेयपानात्पूतो भवति । अगम्यागमनात्पूतो भवति । व्रात्यसम्भाषणात्पूतो भवति । मध्याह्ने सूर्याभिमुखः पठेत् । सद्यः पञ्चमहापापात्प्रमुच्यते । सैषा सावित्री विद्या न कस्यचित्प्रशंसेत् । एतन्महाभागः प्रातः पठति स भाग्यवान् जायते । पशून् विन्दति वेदार्थं लभते । त्रिकालं जप्त्वा क्रतुशतफलं प्राप्नोति । हस्तादित्ये जपति स महामृत्युं तरति । य एवं वेद । इत्युपनिषत् ॥ इति सूर्याथर्वशीर्षम् ॥

५१६. अथ 'देव्यथर्वशीर्षम्.'—ॐ सर्वे वै देवा देवीमुपतस्थुः कासि त्वं महादेवी साब्रवीदहं ब्रह्मस्वरूपिणी । मत्तः प्रकृतिपुरुषात्मकं जगत् । शून्यं चाशून्यं च अहमानन्दानानन्दौ अहं विज्ञानाविज्ञाने अहं ब्रह्माब्रह्मणी द्वे ब्रह्मणी वेदितव्ये । इति वाथर्वणी श्रुतिः । अहं पञ्चभूतानि अहं पञ्चतन्मात्राणि अहमखिलं जगत् वेदोहमवेदोहम् विद्याहमविद्याहम् अजाहमनजाहम् अधश्चोर्ध्वं च तिर्यञ्चाहम् अहꣳ रुद्रेभिर्वसुभिश्चरामि अहमादित्यैरुतविश्वे

देवैः अहं मित्रावरुणावुभौ बिभर्मि अहमिन्द्राग्नी अहमश्विना उभौ अहꣳ सोमं त्वष्टारं पूषणं भगं दधामि अहं विष्णुमुरुक्रमम् ब्रह्माणमुत प्रजापतिं दधामि अहं दधामि द्रविणꣳ हविष्मते सुप्राव्ये यजमानाय सुन्वते अहꣳ राष्ट्रीसङ्गमनीव वसूनाम् चिकितुषी प्रथमा यज्ञियानाम् अहꣳ सुवे पितरमस्य मूर्द्धन्मम योनिरप्स्वात् समुद्रे य एवं वेद सदैवीꣳ सम्पदमाप्नोति ते देवा अब्रुवन्। नमो देव्यै महादेव्यै शिवायै सततं नमः। नमः प्रकृत्यै भद्रायै नियताः प्रणताः स्म ताम् ॥ तामग्निवर्णां तपसा ज्वलन्तीं वैरोचनीं कर्मफलेषु जुष्टाम्। दुर्गां देवीं शरणं प्रपद्यामहेऽसुरान्नाशयित्र्यै ते नमः। देवीं वाचमजनयन्त देवास्तां विश्वरूपाः पशवो वदन्ति। सा नो मन्द्रेषमूर्जं दुहाना धेनुर्वागस्मानुपसुष्टुतैतु ॥ कालरात्रीं ब्रह्मस्तुतां वैष्णवीं स्कन्दमातरम्। सरस्वतीमदितिं दक्षदुहितरं नमामः॥ पावनां शिवाम्। महालक्ष्म्यै च विद्महे सर्वशक्त्यै च धीमहि। तन्नो देवी प्रचोदयात्। अदितिर्ह्यजनिष्ट दक्षया दुहिता तव। तां देवा अन्वजायन्त भद्रा अमृतबन्धवः॥ कामो योनिः कमला वज्रपाणिर्गुहाहंसा मातरिश्वाभ्रमिन्द्रः। पुनर्गुहा सकला मायया चापृथक्क्लेशा विश्वमातादिविद्याः॥ एषात्मशक्तिः। एषा विश्वमोहिनी पाशाङ्कुशधनुर्बाणधरा। एषा श्रीमहाविद्या। य एवं वेद स शोकं तरति। नमस्ते भगवति मातरस्मान्पाहि सर्वतः। सैषा वैष्णवा वसवः सैवैकादश रुद्राः सैषा द्वादशादित्याः सैषा विश्वे देवाः सोमपा असोमपाश्च सैषा यातुधाना असुरा रक्षांसि पिशाचयक्षसिद्धाः सैषा सत्वरजस्तमांसि सैषा ब्रह्मविष्णुरुद्ररूपिणी सैषा प्रजापतीन्द्रमनवः सैषा ग्रहनक्षत्रज्योतिष्कलाकाष्ठादिविश्वरूपिणी तामहं प्रणौमि नित्यम्। पापापहारिणी देवी भुक्तिमुक्तिदायिनी। अनन्तां विजयां शुद्धां शरण्यां सर्वदा शिवाम्॥ वियदाकारसंयुक्तं वीतिहोत्रसमन्वितम्। अर्द्धेन्दुलसितं देव्या बीजं सर्वार्थसाधकम्॥ एवमेकाक्षरं मन्त्रं यतयः शुद्धचेतसः। ध्यायन्ति परमानन्दमया ज्ञानाम्बुराशयः॥ वाङ्मया ब्रह्मभूस्तस्मात् षष्ठवक्त्रसमन्वितम्॥ सूर्यो वामश्रोत्रबिन्दुसंयुक्ताष्टतृतीयकम्॥ ना-

रायणेन संमिश्रो वायुश्चाधारयुक्तयः । विच्चे नवार्णकोणस्य महानानन्ददायकः ॥ हृत्पुण्डरीकमध्यस्थां प्रातःसूर्यसमप्रभाम् । पाशाङ्कुशधरां सौम्यां वरदाभयहस्तकाम् ॥ त्रिनेत्रां रक्तवसनां भक्तकामदुहं भजे । भजामि त्वां महादेवि महाभयविनाशिनि ॥ महादारिद्र्यशमनी महाकारुण्यरूपिणी । यस्याः स्वरूपं ब्रह्मादयो न जानन्ति ॥ तस्मादुच्यते अज्ञेया । यस्या अन्तो न लभ्यते तस्मादुच्यते अनन्ता । यस्या लक्ष्यं नोपलक्ष्यते तस्मादुच्यते अलक्ष्या । यस्या जननं नोपलक्ष्यते तस्मादुच्यते अजा । एकैव सर्वत्र वर्त्तते तस्मादुच्यते एका । एकैव विश्वरूपिणी तस्मादुच्यतेऽनेका । अत एवोच्यतेऽज्ञेयानन्तलक्ष्याजैकानेका । मन्त्राणां मातृका देवी शब्दानां ज्ञानरूपिणी । ज्ञानानां चिन्मयातीता शून्यानां शून्यसाक्षिणी ॥ यस्याः परतरं नास्ति सैषा दुर्गा प्रकीर्त्तिता । तां दुर्गां दुर्गमां देवीं दुराचारविघातिनीम् ॥ नमामि भवभीतोऽहं संसारार्णवतारिणीम् ॥ इदमथर्वशीर्षं योऽधीते । स पञ्चाथर्वशीर्षफलमाप्नोति । इदमथर्वशीर्षमज्ञात्वा योर्चाः स्थापयति । शतलक्षं प्रजप्तापि नार्चाशुद्धिं च विन्दति । शतमष्टोत्तरं चास्य पुरश्चर्याविधिः स्मृतः । दशवारं पठेद्यस्तु सद्यः पापैः प्रमुच्यते । महादुर्गाणि तरति महादेव्याः प्रसादतः ॥ सायमधीयानो दिवसकृतं पापं नाशयति । प्रातरधीयानो रात्रिकृतं पापं नाशयति । सायंप्रातः प्रयुञ्जानो अपापो भवति । निशीथे तुरीयसन्ध्यायां जप्त्वा वाक्सिद्धिर्भवति । नूतनायां प्रतिमायां जप्त्वा देवतासान्निध्यं भवति । भौमाश्विन्यां महादेवीसन्निधौ जप्त्वा महामृत्युं तरति स महामृत्युं तरति । य एवं वेद इत्युपनिषत् ॥ इति देव्यथर्वशीर्षम् ॥

५१७ 'श्रीसूक्तम्'[1]—ॐ हिरण्यवर्णां हरिणीं सुवर्णरजतस्रजाम् । चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो मुमावह ॥ १ ॥ तांमुऽआवह जातवेदो लक्ष्मीमनपगामिनीम् । यस्यां हिरण्यं विन्देयं गामश्वं पुरुषानहम् ॥२॥

---

१ क्वचित् 'अथाथर्वलक्ष्मीसूक्तम्' एवं पाठो दृश्यते ॥

अश्वपूर्वां रथमध्यां हस्तिनादप्रमोदिनीम्। श्रियं देवी-
मुपह्वये श्रीर्मा देवीर्जुषताम्। ३॥ कांसोस्मितां हिर-
ण्यप्राकारामार्द्रां ज्वलन्तीं तृप्तां तर्पयन्तीम्। पद्मे-
स्थितां पद्मवर्णां तामिहोपह्वये श्रियम्। ४॥ चन्द्रां
प्रभासां यशसा ज्वलन्तीं श्रियं लोके देवजुष्टामुदा-
राम्। तां पद्मनेमिं शरणमहं प्रपद्ये अलक्ष्मीर्मे न-
श्यतां त्वां वृणोमि। ५॥ आदित्यवर्णे तपसोऽधिजातो
वनस्पतिस्तव वृक्षोऽथ बिल्वः। तस्य फलानि तपसानु-
दन्तु मायान्तरायाश्च बाह्याऽलक्ष्मीः। ६॥ उपैतु
मां देवसखः कीर्तिश्च मणिना सह। प्रादुर्भूतो सुराष्ट्रे-
ऽस्मिन् कीर्तिं वृद्धिं ददातु मे। ७॥ क्षुत्पिपासामला-
ज्येष्ठा अलक्ष्मीर्नाशयाम्यहम्। अभूतिमसमृद्धिं च
सर्वां निर्णुद मे गृहात्। ८॥ गन्धद्वारां दुराधर्षां नित्य-
पुष्टां करीषिणीम्। ईश्वरीं सर्वभूतानां तामिहोपह्वये
श्रियम्। ९॥ मनसः काममाकूतिं वाचः सत्यमशी-
महि। पशूनां रूपमन्नस्य मयि श्रीः श्रयतां यशः।१०॥
कर्दमेन प्रजाभूता मयि सम्भव कर्दम। श्रियं वा-
सय मे कुले मातरं पद्ममालिनीम्। ११॥ आपः स्र-
जन्तु स्निग्धानि चिक्लीत वस मे गृहे। नीच देवीं मातरं
श्रियं वासय मे कुले। १२॥ आर्द्रां पुष्करिणीं पुष्टिं
सुवर्णां हेममालिनीम्। सूर्यां हिरण्मयीं लक्ष्मीं जात-
वेदो ममावह। १३॥ आर्द्रां यःकरिणीं यष्टिं पि-
ङ्गलां पद्ममालिनीम्। चन्द्रां हिरण्मयीं लक्ष्मीं जात-
वेदो ममावह। १४॥ तांम ऽआवह जातवेदो लक्ष्मी-

(१) केषुचित्पुस्तकेषु 'अश्वपूर्वां' इत्यपि पाठो दृश्यते॥

मलपगामिनीम्। यस्यां हिरण्यं प्रभूतिं गावो दास्योऽश्वान्विन्देयं पुरुषानहम्॥ १५॥ यः शुचिः प्रयतो भूत्वा जुहुयादाज्यमन्वहम्। श्रियः पञ्चदशर्चं च श्रीकामः सततं जपेत्॥ १६॥ सरसिजनिलये सरोजहस्ते धवलान्तरांशुकगन्धमाल्यशोभे। भगवति हरिवल्लभे मनोज्ञे त्रिभुवनभूतिकरि प्रसीद मह्यम्॥ १७॥ धनमग्निर्धनं वायुर्धनं सूर्यो धनं वसुः॥ धनमिन्द्रो बृहस्पतिर्वरुणं धनमश्विनौ॥ १८॥ वैनतेय सोमं पिब सोमं पिबतु वृत्रहा। सोमं धनस्य सोमिनो मह्यं ददातु सोमिनः॥ १९॥ न क्रोधो न च मात्सर्यं न लोभो नाशुभा मतिः। भवन्ति कृतपुण्यानां भक्तानां श्रीसूक्तं जपेत्॥ २०॥ पद्मानने पद्मऊरू पद्माक्षी पद्मसम्भवे। तन्मे भजसि पद्माक्षि येन सौख्यं लभाम्यहम्॥ २१॥ विष्णुपत्नीं क्षमां देवीं माधवीं माधवप्रियाम्। विष्णुप्रियसखीं देवीं नमाम्यच्युतवल्लभाम्॥ २२॥ महालक्ष्मी च विद्महे विष्णुपत्नी च धीमहि। तन्नो लक्ष्मीः प्रचोदयात्॥ २३॥ पद्मानने पद्मिनि पद्मपत्रे पद्मप्रिये पद्मदलायताक्षि। विश्वप्रिये विश्वमनोऽनुकूले त्वत्पादपद्मं मयि सन्निधत्स्व॥ २४॥ आनन्दः कर्दमः श्रीदश्चिक्लीत इति विश्रुताः। ऋषयः श्रियपुत्राश्च मयि श्रीर्देवी देवता॥ २५॥ ऋणरोगादि दारिद्र्यं पापञ्च अपमृत्यवः। भयशोकमनस्तापा नश्यन्तु मम सर्वदा॥ २६॥ श्रीवर्चस्वमायुष्यमारोग्यमाविधाच्छोभमानं महीयते। धनं धान्यं पशुं बहुपुत्रलाभं शतसंवत्सरं दीर्घमायुः॥ २७॥ इति श्रीसूक्तम्॥

५१८. अथ 'हेमाद्रिकृतः स्नानसङ्कल्पः'—आचम्य[2] प्राणानायम्य॥ श्रीमन्महागणाधिपतये नमः। श्रीगुरुभ्यो नमः। श्रीसरस्वत्यै नमः। वेदाय नमः। वेदपुरुषाय नमः। इष्टदेवताभ्यो नमः। कुलदेवताभ्यो नमः। स्थानदेवताभ्यो नमः। ग्रामदेवताभ्यो नमः।

(१) अयं सङ्कल्पः—तीर्थस्नानादौ श्रावण्यादिनैमित्तिकस्नानादौ च स्वतः कुर्वन्ति तीर्थोपाध्याया यजमानतः कारयन्ति च॥ २ देवपूजाप्रयोगे दर्शितक्रमेण ज्ञेयम्॥

वास्तुदेवताभ्यो नमः । एतत्कर्मप्रधानदेवताभ्यो नमः । सर्वेभ्यो देवेभ्यो नमः । सर्वेभ्यो ब्राह्मणेभ्यो नमो नमः । अविघ्नमस्तु । सुमुखश्चैकदन्तश्च कपिलो गजकर्णकः । लम्बोदरश्च विकटो विघ्ननाशो गणाधिपः ॥ धूम्रकेतुर्गणाध्यक्षो भालचन्द्रो गजाननः ॥ द्वादशैतानि नामानि यः पठेच्छृणुयादपि । विद्यारम्भे विवाहे च प्रवेशे निर्गमे तथा ॥ सङ्ग्रामे सङ्कटे चैव विघ्नस्तस्य न जायते । शुक्लाम्बरधरन्देवं शशिवर्णं चतुर्भुजम् ॥ प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये । अभीप्सितार्थसिद्ध्यर्थं पूजितो यः सुरासुरैः ॥ सर्वविघ्नहरस्तस्मै गणाधिपतयेनमः ॥ सर्वमङ्गलमाङ्गल्ये शिवे सर्वार्थसाधिके । शरण्ये त्र्यम्बके गौरि नारायणि नमोस्तुते ॥ वक्रतुण्डमहाकाय सूर्यकोटिसमप्रभ । अविघ्नं कुरु मे देव सर्वकार्येषु सर्वदा ॥ वागीशाद्याः सुमनसः सर्वार्थानामुपक्रमे । यन्नत्वा कृतकृत्याः स्युस्तं नमामि गजाननम् ॥ गणनाथं नमस्कृत्य नमस्कृत्य पितामहम् । विष्णुं रुद्रं श्रियं देवीं वन्दे भक्त्या सरस्वतीम् ॥ स्थानं क्षेत्रं नमस्कृत्य दिननाथं निशाकरम् । धरणीगर्भसम्भूतं शशिपुत्रं बृहस्पतिम् ॥ दैत्याचार्यं नमस्कृत्य सूर्यपुत्रं शनैश्वरम् । राहुं केतुं नमस्कृत्य यज्ञारम्भे विशेषतः ॥ शक्रादिदेवताः सर्वानृषींश्चैव तपोधनान् । गर्गं मुनिं नमस्कृत्य नारदं पर्वतं तथा ॥ वसिष्ठं मुनिशार्दूलं विश्वामित्रं च गोभिलम् । अगस्त्यं च पुलस्त्यं च दक्षमित्रं पराशरम् । भरद्वाजं च माण्डव्यं याज्ञवल्क्यं च गालवम् ॥ अन्ये विप्रास्तपोयुक्ता वेदशास्त्रविचक्षणाः । तान्सर्वान् प्रणिपत्याहं शुभकर्म समारभे । लाभस्तेषां जयस्तेषां कुतस्तेषां पराजयः । येषामिन्दीवरश्यामो हृदयस्थो जनार्दनः ॥ अग्रतः श्रीनृसिंहश्च पृष्ठतो देवकीसुतः । रक्षतां पार्श्वयोर्देवौ भ्रातरौ रामलक्ष्मणौ ॥ ॐ—स्वस्ति श्रीमुकुन्दसच्चिदानन्दस्य ब्रह्मणोऽनिर्वाच्यमायाशक्तिविजृम्भिताविद्यायोगात् कालकर्मस्वभावाविर्भूतमहत्तत्वोदिताहङ्कारोद्भूतवियदादिपञ्चमहाभूतेन्द्रियदेवतानिर्मितेऽण्डकटाहे चतुर्दशलोकात्मके लीलया तन्मध्यवर्तिभगवतः श्रीनारायणस्य नाभिकमलोद्भूतसकललोकपितामहस्य ब्रह्मणः सृष्टिं कुर्वत-

स्तदुद्धरणाय प्रजापतिप्रार्थितस्य समस्तजगदुत्पत्तिस्थितिलयकारणस्य जगद्रक्षाशिक्षाविचक्षणस्य प्रणतपारिजातस्य अच्युतानन्तवीर्यस्य श्रीमद्भगवतो महापुरुषस्य अचिन्त्यापरिमितशक्त्या ध्येयमानस्य महाजलौघमध्ये परिभ्रममाणानामनेककोटिब्रह्माण्डानामेकतमेऽव्यक्तमहदहङ्कारपृथिव्यप्तेजोवाय्वाकाशाद्यावरणैरावृते अस्मिन्महति ब्रह्माण्डखण्डे आधारशक्तिश्रीमदादिवाराहदंष्ट्राग्रविराजिते कूर्मानन्तवासुकितक्षककुलिककर्कोटकपद्ममहापद्मशङ्खाद्यष्टमहानागैर्ध्रियमाणे ऐरावतपुण्डरीकवामनकुमुदोञ्जनपुष्पदन्तसार्वभौमसुप्रतीकाष्टदिग्गजप्रतिष्ठितानामतलवितलसुतलतलातलरसातलमहातलपाताललोकानामुपरिभागे भूर्लोकभुवर्लोकस्वर्लोकमहर्लोकजनोलोकतपोलोकसत्यलोकाख्यसप्तलोकानामधोभागे चक्रवालशैलमहावलयनागमध्यवर्तिनो महाकालमहाफणिराजशेषस्य सहस्रफणानां मणिमण्डलमण्डिते दिग्दन्तिशुण्डोत्तम्भिते अमरावत्यशोकवतीभोगवतीसिद्धवतीगान्धर्ववतीकाञ्च्यवन्त्यलकावतीयशोवतीतिपुण्यपुरीप्रतिष्ठिते इन्द्राग्नियमनिर्ऋतिवरुणवायुकुबेरेशानेष्टदिक्पालप्रतिष्ठिते वरध्रुवाधरसोमपाप्रभञ्जनानलप्रत्यूषप्रभासाख्याष्टवसुभिर्विराजिते हरत्र्यम्बकरुद्रमृगव्याधापराजितकपालीभैरवशम्भुकपर्दिवृषाकपीबहुरूपाख्यैकादशरुद्रैः संशोभिते रुद्रोपेन्द्रसवितृधातृत्वष्ट्रर्यमेन्द्रेशानभगमित्रपूषाख्यद्वादशादित्यप्रकाशिते यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाध्यष्टाङ्गनिरतवसिष्ठवालखिल्यविश्वामित्रदक्षकात्यायनकौण्डिण्यगौतमाङ्गिरसपाराशर्यव्यासवाल्मिकशुकशौनकभरद्वाजसनकसनन्दनसनातनसनत्कुमारनारदादिमुख्यमुनिभिः पवित्रिते लोकालोकाचलवलयिते लवणेक्षुरससुरासर्पिर्दधिक्षीरोदकयुक्तसप्तार्णवपरिवृते जम्बूप्लक्षशाल्मलिकुशक्रौञ्चशाकपुष्कराख्यसप्तद्वीपयुते इन्द्रकांस्यताम्रगभस्तिनागसौम्यगन्धर्वचारणभारतेतिनवखण्डमण्डिते सुवर्णगिरिकर्णिकोपेतमहासरोरुहाकारपञ्चाशत्कोटियोजनविस्तीर्णभूमण्डले अयोध्यामथुरामायाकाशीकाञ्च्यवन्तिकाद्वारावतीतिसप्तपुरीप्रतिष्ठिते महामुक्तिमदस्थले शालग्रामशम्भलनन्दिग्रामेतिग्रामत्रयविराजिते चम्पकार-

ण्यबदरिकारण्यदण्डकारण्यार्बुदारण्यधर्मारण्यपद्मारण्यगुह्यारण्यजम्बुकारण्यविन्ध्यारण्यद्राक्षारण्यनहुषारण्यकाम्यकारण्यद्वैतारण्यनैमिषारण्यादीनां मध्ये सुमेरुनिषधकूटशुभ्रकूटश्रीकूटहेमकूटरजतकूटचित्रकूटत्रिकूटकिष्किन्धश्वेताद्रिकूटहिमविन्ध्याचलानां हरिवर्षकिम्पुरुषवर्षयोश्च दक्षिणे नवसहस्रयोजनविस्तीर्णे भरतखण्डे मलयाचलसह्याचलविन्ध्याचलानामुत्तरेण स्वर्णप्रस्थचण्डप्रस्थसूक्तिकआवन्तकरमणकमहारमणकपाञ्चजन्यसिंहललङ्काऽशोकवत्यलकावतीसिद्धवतीगान्धर्ववत्यादिपुण्यपुरीविराजिते नवखण्डोपद्वीपमण्डिते दक्षिणावस्थितरेणुकाद्वयसूकरकाशीकाञ्चीकालिकालवटेश्वरकालञ्जरमहाकालेतिनवोखरयुते द्वादशज्योतिर्लिङ्गगङ्गा (भागीरथी)-गोदा (गौतमी) क्षिप्रायमुनासरस्वतीनर्मदातापीपयोष्णीचन्द्रभागाकावेरीमन्दाकिनीप्रवराकृष्णावेण्याभीमरथीतुङ्गभद्रामलापहाकृतमालाताम्रपर्णीविशालाक्षीवञ्जुलाचर्मण्वतीवेत्रवतीभोगावतीविशोकाकौशिकीगण्डकीवासिष्ठीप्रमदाविश्वामित्रीफल्गुनीचित्रकाश्यपीसरयूसर्वपापहारिणीकरतोयाप्रणीतावज्रावक्रगामिनीसुवर्णरेखाशोणाभवनाशिनीशीघ्रगाकुशवार्तिनीब्रह्मानन्दामहितनयेत्यनेकपुण्यनदीभिर्विलसिते ब्रह्मपुत्रसिन्धुनदादिपरमपवित्रजलविराजिते हिमवन्मेरुगोवर्धनक्रौञ्चचित्रकूटहेमकूटमहेन्द्रमलयसह्येन्द्रकीलपारियात्राद्यनेकपर्वतसमन्विते मतङ्गमाल्यकिष्किन्धऋष्यमृङ्गेतिमहानगसमन्विते अङ्गवङ्गकलिङ्गकाश्मीरकाम्बोजसौवीरसौराष्ट्रमहाराष्ट्रमगधनेपालकेरलचोरलपाञ्चालगौडमालवमलयासिंहलद्रविडकर्नाटकललाटकरहाटवरहाटपानाटपाण्ड्यनिषधमागधआन्ध्रदशार्णवभोजकुरुगान्धारविदर्भविदेहवाल्हीकवर्बरकैकेयकोसलविराटशूरसेनकोङ्कणकैकटमत्स्यमद्रपारसिकखर्जूरयावनम्लेच्छजालन्धरेति सिद्धवत्यन्यदेशविशेषभाषाभूमिपालविचित्रिते इलावृतकुरुभद्राश्वकेतुमालकिम्पुरुषरमणकहिरण्मयादिनववर्षाणां मध्ये भरतखण्डे वकुलचम्पकपाटलाब्जपुन्नागजातिकरवीररसालकल्हारकेतक्यादिनानाविधकुसुमस्तबकविराजिते कोकन्तहिरण्यशृङ्गकुब्जार्बुदमणिकर्णीवटशालग्रामसूकरमथुरागयानिष्क्रमणलोहार्गलपोतस्वामिप्रभासवदरीतिचतुर्दशगुह्यविलसिते जम्बुद्वीपे

कुरुक्षेत्रादिसमभूमध्यरेखायाः पश्चिमदिग्भागे कुलमेरोर्दक्षिणदिग्भागे विन्ध्यस्य दक्षिणे देशे श्रीशैलस्य वायव्यदेशे कृष्णावेण्योर्मध्यदेशे मत्स्यकूर्मवराहनृसिंहवामनपरशुरामरामकृष्णबुद्धकल्किरितिदशावताराणां मध्ये बौद्धावतारे गङ्गादिसरिद्भिः पाविते एवं नवसहस्रयोजनविस्तीर्णभारतवर्षे निखिलजनपावनपरमभागवतोत्तमशौनकादिनिवासिते नैमिषारण्ये आर्यावर्तान्तर्गतब्रह्मावर्तैकदेशे सूर्यान्वयभूभृत्प्रतिष्ठिते श्रीमन्नारायणनाभिकमलोद्भूतसकलजगत्स्रष्टुः परार्द्धद्वयजीविनो ब्रह्मणो द्वितीये परार्धे एकपञ्चाशत्तमे वर्षे प्रथममासे प्रथमपक्षे प्रथमदिवसे अह्नो द्वितीये यामे तृतीये मुहूर्ते रथन्तरादिद्वात्रिंशत्कल्पानां मध्ये अष्टमे श्वेतवाराहकल्पे स्वायम्भुवादिमन्वन्तराणां मध्ये सप्तमे वैवस्वतमन्वन्तरे कृतत्रेताद्वापरकलिसंज्ञकानां चतुर्णां युगानां मध्ये वर्तमाने अष्टाविंशतितमे कलियुगे तत्प्रथमे विभागे ( पादे ) श्रीमन्नृपविक्रमार्कात् श्रीमन्नृपशालीवाहनाद्वा यथा संख्यागमेन चान्द्रसावनसौरनाक्षत्रादिप्रकारेणागतानां प्रभवादिषष्टिसंवत्सराणां मध्ये अमुकनाम्नि संवत्सरे उत्तरगोलावलम्बिनि श्रीमार्तण्डमण्डले अमुकर्तौ अमुकमासे अमुकपक्षे अमुकतिथौ अमुकवासरे अमुकनक्षत्रे अमुकयोगे अमुककरणे अमुकराशिस्थे चन्द्रे अमुकस्थे सूर्ये अमुकस्थिते देवगुरौ शेषेषु ग्रहेषु यथायथास्थानस्थितेषु सत्सु एवंगुणविशेषेण विशिष्टायां शुभपुण्यतिथौ अमुकशर्मणः ( भार्यया सहाधिकृतस्य ) मम इह जन्मनि जन्मान्तरे वा बाल्ययौवनवार्द्धक्यावस्थासु वाक्पाणिपादपायूपस्थघ्राणरसनाचक्षुःस्पर्शनश्रोत्रमनोभिश्चरित ज्ञाताज्ञातकामाकाममहापातकोपपातकादिसञ्चितानां पापानां ब्रह्महननसुरापानसुवर्णस्तेयगुरुतल्पगमनतत्संसर्गरूपमहापातकानां बुद्धिपूर्वकाणां मनोवाक्कायकृतानां बहुकालाभ्यस्तानां उपपातकानां च स्पृष्टास्पृष्टसङ्कलीकरणमलिनीकरणापात्रीकरणजातिभ्रंशकरणाविहिताकरणकर्मलोपजनितानां रसविक्रयकन्याविक्रयहयविक्रयगोविक्रयखरोष्ट्रविक्रयदासीविक्रयअजादिपशुविक्रयस्वगृहविक्रयनीलीविक्रयअक्रेयविक्रयपण्यविक्रयज-

लचरादिजन्तुविक्रयस्थलचरादिविक्रयखेचरादिविक्रयसम्भूतानां निरर्थकवृक्षच्छेदनऋणानपाकरणब्रह्मस्वापहरणदेवस्वापहरणराजस्वापहरणपरद्रव्यापहरणतैलादिद्रव्यापहरणफलादिहरणलोहादिहरणनानावस्तुहरणरूपाणां ब्राह्मणनिन्दागुरुनिन्दावेदनिन्दाशास्त्रनिन्दापरनिन्दाभक्ष्यभक्षणाभोज्यभोजनाचोष्यचोषणालेह्यलेहनापेयापेयास्पृश्यस्पर्शनाश्राव्यश्रवणाहिंस्यहिंसनावन्द्यवन्दनाचिन्त्यचिन्तनायाज्ययाजनापूज्यपूजनरूपाणां मातृपितृतिरस्कारस्त्रीपुरुषप्रीतिभेदनपरस्त्रीगमनविधवागमनवेश्यागमनदासीगमनचाण्डालादिहीनजातिगमनशूद्रगमनरजस्वलागमनपश्वादिगमनरूपाणां कूटसाक्षित्वपैशून्यवादमिथ्यापवादम्लेच्छसम्भाषणब्रह्मद्वेषकरणब्रह्मवृत्तिहरणवृत्तिच्छेदनपरवृत्तिहरणरूपाणां मित्रवञ्चनगुरुवञ्चनस्वामिवञ्चनासत्यभाषणगर्भपातनपथिताम्बूलचर्वणहीनजातिसेवनपरान्नभोजनगणान्नभोजनलशुनपलाण्डुगृञ्जनभक्षणतालवृक्षफलभक्षणोच्छिष्टभक्षणमार्जारोच्छिष्टभक्षणपर्युषितान्नभक्षणरूपाणां पङ्क्तिभेदकरणभ्रूणहिंसापशुहिंसाबालहिंसाद्यनेकहिंसोद्भूतानां शौचत्यागस्नानत्यागसन्ध्यात्यागौपासनाग्नित्यागवैश्वदेवत्यागरूपाणां निषिद्धाचरणकुग्रामवासब्रह्मद्रोहगुरुद्रोहपितृमातृद्रोहपरद्रोहपरनिन्दात्मस्तुतिदुष्टप्रतिग्रहदुर्जनसंसर्गरूपाणां गोयानवृषभयानमहिषीयानगर्दभयानोष्ट्रयानाजयानभृत्याभरणस्वग्रामत्यागगोत्रत्यागकुलत्यागदूरस्थमन्त्रणविप्राशाभेदनावन्दिताशीर्वादग्रहणपतितसम्भाषणरूपाणां पतितजनपङ्क्तिभोजनाहःसङ्गमवृथामनोरथादिपापानां तथा। महापापोपपापाभ्यां नानायोनिषु यत्कृतम्। बालभावेन यत्पापं क्षुत्तृडर्थे च यत्कृतम्॥ आत्मार्थे चैव यत्पापं परार्थे चैव यत्कृतम्। तीर्थेषु चैव यत्पापं गुर्ववज्ञाकृतं च यत्॥ रागद्वेषादिजनितं कामक्रोधेन यत्कृतम्॥ हिंसानिद्रादिजं पापं भेददृष्ट्या च यन्मया॥ देहाभिमानजं पापं सर्वदा यन्मया कृतम्। भूतं भव्यं च यत्पापं भविष्यं चैव गौतमि॥ शुष्कमार्द्रं च यत्पापं जानताजानता कृतम्। महल्लघु च यत्पापं तन्मे नाशय जाह्नवि॥ ब्रह्महा मद्यपः स्तेयी तथैव गुरुतल्पगः। महापापानि चत्वारि तत्संसर्गी तु

पञ्चमः ॥ अतिपातकमन्यच्च तन्न्यूनमुपपातकम् । गोवधो व्रात्यता स्तेयं ऋणानां चानपक्रियाः ॥ अनाहिताग्निता पण्यविक्रयः परिवेदनम् । इन्धनार्थे द्रुमच्छेदः स्त्रीहिंसौषधिजीवनम् ॥ हिंसायात्राविधानं च भृतकाध्यापनं तथा । प्रथमाश्रममारभ्य यत्किञ्चित्किल्बिषं कृतम् ॥ कृमिकीटादिहननं यत्किञ्चित्प्राणिहिंसनम् । मातापित्रोरशुश्रूषा तद्वाक्याकरणं तथा ॥ अपूज्यपूजनं चैव पूज्यानां च व्यतिक्रमः । अनाश्रमस्थताग्न्यादिदेवाशुश्रूषणं तथा ॥ परकार्यापहरणं परद्रव्योपजीवनम् । ततोऽज्ञानकृतं वापि कायिकं वाचिकं तथा ॥ मानसं त्रिविधं पापं प्रायश्चित्तैरनाशितम् । तस्मादशेषपापेभ्यस्त्राहि त्रैलोक्यपावनि ॥ निष्पापोऽस्म्यधुना देवि प्रसादात्तव नान्यथा ॥ [ 'स्त्रीणां विशेषः'—पाणिग्रहणमारभ्य स्वकर्मापरिपालनम् । इन्द्रियाभिरतिः पुंस्सु नानायोनिषु या भवेत् ॥ कृमिकीटादिहननं पङ्क्तिभेदादिकं तथा । स्पृष्टास्पृष्टमनाचारं मनसा दोषकल्पनम् ॥ तत्सर्वं नाशयेः क्षिप्रं गङ्गे त्वं यात्रया मया ॥ ] इत्यादि प्रकीर्णपातकानां एतत्कालपर्यन्तं सञ्चितानां लघुस्थूलसूक्ष्माणां च निःशेषपरिहारार्थं दशावरान् दशापरान् आत्मना सहितान् एकविंशति पुरुषानुद्धर्तुं ब्रह्मलोकावधि पञ्चाशत्कोटियोजनविस्तीर्णेऽस्मिन्भूमण्डले सप्तर्षिमण्डलपर्यन्तं वालुकाभिः कृतराशेः वर्षसहस्रावसाने एकैकवालुकापकर्षक्रमेण सर्वराश्यपकर्षसंमितकालपर्यन्तं ब्रह्मलोके ब्रह्मसायुज्यताप्राप्त्यर्थं कुरुक्षेत्रादिसर्वतीर्थेषु स्नानपूर्वकं सहस्रगोदानजन्यफलप्राप्त्यर्थं तथा मम समस्तपितॄणां आत्मनश्च विष्ण्वादिलोकप्राप्तये अधीतानामध्येष्यमाणानां चाध्यायानां स्थापनविच्छेदक्रोशघोषणदन्तविवृतिदुर्वचद्रुतोच्चारितवर्णानां पूर्वसवर्णानां गलोपलम्बितविवृतोच्चारितवर्णानाम् श्लिष्टास्पष्टवर्णविघट्टनादिभिः पठितानां श्रुतीनां यद्यातयामत्वं तत्परिहारार्थं अष्टात्रिंशदनध्यायाध्ययने रथ्यासञ्चरतः शूद्रस्य शृण्वतोऽध्ययने म्लेच्छान्त्यजादेः शृण्वतोऽध्ययने अशुचिदेशेऽध्ययने आत्मनोशुचित्वेऽध्ययने अक्षरस्वरानुस्वारपदच्छेदकण्डिकाज्ञनह्रस्वदीर्घप्लुतकण्ठताल्वमूर्द्धन्योष्ठ्यदन्त्यनासि-

कानुनासिकरेफजिह्वामूलीयोपध्मानीयोदात्तानुदात्तस्वरितादीनां व्यत्ययेनोच्चारे माधुर्याक्षरव्यक्तिहीनत्वाद्यनेकप्रत्यवायपरिहारपूर्वकं सर्वस्य वेदस्य सवीर्यत्वसम्पादनद्वारा यथावत्फलप्राप्त्यर्थं श्रीपरमेश्वरप्रीत्यर्थं देवब्राह्मणसवितासूर्यनारायणसन्निधौ गङ्गाभागीरथ्यां अमुकतीर्थे वा प्रवाहाभिमुखं स्नानमहं करिष्ये ॥ इति सङ्कल्प्य स्नायात् ॥ इति हेमाद्रिकृतः सङ्कल्पप्रयोगः ॥

५१९. अथ 'श्रावणीपद्धतिः'—पारस्करगृह्यसूत्रे—पौषस्य रोहिण्यां मध्यमायां वाष्टकायामध्यायानुत्सृजेयुरुदकान्तं गत्वाद्भिर्देवाञ्छन्दांऽसि वेदानृषीन्पुराणाचार्यान् गन्धर्वानितराचार्यान् संवत्सरश्च सावयवं पितॄनाचार्यान् स्वांश्च तर्पयेयुः। सावित्रीं चतुरनुद्रुत्यविरताः स्मऽइति प्रब्रूयुः क्षपणं प्रवचनं च पूर्ववत्। १५॥ 'तत्रैव'—अर्धषष्ठान्मासानधीत्योत्सृजेयुरर्धसप्तमासान्वाथेमामृचं जपत्युभाकवीयुवा यो नो धर्मः परापतत्। परिसख्यानि धर्मिणो विसृजामह इति त्रिरात्रंऽ सहोपविप्रतिष्ठेरन्। १४॥ 'तथा च'—अथातोऽध्यायोपाकर्मौषधीनां प्रादुर्भावे श्रवणेन श्रावण्यां पौर्णमास्यांऽश्रावणस्य पञ्चम्यांऽ हस्तेन वाज्यभागाविष्ट्वाज्याहुतीर्जुहोति इति। १३॥ याज्ञवल्क्यः—अधीतवेदोपाकर्म श्रावण्यां श्रवणेन च। हस्तेनौषध्यभावे वा पञ्चम्यां श्रावणस्य तु ॥ पौषमासस्य रोहिण्यामष्टकायामथापि वा। जलान्ते छन्दसां कुर्यात्तदुत्सर्गविधिं बहिः॥ त्र्यहं प्रेतेष्वनध्यायः शिष्यर्त्विग्गुरुबन्धुषु। उपाकर्मणि चोत्सर्गे स्वशाखाश्रोत्रिये मृते ॥ रेणुकदीक्षितः—पौषमासस्य रोहिण्यां कृष्णाष्टम्याथापि वा। उदकान्तं समासाद्य वेदस्योत्सर्जनं बहिः॥ मनुः—पुष्ये तु छन्दसां कुर्याद्बहिरुत्सर्जनं द्विजः। माघशुक्लस्य वा प्राप्ते पूर्वाह्णे प्रथमेऽहनि। कात्यायनः—उत्सर्गश्च तदा तिष्ये कुर्यात्प्रोष्ठपदेऽथवा ॥ खादिरगृह्ये—पुष्ये तूत्सर्जनं कुर्यादुपाकर्मदिनेऽथवा ॥ कार्ष्णाजिनिः—उपाकर्मणि चोत्सर्गे यथाकालं समेत्य च। ऋषीन्दर्भमयान्कृत्वा पूजयेत्तर्पयेत्ततः। सम्प्राप्ते श्रावणस्यान्ते पौर्णमास्यां दिनोदये। स्नानं कुर्वीत म-

(१) यदि यजमानो वेदाधिकारी न स्यात्तर्हि तेनायं सङ्कल्पः पुराणोक्तविधिना कार्यः उपाध्यायेन तत्करतः कारयितव्यश्च॥

तिमान् श्रुतिस्मृतिविधानतः । उपाकर्मादिकं प्रोक्तमृषीणां चैव तर्पणम् । शूद्राणां मन्त्ररहितं स्नानं दानं प्रशस्यते ॥ स्मृतिमहार्णवे—सङ्क्रान्ति-ग्रहणं वापि पौर्णमास्यां यदा भवेत् । उपाकृतिस्तु पञ्चम्यां कार्या वाज-सनेयिभिः ॥ वाचस्पतिः—नित्ये नैमित्तिके जाप्ये होमे यज्ञक्रियासु च । उपाकर्मणि चोत्सर्गे ग्रहदोषो न विद्यते ॥ 'वर्ज्यकालः'—रेणुक-दीक्षितकारिकायाम्—सङ्क्रान्तौ ग्रहणे चैव सूतके मृतकेऽपि वा । गण-स्नानं न कुर्वीत नारदस्य वचो यथा ॥ ( गणस्नानशब्देनोत्सर्गाख्यं कर्म ॥)

५२०. 'पूजनार्हा ऋषयः.' वाचस्पतिः—अत्रिर्वसिष्ठो भग-वान्कश्यपश्च महानृषिः । गौतमश्च भरद्वाजो विश्वामित्रस्तथैव च ॥ तथैव पुत्रो भगवानृचीकस्य महात्मनः । सप्तमो जमदग्निश्च ऋषयः साम्प्रतं दिवि ॥ अन्यच्च—कश्यपोऽथ भरद्वाजो गौतमश्चात्रिरेव च । जमदग्निर्वसिष्ठश्च विश्वामित्रो महामनाः ॥ एते देव-र्षयः सप्त साध्वी चैवाप्यरुन्धती । पूजनीया विशेषेण वेदो-त्सर्जनकर्मणि ॥ गौतमश्च भरद्वाजो विश्वामित्रो महामुनिः । जम-दग्निर्वसिष्ठश्च अत्रिश्चैव महामनाः ॥ एते च ऋषयः सप्त साध्वी चैवा-प्यरुन्धती ॥ कश्यपोऽथ भरद्वाज अङ्गिरा गौतमो मुनिः । वत्सः पराशरश्चेति माण्डव्यः सप्तमस्तथा ॥ क्वचिदेषोपि पाठः प्रवर्तते ॥ परञ्च एते ऋषयोस्मिन्वैवस्वते मन्वन्तरे पूजनार्हा न सन्तीति मत-भेदोपि क्वचिद्ग्रन्थान्तरे दृश्यते । ( याज्ञवल्क्यमृषिं स्वगोत्रप्रवर्तक-मृषिं च केचित्पूजयन्ति ) ॥

५२१. 'पूजाऽर्थे ऋषिकल्पनम्.' कात्यायनः—कश्यपादीनृषी-न्सप्त कृत्वा दर्भमयान् शुभान् । पूजयित्वा विधानेन तर्पयेच्छन्दसां गण-मिति ॥ अन्यच्च—अपामार्गसमिश्राणां कुशादीनां त्रिभिस्त्रिभिः । कुर्या-त्सप्त ऋषींश्चैव पूजयेच्च यथाक्रमम् ॥

५२२. 'ऋषिपूजनक्रमः.' रेणुकदीक्षितकारिकायाम्—ते-ष्ठावाहनं चैव कालज्ञानं भवेत्ततः । पूजोपवीतीदानं स्यात्प्राचीना-वीतिपूर्वकम् ॥ उत्सर्गः पितरश्चैव आचान्तो वंशकीर्तनम् ॥ तत्सवि-तुरित्यारभ्य गायत्र्या ब्रुवणं चतुः । विरताः स्मेति च सकृद-ध्यायादीन्पठेत्ततः । तदेतदृचाऽभ्युक्तं नमस्कारो विसर्जनम् । समुद्रेति जलं प्राश्य आचान्तोऽपि गृहं व्रजेत् ॥

५२३. 'उपाकर्मफलम्.' कात्यायनः—प्रत्यब्दं यदुपाकर्म सोत्सर्गं विधिवद्द्विजैः। क्रियते छन्दसां तेन पुनराप्यायनं भवेत्॥ अस्थानोच्चारसविच्छेदघोषणाध्यापनादिकम्। प्रामादिकं श्रुतौ यत्स्याद्यातयामत्वकारितात्॥ अयातयामैश्छन्दोभिर्यत्कर्म क्रियते द्विजैः। क्रीडमानैरपि सदा तत्तेषां सिद्धिकारकम्॥ मिताक्षरायाम्—यथाशास्त्रं तु कृत्वैवमुत्सर्गं छन्दसां बहिः। विरमेत्पक्षिणीं रात्रिं यद्वाप्येकमहर्निशम्॥ प्रयोगपारिजाते— उपाकर्मोत्सर्जनं च वनस्थानामपीष्यते। धारणाध्यापनांगत्वाद्गृहिणां ब्रह्मचारिणाम्॥

५२४. 'नूतनोपाकर्मविचारः'— नूतनोपाकर्मकारिणा स्नातकेन भद्रादिकुयोगरहिते उपाकर्मकाले स्नानसन्ध्यादि नित्यकर्म विधायाचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य। यथा—मया अध्येष्यमाणानां छन्दसां यातयामतानिरासेनाप्यायनद्वारा श्रीपरमेश्वरप्रीत्यर्थं छन्दसामुपाकर्म करिष्य इति सङ्कल्प्य। तदङ्गत्वेन गणपतिपूजनं स्वस्तिपुण्याहवाचनं मातृकापूजनं नान्दीश्राद्धं च कृत्वाग्निस्थापनानन्तरं तीर्थादिनिकटे गुरोः सकाशाद्वेदोपाकर्म कुर्यात्॥

५२५. अथ 'श्रावणीप्रयोगः.'—[तत्र श्रावणस्य पूर्णिमादिकाले प्रातः स्नानसन्ध्यादि नित्यकर्म विधाय गुरुः शिष्यगणैः सह ग्रामाद्बहिः प्राच्यामुदीच्यां वा नद्यादि रम्यं जलाशयं गत्वा तत्तीरे शुभ्रां यथादेशसम्भवां वा मृदमार्द्रं गोमयं भस्म कुशान् तिलाक्षतान् सुरभीणि पुष्पाणि दूर्वाङ्कुरापामार्गयज्ञोपवीतादिसर्वां श्रावणीसामग्रीं सम्पाद्य ऋषिस्थापनार्थं पीठं (श्वेतवस्त्रं रम्भाफलपत्रं वा) पूजनार्थं गन्धपुष्पादिपूजासम्भारं च सम्पाद्य मृल्लेपनपूर्वकं प्रक्षालितहस्तपादः प्राङ्मुख उदङ्मुखो वा सपवित्रकरो गुरुः कृतपञ्चशौचादियुक्तैः शिष्यैः सहाचम्य प्राणानायम्य देशकालौ सङ्की-[illegible]ः सह सङ्कल्पं कुर्यात्]॥ 'यथा—सङ्कल्पः'—अधीतानामध्ये-[illegible]णानां चाध्यायानां स्थापनविच्छेदक्रोशघोषणदन्तविद्दतिदु-[illegible]नोच्चारितवर्णानां पूर्वसवर्णानां गलोपलम्बितस्खलितोच्चारि-[illegible]नां श्लिष्टास्पष्टवर्णविघट्टनादिभिः पठितानां श्रुतीनां

(१) गर्गः—उपाकर्मणि चोत्सर्गे प्रेतस्नाने तथैव च। चन्द्रसूर्यग्रहे चैव रजोदोषो न [illegible]द्यते॥ इति वचनादुपाकर्मादौ नदीनां रजोदोषो नास्तीति बोध्यम्॥

यद्यातयामत्वं तत्परिहारार्थं अष्टत्रिंशदनध्यायाध्ययने रथ्या-सञ्चरतः शूद्रस्य शृण्वतोऽध्ययने म्लेच्छान्त्यजादेः शृण्वतोऽध्ययने अशुचिदेशेऽध्ययने आत्मनोशुचित्वेऽध्ययने अक्षरस्वरानुस्वारपदच्छेदकण्डिकाव्यञ्जनह्रस्वदीर्घप्लुतकण्ठतालुमूर्द्धन्योष्ठ्यदन्त्यनासिकानुनासिकरेफजिह्वामूलीयोपध्मानीयोदात्तानुदात्तस्वरितादीनां व्यत्ययेनोच्चारे माधुर्याक्षरव्यक्तिहीनत्वाद्यनेकप्रत्यवायपरिहारपूर्वकं सर्वस्य वेदस्य सवीर्यत्वसम्पादनद्वारा यथावत्फलप्राप्त्यर्थं श्रीपरमेश्वरप्रीत्यर्थं सशिष्योऽहं शुक्लयजुर्वेदोत्सर्गोपाकरणमहं करिष्ये इति सङ्कल्प्य । गुरुः शिष्यैः 'सहोभाकवीत्युच्चैः' पठेत् ॥ तद्यथा—ॐउभाकवीयुवा यो नो धर्मः परापतत् । परिसख्यानि धर्मिणो विसख्यानि विसृजामहे ॥ इति मन्त्रं पठित्वा यथाक्रमेण सर्वे गुरोरभिवादनं कुर्युः । ( पुनश्च देशकालौ स्मृत्वा सङ्कल्पयेद्यथा ) 'सङ्कल्पः'—अध्यायोत्सर्गकर्मनिमित्तं गणस्नानमहं करिष्ये ॥ पुनश्च इषेत्वादि ॐखं ब्रह्मान्तेषु याः क्रियास्तत्र विवस्वान् ऋषिः । सर्वाणि यजूꣳषि सर्वाणि छन्दाꣳसि प्रजापतिलिंङ्गोक्ता देवता स्नानादि सर्वकर्मसु विनियोगः इत्युक्त्वा 'स्नानानुज्ञां' प्रार्थयेत् । यथा—नमोऽस्तु देवदेवाय शितिकण्ठाय वेधसे । रुद्राय चापहस्ताय दण्डिने चक्रिणे नमः ॥ सरस्वती च गायत्री वेदमाता गरीयसी । सन्निधात्री भव त्वं च सर्वपापप्रणाशिनी ॥ यद्वा सागरनिर्घोष दण्डहस्तासुरान्तक । जगत्स्रष्टर्जगन्मित्र नमामि त्वां सुरान्तक ॥ तीक्ष्णदंष्ट्र महाकाय कल्पान्तदहनोपम । भैरवाय नमस्तुभ्यमनुज्ञां दातुमर्हसि ॥ नमामि गङ्गे तव पादपङ्कजं सुरासुरैर्वन्दितदिव्यरूपम् । भुक्तिं च मुक्तिं च ददासि नित्यं भावानुसारेण सदा नराणाम् ॥ ( इमं मन्त्रं समुच्चार्य तीर्थस्नानं समाचरेत् । अन्यथा तत्फलस्यार्धं तीर्थेशो हरति ध्रुवम् ) ॥ उत्तिष्ठन्तु महाभूता भूता भूमिवासिनः ॥ भूतानामविरोधेन स्नानकर्म समारभे ॥ अपसर्पन्तु ते भूता ये भूतास्तीर्थदूषकाः । ये भूता विघ्नकर्तारो नश्यन्तु शिवाज्ञया ॥ पुष्कराद्यानि तीर्थानि गङ्गाद्याः सरितस्तथा ।

( १ ) अत्रावसरे केचित् हेमाद्रिकृतं स्नानसङ्कल्पं कुर्वन्ति ॥

आगच्छन्तु पवित्राणि स्नानकाले सदा मम ॥ अपामधिपतिस्त्वं च तीर्थेषु वसतिस्तव । वरुणाय नमस्तुभ्यं स्नानानुज्ञां प्रयच्छ मे ॥ अधिष्ठात्र्यश्च तीर्थानां तीर्थेषु विचरन्ति याः । देवतास्ताः प्रयच्छन्तु स्नानाज्ञां मम सर्वदा ॥ गङ्गे च यमुने चैव गोदावरि सरस्वति । नर्मदे सिन्धुकावेरि जलेऽस्मिन् सन्निधिं कुरु ॥ 'ततः'—ॐ उरुꣳ हि राजा व्वरुणश्चकार० इति मन्त्रेण तोयमभिमन्त्रयेत् ॥ शेषः स्नानविधिः २७ पृष्ठे पूर्वोक्तनद्यादौ च नित्यस्नानप्रयोगवत्कर्तव्यः ॥ ततः धौतवाससी परिधाय दर्भासनादौ प्राङ्मुख उदङ्मुखो वोपविश्य भस्मगोपीचन्दनादि धृत्वा पवित्रपाणिराचम्य माध्याह्नसन्ध्यां कुर्यात् । ततः सूर्योपस्थानं मण्डलब्राह्मणं च सम्पाद्य । तच्च ( १६७ पृष्ठे ) द्रष्टव्यम् । ततः ब्रह्मयज्ञं देवर्षिमनुष्यपितृतर्पणं च कुर्यात् । तच्च ( १८४ पृष्ठे ) द्रष्टव्यम् ।

अथ 'ऋषिपूजनम्'—तत्रादौ ऋचं वाचमिति सूक्तं सर्वैः पठनीयम् । ( इदं सूक्तं रुद्रे शान्त्यध्याये २६२ पृष्ठे द्रष्टव्यम् ) । 'ऋषिप्रतिष्ठा'—ॐ मनो जूतिर्ज्जुषतामाज्ज्यस्य बृहस्पतिर्य्यज्ञमिमन्तनोत्त्वरिष्टं य्यज्ञꣳ समिमन्दधातु । विश्वेदेवा सऽइहमादयन्तामो ३ म्प्रतिष्ठ । $१\frac{१३}{२}$ ॥ एषवै प्रतिष्ठानामयज्ञो यत्रैतेन यज्ञेन यजन्ते सर्वमेव प्रतिष्ठितम्भवति । २ ॥ ब्राह्मणमन्त्रः ॐ प्रतिष्ठा सुप्रतिष्ठितमस्तु ॥ ( इति मन्त्रेण ऋष्युपरि अक्षतान् निक्षिपेत् ) ॥ 'ऋषिआवाहनम्'—ॐ भूर्भुवःस्वः कश्यपाय नमः कश्यपं आवाहयामि । भो कश्यप इहागच्छ इह तिष्ठ पूजां गृहाण मम संमुखः सुप्रसन्नो वरदो भव । १ ॥ ॐ भूर्भुवःस्वः भरद्वाजाय नमः भरद्वाजं आवाहयामि । भो भरद्वाज इहागच्छ इह तिष्ठ पूजां गृहाण मम संमुखः सुप्रसन्नो वरदो भव । २ ॥ ॐ भूर्भुवःस्वः गौतमाय नमः गौतमं

( १ ) अपामार्गमिश्रितैस्त्रिभिस्त्रिभिः कुशैः पृथक् पृथक् गायत्रीं पठित्वा ब्रह्मप्रयुक्ताः सप्तर्षयः कार्याः । ते च पीठे नवं सदशं धौतं वस्त्रं रम्भाफलपत्रं वा प्रसार्य तस्मिन्प्रागग्रा उदगग्रा वा स्थापनीयाः ॥

आवाहयामि । भो गौतम इहागच्छ इह तिष्ठ पूजां गृहाण मम संमुखः सुप्रसन्नो वरदो भव । ३ ॥ ॐ अत्रये नमः अत्रिं आवाहयामि । भो अत्रे इहागच्छ इह तिष्ठ पूजां गृहाण मम संमुखः सुप्रसन्नो वरदो भव । ४ ॥ ॐ भूर्भुवःस्वः जमदग्नये नमः जमदग्निं आवाहयामि । भो जमदग्ने इहागच्छ इह तिष्ठ पूजां गृहाण मम संमुखः सुप्रसन्नो वरदो भव । ५ ॥ ॐ भूर्भुवः स्वः वसिष्ठाय नमः वसिष्ठं आवाहयामि । भो वसिष्ठ इहागच्छ इह तिष्ठ पूजां गृहाण मम संमुखः सुप्रसन्नो वरदो भव । ६ ॥ ॐ भूर्भुवःस्वः विश्वामित्राय नमः विश्वामित्रं आवाहयामि । भो विश्वामित्र इहागच्छ इह तिष्ठ पूजां गृहाण मम संमुखः सुप्रसन्नो वरदो भव । ७ ॥ ॐ भूर्भुवःस्वः अरुन्धत्यै नमः अरुन्धतीमावाहयामि । भो अरुन्धति इहागच्छ इह तिष्ठ पूजां गृहाण मम संमुखा सुप्रसन्ना वरदा भव । ८ ॥ ॐ भूर्भुवःस्वः याज्ञवल्क्याय नमः याज्ञवल्क्यमावाहयामि भो याज्ञवल्क्य इहागच्छ इह तिष्ठ पूजां गृहाण मम संमुखः सुप्रसन्नो वरदो भव ॥ ९ ॥ ॐ इमावेव गौतमभरद्वाजा वयमेव गौतमोऽयं भारद्वाजऽइमावेव विश्वामित्रजमदग्नीऽअयमेव विश्वामित्रोऽयं जमदग्निरिमावेव वसिष्ठकश्यपा वयमेव वसिष्ठोऽयं कश्यपो वागेवात्रिर्वाचा ह्यन्नमद्यतेत्तिर्हवैनामैतद्यदत्रिरिति सर्वस्यात्ता भवति सर्वस्यान्नम्भवति यऽएवं वेद । २ ॥ 'सङ्कल्पः'—अद्येत्यादिशुभपुण्यतिथौ मत्मामनः श्रुतिस्मृतिपुराणोक्तफलप्राप्त्यर्थं श्रीपरमेश्वरप्रीत्यर्थं उत्सर्जनाङ्गत्वेन अरुन्धतीसहितकश्यपादिसप्तर्षिस्वऋषिपूजनमहं करिष्ये ॥ तत्रादौ निर्विघ्नतासिद्ध्यर्थं महागणपतिपूजनं स्मरणं वा करिष्ये । ( एवं गणपतिपूजां स्मरणं वा कृत्वा ऋषीन्ध्यायेत् ) 'ध्यानम्'—ॐ सप्तऽऋषयः प्रतिहिताः शरीरे सप्त रक्षन्ति सदमप्रमादम् । सप्तापः स्वपतो लोकमीयुस्तत्र जागृतोऽअस्वप्नजौ सत्र सदौ च देवौ । ३$\frac{५५}{३४}$ ॥ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्

समूढमस्य पाᳪसुरे स्वाहा। ४ $\frac{३५}{५}$॥ ॐसहस्रशी० ५ $\frac{७}{३१}$॥ ॐ भूर्भुवःस्वः अरुन्धतीसहितकश्यपादिस्वऋषिभ्यो नमः ध्यानपूर्वकमावाहनं समर्पयामि॥ 'आसनम्'—( सुवर्णघट्टितं दिव्यं नानारत्नसमन्वितम्। आसनं रुचिरं यच्च गृह्यतां भो मुनीश्वराः॥ )— ॐ पुरुष ए०। ६ $\frac{२}{३१}$॥ ॐ भूर्भुवःस्वः अरुन्धतीसहितकश्यपादिस्वऋषिभ्यो नमः आसनं समर्पयामि॥ 'पाद्यम्'—( गङ्गाजलं समानीतं गन्धद्रव्येण संयुतम्। पाद्यार्थं प्रतिगृह्णन्तु कश्यपाद्या महर्षयः॥ )— ॐ एतावा न०। ७ $\frac{३}{३१}$॥ ॐ भूर्भुवःस्वः अरुन्धतीसहितकश्यपादिस्वऋषिभ्यो नमः पाद्यं समर्पयामि॥ 'अर्घ्यम्'—( सुवर्णपात्रसंयुक्तं गन्धपुष्पाक्षतैर्युतम्। सप्तर्षयः प्रगृह्णन्तु इदमर्घ्यं मयार्पितम्॥ )— ॐ त्रिपादू०। ८ $\frac{४}{३१}$॥ ॐ भूर्भुवःस्वः अरुन्धतीसहितकश्यपादिस्वऋषिभ्यो नमः अर्घ्यं समर्पयामि॥ 'आचमनम्'—( कर्पूरवासितं तोयं सुवर्णकलशे स्थितम्। दत्तमाचमनीयं च ऋषीणां प्रीतये सदा॥ )—ॐ ततो वि० ९ $\frac{५}{३१}$॥ ॐ भूर्भुवःस्वः अरुन्धतीसहितकश्यपादिस्वऋषिभ्यो नमः आचमनीयं समर्पयामि॥ 'स्नानम्'—( सुगन्धद्रव्यसंयुक्तं पवित्रं मङ्गलं जलम्। स्नानार्थं वः समानीतं मुनयः प्रतिगृह्यथ॥ )—ॐ तस्माद्यज्ञात्सर्व०। १० $\frac{६}{३१}$॥ ॐ भूर्भुवःस्वः अरुन्धतीसहितकश्यपादिस्वऋषिभ्यो नमः स्नानं समर्पयामि॥ अथ 'क्षेपकं पञ्चामृतस्नानम्'—( पयो दधि घृतं चैव मधु च शर्करान्वितम्। पञ्चामृतं मयानीतं स्नानार्थं प्रतिगृह्यताम्॥ )— ॐ पञ्चन० ११ $\frac{११}{३४}$॥ ॐ भूर्भुवःस्वः अरुन्धतीसहितकश्यपादिस्वऋषिभ्यो नमः पञ्चामृतस्नानं समर्पयामि॥ 'गन्धोदकस्नानम्'— ॐ गन्धद्वारां दु०। १२ ॥ श्रीसूक्तमन्त्रः॥ ॐ भूर्भुवःस्वः अरुन्धतीसहितकश्यपादिस्वऋषिभ्यो गन्धस्नानं समर्पयामि। ) पूर्वपूजां समाप्य। पुरुषसूक्तेनाभिषेकं कुर्यात्॥ ॐ भूर्भुवःस्वः अरुन्धतीसहितकश्यपादिस्वऋषिभ्यो नमः महाभिषेकस्नानं समर्पयामि॥ इति क्षेपकम्'॥ वस्त्रम्— ( सूक्ष्माण्यतीव शुभ्राणि वस्त्राणि विविधानि च। ऋषयः प्रतिगृह्णन्तु उष्णशीतनिवारणे॥ )—ॐ तस्मा-

यज्ञा० । १३ $\frac{७}{३१}$ ॥ ॐ भूर्भुवःस्वः अरुन्धतीसहितकश्यपादिस्व-ऋषिभ्यो नमः वस्त्रं समर्पयामि ॥ 'यज्ञोपवीतम्'—( नानामन्त्रैः समुद्भूतं त्रिवृतं ब्रह्मसूत्रकम् । प्रत्येकं दीयते स्वच्छं ऋषयः प्रतिगृह्यताम् ॥)—ॐ तस्माद्श्वा० १४ $\frac{८}{३१}$ ॥ ॐ भूर्भुवः स्वः अरुन्धतीसहितकश्यपादिस्वऋषिभ्यो नमः यज्ञोपवीतानि समर्पयामि ॥ 'गन्धम्'—( आत्मसन्तापहारं च सुगन्धद्रव्यसंयुतम् । चन्दनं तत्प्रयच्छामि ऋषीणां प्रीतिहेतवे ॥ )—ॐ तं यज्ञ० । १५ $\frac{९}{३१}$ ॥ ॐ भूर्भुवःस्वः अरुन्धतीसहितकश्यपादिस्वऋषिभ्यो नमः गन्धं समर्पयामि ॥ ( अथ क्षेपकम्—'अक्षताः'—( शुभ्रतन्दुलजाः शुक्लाः शङ्खशुभ्रा मनोरमाः । अक्षतान्संप्रयच्छामि गृह्णन्तु मुनिपुङ्गवाः ॥ )—ॐ अक्षन्नमी० । १६ $\frac{५१}{३}$ ॥ ॐ भूर्भुवःस्वः अरुन्धतीसहितकश्यपादिस्वऋषिभ्यो नमः अक्षतान् समर्पयामि ॥ ( हरिद्रां कुङ्कुमं चैव कज्जलं भूषणानि च ॥ कङ्कणं कण्ठसूत्रं च गृहाण परमेश्वरि॥) ॐ अहिरि० । १७ $\frac{५१}{३}$ ॥ ॐ भूर्भुवःस्वः अरुन्धतीसहितकश्यपादिस्वऋषिभ्यो नमः हरिद्राकुङ्कुमादिद्रव्याणि समर्पयामि ॥ इति क्षेपकम् ॥ ) 'पुष्पाणि'[1]— ( माल्यादीनि सुगन्धीनि मालत्यादीनि सत्तमाः । मयार्पितानि पुष्पाणि गृह्णन्तु मुनिपुङ्गवाः ॥ )—ॐ यत्पुरुषं० १८ $\frac{१०}{३१}$ ॥ ॐ भूर्भुवःस्वः अरुन्धतीसहितकश्यपादिस्वऋषिभ्यो नमः ऋतुकालोद्भवपुष्पाणि समर्पयामि ॥ 'धूपम्'—(कृष्णागुरुसमुद्भूतो धूपोऽयं च दशाङ्गकः । सुगन्धः कश्यपादिभ्य ऋषिभ्यो दीयतेऽधुना ॥)—ॐ ब्राह्मणो० । १९ $\frac{११}{३१}$ ॥ ॐ भूर्भुवःस्वः अरुन्धतीसहितकश्यपादिस्वऋषिभ्यो नमः धूपं दर्शयामि ॥ 'दीपम्'— ( पञ्चवर्तिसमायुक्तः सर्वमङ्गलशोभनः । मया निवेदितो भक्त्या दीपोऽयं प्रतिगृह्यताम् ॥ )— ॐ चन्द्रमा म० । २० $\frac{१२}{३१}$ ॥ ॐ भूर्भुवःस्वः अरुन्धतीसहितकश्यपादिस्वऋषिभ्यो नमः दीपं दर्शयामि ॥ 'नैवेद्यम्'— ( फलमूलसमायुक्तं नानाशाकसमन्वितम्

---

( १ ) तुलसीदलानि बिल्वपत्राणि कमलानि च ऋषिभ्यो विशेषतः समर्प्याणि ।

शर्कराघृतसंयुक्तं नैवेद्यं प्रतिगृह्यताम् ॥ )— ॐ नाभ्याऽ आ० । ।२१$\frac{11}{31}$ ॥ ॐ भूर्भुवः स्वः अरुन्धतीसहितकश्यपादिस्वऋषिभ्यो नमः नैवेद्यं समर्पयामि ॥ नैवेद्यमध्ये पानीयं समर्पयामि । उत्तरापोशनं हस्तप्रक्षालनं मुखप्रक्षालनं करोद्वर्तनार्थे चन्दनं च समर्पयामि ॥ [अथ क्षेपकम्—'फलम्'—( नारिकेलं च कूष्माण्डं कदली कर्कटीफलम् । ऋतुकालोद्भवं चान्यद्दीयतेऽद्य मुनीश्वराः ॥)— ॐ याःफुलि० २२$\frac{89}{12}$ ॥ ॐ भूर्भुवःस्वः अरुन्धतीसहितकश्यपादिस्वऋषिभ्यो नमः फलानि समर्पयामि ॥ इति क्षेपकम् ॥] ॥ 'ताम्बूलम्'—(पूगीफलं सकर्पूरं नागवल्लीदलैर्युतम् । एलालवङ्गसंयुक्तं ताम्बूलं प्रतिगृह्यताम् ॥)—ॐयत्पुरुषे० । २३$\frac{14}{31}$ ॥ ॐ भूर्भुवः-स्वः अरुन्धतीसहितकश्यपादिस्वऋषिभ्यो नमः ताम्बूलं समर्पयामि। [अथ क्षेपकम्—दक्षिणा— हिरण्यगर्भगर्भस्थं हेमबीजं विभावसोः। अनन्तपुण्यफलदमतः शान्तिं प्रयच्छ मे ॥—ॐ हिरण्यगर्भ० । ।२४$\frac{57}{23}$ ॥ ॐ भूर्भुवः स्वः अरुन्धतीसहितकश्यपादिस्वऋषिभ्यो नमः दक्षिणां समर्पयामि ॥ 'कर्पूरारार्तिक्यम्'— ( ब्रह्मिष्ठा ब्रह्मरूपाश्च कश्यपाद्या महर्षयः। ब्रह्मप्रज्ञादिदातारः सन्तु मे कीर्तिकर्मणि॥)— ॐ इदꣳहु० । २५$\frac{48}{9}$ ॥ ॐ भूर्भुवः स्वः अरुन्धतीसहितकश्यपादिस्वऋषिभ्यो नमः कर्पूरारार्तिक्यं दर्शयामि ॥ इति क्षेपकम् ॥] ॥ 'प्रदक्षिणा'—यानि कानि च पापानि जन्मान्तरकृतानि च। तानि तानि विनश्यन्ति प्रदक्षिणपदेपदे ॥)—ॐ सप्तास्या० २६$\frac{15}{31}$ ॥ ॐ भूर्भु० अरुन्धतीसहितकश्यपादिस्वऋषिभ्यो नमः प्रदक्षिणां समर्पयामि ॥ 'मन्त्रपुष्पयुक्तो नमस्कारः'— ( शरणागतदीनार्तपरित्राणपरायणाः । रक्षन्तु मुनयः सर्वे ममाद्य शरणागतम् । सप्तर्षयः शुभाः श्रेष्ठाः सर्वेषां च शुभप्रदाः। पुष्पाञ्जलिं मया दत्तं गृह्णन्तु मुनिसत्तमाः)— ॐ यज्ञेन यज्ञ० २७$\frac{16}{31}$ ॥ ॐ भूर्भुवः स्वः अरुन्धतीसहितकश्यपादिस्वऋषिभ्यो नमः मन्त्रपुष्पयुक्तं नमस्कारं समर्पयामि ॥ 'प्रार्थना'—मन्त्रहीनं क्रियाहीनं भक्तिहीनं मुनीश्वराः। यत्पूजितं मया सर्वं परिपूर्णं तदस्तु मे ॥ ॐ भूर्भुवःस्वः अरुन्धतीसहितकश्यपादिस्वऋ-

षिभ्योनमः प्रार्थनां समर्पयामि ॥ अर्पणम्—अनेन मया वेदोत्सर्जनाङ्गत्वेन कृतेन ध्यानावाहनादिषोडशोपचारादिपूजनेन अरुन्धतीसहितकश्यपादिसप्तर्षिस्वऋषयः प्रीयन्तां न मम ॥ ॐ तत्सद्ब्रह्मार्पणमस्तु ॥ इति ऋषिपूजनम् ॥ ततः 'स्वपितृभ्यो यज्ञोपवीतदानम्'—अमुकगोत्रेभ्यः अस्मत्पितृपितामहप्रपितामहेभ्यः । तथा द्वितीयं— अमुकगोत्रेभ्यः अस्मन्मातामहप्रमातामहवृद्धप्रमातामहेभ्यः । तृतीयं— कव्यवाडनलादिदिव्यपितृभ्यः इमानि यज्ञोपवीतानि स्वधा सम्पद्यन्ताम् इति ऋष्युपरि समर्पयेत् । (जीवत्पितृकैरपि पितुः पित्रादिभ्यो मातामहादिभ्यश्च यज्ञोपवीतानि देयानि । ततः सव्यं कृत्वा सर्वान्ब्राह्मणान् गन्धादिना सम्पूज्य तेभ्यो यज्ञोपवीतानि दत्वा पश्चात् सर्वैः स्वयमपि धार्याणि । स च यज्ञोपवीतधारणप्रयोगः अग्रे द्रष्टव्यः । ततः जीर्णयज्ञोपवीतानि शिरोमार्गेण निःसारयेत् । ) ॥ 'अथोत्सर्गतर्पणम्'— आचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य छन्दसां क्वचिदनध्यायादिकाले पठनादनधिकारिभिः श्रावणाच्च प्राप्तमालिन्यस्य निरासार्थमुत्सर्गाख्यतर्पणमहं करिष्ये इति सङ्कल्प्य । 'देवतर्पणम्'— ॐ विश्वेदेवास ऽआगत शृणुता मऽइमꣳ हवम् । एदम्बर्हिर्निषीदत । * । २९ $\frac{३४}{७}$ ॥ विश्वेदेवाः शृणुतेमꣳ हवम्मे येऽअन्तरिक्षे य ऽउपद्यविष्ठ । ये ऽअग्निजिह्वाऽ उतवा यजत्राऽ आसद्यास्मिन्बर्हिषि मादयध्वम् । ३० $\frac{५३}{३३}$ ॥ इति मन्त्राभ्यां देवानावाह्य । ॐ देवास्तृप्यन्तु । ॐ छन्दाꣳसि तृप्यन्तु । ॐ वेदास्तृप्यन्तु । ॐ ऋषयस्तृप्यन्तु । ॐ पुराणाचार्यास्तृप्यन्ताम् । ॐ गन्धर्वास्तृप्यन्ताम् । ॐ इतराचार्यास्तृप्यन्ताम् । ॐ संवत्सरः सावयवस्तृप्यताम् । [अथ क्षेपकम्—केचित्संवत्सरावयवान्पृथक्त्वेन तर्पयन्ति । तद्यथा]—ॐ अहोरात्रास्तृप्यन्ताम् । ॐ अर्धमासास्तृप्यन्ताम् । ॐ मासास्तृप्यन्ताम् । ॐ ऋतवस्तृप्य-

(१) प्राचीनावीती दक्षिणाभिमुखाः सर्वे कुशोदकं गृहीत्वा पुरतो यज्ञोपवीतानि निधाय ॥ (२) दक्षिणंजान्वाच्येशानाभिमुखः सव्येन प्रागग्रैर्दर्भैर्देवतीर्थेन देवानामञ्जलित्रयं दद्यात् ॥

न्ताम्। ॐ संवत्सरः सावयवस्तृप्यताम् ॥ इति क्षेपकम् ॥] ॥ ॐ पितरस्तृप्यन्ताम्। ॐ आचार्यास्तृप्यन्ताम् ॥ ततः सव्यं जान्वाच्य दक्षिणाभिमुखोऽपसव्येन तिलमिश्रितं जलमञ्जलौ गृहीत्वा अमुकगोत्राः अस्मत्पितरः अमुकशर्माणो वसुरूपास्तृप्यध्वं स्वधा नमः। अमुकगोत्राः अस्मत्प्रपितामहाः अमुकशर्माणो रुद्ररूपास्तृप्यध्वं स्वधा नमः ॥ [अन्ये तु आभिरद्भिः उदीरतामित्यादिनोक्ततर्पणविधिना अहरहः क्रियमाणेन सर्वान् पितॄन् तर्पयन्ति ॥ जीवत्पितृकैः पुत्रैः शिष्यैश्चाचार्यपितृतर्पणं कार्यम् ॥ तच्च—अमुकगोत्राः अस्मदाचार्यस्य पितरः अमुकशर्माणस्तृप्यध्वं स्वधा। एवमाचार्यस्य पितामहप्रपितामहानां ज्ञेयम् ॥] ततः 'आचमनम्'—तूष्णीम् पश्चात् ॥ 'वंशानां श्रवणम्'—

अथ वꣳशꣳसमानुमासाञ्जीवीपुत्रात्साञ्जीवीपुत्रो माण्डूकायनेर्माण्डूकायनिर्माण्डव्यान्माण्डव्यः कौत्सात्कौत्सो माहित्थेर्माहित्थिर्वामकक्षायणाद्वामकक्षायणो वात्स्याद्वात्स्यꣳ शाण्डिल्याच्छाण्डिल्यꣳ कुश्रेꣳ कुश्रिर्यज्ञवचसो राजस्तम्बायनाद्यज्ञवचा राजस्तम्बायनस्तुरात्कावषेयात्तुरꣳकावषेयꣳ प्रजापतेꣳ प्रजापतिर्ब्रह्मणो ब्रह्म स्वयम्भुब्रह्मणे नमꣳ। १ ॥ वंशोक्ताꣳऋषयस्तृप्यन्ताम्। अथ वꣳशस्तदिदं वयꣳ शौर्पणाय्याच्छौर्पणाय्यो गौतमाद्गौतमो वात्स्याद्वात्स्यो वात्स्याच्च पाराशर्य्याच्च पाराशर्य्यꣳ साङ्कृत्याच्च भारद्वाजाच्च भारद्वाज ऽऔदवाहेश्च शाण्डिल्याच्च शाण्डिल्यो वैजवापाच्च गौतमाच्च गौतमो वैजवापायनाच्च वैष्ठपुरेयाच्च वैष्ठपुरेयꣳशाण्डिल्याच्च रौहिणायनाच्च रौहिणायनꣳशौनकाच्चात्रेयाच्च रैभ्याच्च रैभ्यꣳपौतिमाष्यायणाच्च कौण्डिन्यायनाच्च कौण्डिन्यायनꣳ कौण्डिन्यात्कौण्डिन्यः कौण्डिन्यात्कौण्डिन्यः कौ-

(१) एवं ऋष्युपरि उदकं क्षिपेत् ॥

ण्डिन्याच्चाग्निवेश्याच्च । २ ॥ आग्निवेश्यः सैतवात् सैतवः पाराशर्य्यात्पाराशर्य्यो जातूकर्ण्याज्जातूकर्ण्यो भारद्वाजाद्भारद्वाजो भारद्वाजाच्चासुरायणाच्च गौतमाच्च गौतमो भारद्वाजाद्भारद्वाजो वैजवापायनाद्वैजवापायनः कौशिकायनेः कौशिकायनिर्घृतकौशिकाद्घृतकौशिकः पाराशर्य्यायणात्पाराशर्य्यायणः पाराशर्य्यात्पाराशर्य्यो जातूकर्ण्याज्जातूकर्ण्यो भारद्वाजाद्भारद्वाजो भारद्वाजाच्चासुरायणाच्च यास्काच्चासुरायणस्त्रैवणेस्त्रैवणिरौपजन्धनेरौपजन्धनिरासुरेरासुरिर्भारद्वाजाद्भारद्वाजऽआत्रेयात् । ३ ॥ आत्रेयो माण्टेर्माण्टिर्गौतमाद्गौतमो गौतमाद्गौतमो वात्स्याद्वात्स्यः शाण्डिल्याच्छाण्डिल्यः कैशोर्य्यात्काप्यात्कैशोर्य्यः काप्यः कुमारहारितात्कुमारहारितो गालवाद्गालवो विदर्भीकौण्डिन्याद्विदर्भीकौण्डिन्यो वत्सनपातो बाभ्रवाद्वत्सनपाद्बाभ्रवः पथः सौभरात्पन्थाः सौभरो यास्यादाङ्गिरसादयास्यऽआङ्गिरस ऽआभूतेस्त्वाष्ट्रादाभूतिस्त्वाष्ट्रो विश्वरूपात्त्वाष्ट्राद्विश्वरूपस्त्वाष्ट्रोऽश्विभ्यामश्विनौ दधीचआथर्वणाद्दध्यङ्ङाथर्वणो दैवादथर्वा दैवो मृत्योः प्राध्वꣳसनान्मृत्युः प्राध्वꣳसनात्प्राध्वꣳसनऽ एकर्षेरेकर्षिर्विप्रजितेर्विप्रजितिर्व्यष्टेर्व्यष्टिः सनारोः सनारुः सनातनात्सनातनः सनगात्सनगः परमेष्ठिनः परमेष्ठी ब्रह्मणो ब्रह्मस्वयम्भु ब्रह्मणे नमः ।४॥ वंशोक्ताऽऋषयस्तृप्यन्ताम् ॥ अथ वꣳशस्तदिदं वयꣳ शौर्पणाय्याच्छौर्पणाय्यो गौतमाद्गौतमो वात्स्याद्वात्स्यो वात्स्याच्च पाराशर्य्याच्च पाराशर्य्यः साङ्कृत्याच्च भारद्वाजाच्च भारद्वाजऽऔदवाहेश्च शाण्डिल्याच्च

शाण्डिल्यो वैजवापाच्च गौतमाच्च गौतमो वैजवापाय-
नाच्च वैष्ठपुरेयाच्च वैष्ठपुरेयꣳ शाण्डिल्याच्च रौहिणायना-
च्च रौहिणायनꣳ शौनकाच्च जैवन्तायनाच्च रैभ्याच्च रैभ्यꣳ
पौतिमाष्यायणाच्च कौण्डिन्यायनाच्च कौण्डिन्यायनꣳ
कौण्डिन्याभ्यां कौण्डिन्या ऽऔर्णवाभेभ्य ऽऔर्णवाभाꣳ
कौण्डिन्यात्कौण्डिन्यꣳ कौण्डिण्यात्कौण्डिन्यꣳकौण्डिन्या
च्चाग्निवेश्याच्च । ५ ॥ आग्निवेश्यꣳ सैतवात्सैतवꣳ पा-
राशर्य्यात्पाराशर्य्यो जातूकर्ण्याज्जातूकर्ण्यो भारद्वाजा-
द्भारद्वाजो भरद्वाजाच्चासुरायणाच्च गौतमाच्च गौतमो
भारद्वाजाद्भारद्वाजो बलाकाकौशिकाद्बलाकाकौशिकꣳ
काषायणात्काषायणꣳ सौकरायणात्सौकरायणस्त्रैवणस्त्रै-
वणि रौपजन्धने रौपजन्धनिꣳ सायकायनात्सयकायनꣳ
कौशिकायनेꣳ कौशिकायनिर्घृतकौशिकाद्घृतकौशिकꣳ
पाराशर्य्यायणात्पाराशर्य्यायणꣳ पाराशर्य्यात्पाराशर्य्यो
जातूकर्ण्याज्जातूकर्ण्यो भारद्वाजाद्भारद्वाजो भारद्वाजा-
च्चासुरायणाच्च यास्काच्चासुरायणस्त्रैवणेस्त्रैवणि रौपजन्ध
नै रौपजन्धनिरासुरेरासुरिर्भारद्वाजाद्भारद्वाजऽआत्रेया-
त्। ६॥आत्रेयादात्रेयो माण्टेर्माण्टिर्गौतमाद्गौतमो गौतमा
द्गौतमो वात्स्याद्वात्स्यꣳशाण्डिल्याच्छाण्डिल्यꣳकैशोर्य्या
त्काप्यात्कैशोर्य्यꣳ काप्यꣳ कुमारहारितात्कुमारहारितो
गालवाद्गालवो विदर्भीकौण्डिन्याद्विदर्भीकौण्डिन्यो व-
त्सनपातो बाभ्रवाद्वत्सपाद्बाभ्रवꣳ पथꣳ सौभरात्प-
न्थाꣳ सौभरो यास्यादाङ्गिरसादयास्यऽआङ्गिरसऽआभू-
तेस्त्वाष्ट्रादाभूतिस्त्वाष्ट्रो विश्वरूपात्त्वाष्ट्राद्विश्वरूपस्त्वाष्ट्रो-
ऽश्विभ्यामश्विनौ दधीचऽआथर्वणाद्दध्यङ्ङाथर्वणो दैवादथ-

द्वौहैवोमृत्योः प्राध्वᳪ सनान्मृत्युः प्राध्वᳪ सनात्प्राध्वᳪ
सनऽएकर्षेरेकर्षिर्विप्रजितेर्विप्रजितिर्व्यष्टेर्व्यष्टिᳪ सनारोᳪ
सनारुᳪ सनातनात्सनातनᳪ सनगात्सनगᳪ परमेष्ठि-
नᳪ परमेष्ठी ब्रह्मणो ब्रह्मस्वयम्भु ब्रह्मणे नमᳪ वंशो-
काऽऋषयस्तृप्यन्ताम् । ७ ॥ अथ वᳪशस्तदिदं वयᳪ
भारद्वाजीपुत्राद्भारद्वाजीपुत्रो वात्सीमाण्डवीपुत्राद्वा-
त्सीमाण्डवीपुत्रᳪ पाराशरीपुत्रात्पाराशरीपुत्रो गार्गी-
पुत्राद्गार्गीपुत्रᳪ पाराशरीकौण्डिनीपुत्रात्पाराशरीकौ-
ण्डिनीपुत्रो गार्गीपुत्राद्गार्गीपुत्रो गार्गीपुत्राद्गार्गीपुत्रो
बाडेयीपुत्राद्बाडेयीपुत्रो मौषिकीपुत्रान्मौषिकीपुत्रो हा-
रिकर्णीपुत्राद्धारिकर्णीपुत्रोभारद्वाजीपुत्राद्भारद्वाजीपुत्रᳪ
पैङ्गीपुत्रात्पैङ्गीपुत्रᳪ शौनकीपुत्राच्छौनकीपुत्रᳪ । ८ ॥
काश्यपीबालाक्यामाठरीपुत्रात्काश्यपीबालाक्यामाठ-
रीपुत्रᳪ कौत्सीपुत्रात्कौत्सीपुत्रो बौधीपुत्राद्बौधीपुत्रᳪ
शालङ्कायनीपुत्राच्छालङ्कायनीपुत्रो वार्षगणीपुत्राद्वार्ष-
णीपुत्रो गौतमीपुत्राद्गौतमीपुत्रऽआत्रेयीपुत्रादात्रेयीपुत्रो
गौतमीपुत्राद्गौतमीपुत्रो वात्सीपुत्राद्वात्सीपुत्रो भारद्वाजी
पुत्राद्भारद्वाजीपुत्रᳪ पाराशरीपुत्रात्पाराशरीपुत्रो वार्का-
रुणीपुत्राद्वार्कारुणीपुत्रऽआर्तभागीपुत्रादार्तभागीपुत्रᳪ
शौङ्गीपुत्राच्छौङ्गीपुत्रᳪसाङ्कृतीपुत्रात्साङ्कृतीपुत्रᳪ । ९ ॥
आलम्बीपुत्रादालम्बीपुत्र ऽआलम्बायनीपुत्रादालम्बा-
यनीपुत्रो जायन्तीपुत्राज्जायन्तीपुत्रो माण्डूकायनीपु-
त्रान्माण्डूकायनीपुत्रो माण्डूकीपुत्रान्माण्डूकीपुत्रᳪ शा-
ण्डिलीपुत्राच्छाण्डिलीपुत्रो राथीतरीपुत्राद्राथीतरी-
पुत्रᳪ क्रौञ्चिकीपुत्राभ्यां क्रौञ्चिकीपुत्रो वैदभृतीपुत्राद्वै-

द्वैदभृतीपुत्रो भालुकीपुत्राद्भालुकीपुत्रः प्राचीनयोगी-
पुत्रात्प्राचीनयोगीपुत्रः साञ्जीवीपुत्रात्साञ्जीवीपुत्रः
कार्शकेयीपुत्रात्कार्शकेयीपुत्रः। १०॥ प्राश्नीपुत्रादासुरि-
वासिनः। प्राश्नीपुत्र आसुरायणादासुरायण आसुरे-
रासुरिर्याज्ञवल्क्याद्याज्ञवल्क्य उद्दालकादुद्दालको-
ऽरुणादरुण उपवेशेरुपवेशिः कुश्रेः कुश्रिर्वाजश्रवसो
वाजश्रवा जिह्वावतो बाध्योगाज्जिह्वावान्बाध्योगोसि-
तात्वार्षगणादसितो वार्षगणो हरितात्कश्यपाद्धरितः
कश्यपः शिल्पात्कश्यपाच्छिल्पः कश्यपः कश्यपान्नैध्रु-
वेः कश्यपो नैध्रुविर्वाचो वागंभिण्या अम्भिण्यादि-
त्यादादित्यानिमानि शुक्लानि यजूंषि वाजसनेयेन
याज्ञवल्क्येनाख्यायन्ते। ११॥ वंशोक्ता ऋषयस्तृप्य-
न्ताम्॥ ॐ तत्सवितुरिति चतुर्वारं गायत्रीं पठेत्॥
इति प्रतिवंशवंशोक्तानामृषीणां तर्पणम्॥ ततः तत्सवितुर्वे०
सावित्र्याश्चतुः कृत्वानुब्रुवणम्। सर्वेषां तदन्ते ॐ विरतास्म इति सकृ-
दुच्चैर्ब्रूयात्॥ 'अध्यायाः'— इषे त्वा। १॥ कृष्णोसि।
२॥ समिधाग्निम्। ३॥ एदम्। ४॥ अग्नेस्तू-
नूः। ५॥ देवस्य त्वा। ६॥ वाचस्पतये॥ ७॥ उप-
यामगृहीतोसि। ८॥ देव सवितः। ९॥ अपो देवाः
१०॥ युञ्जानः प्रथमम्। ११॥ दृशानो रुक्मः।
१२॥ मयिगृह्णामि। १३॥ ध्रुवक्षितिर्ध्रुवयोनिः।
१४॥ अग्ने जातान्। १५॥ नमस्ते। १६॥ अश्म-
न्नूर्जम्। १७॥ वाजश्च। १८॥ स्वादीन्त्वा। १९॥
क्षत्रस्य योनिः। २०॥ इमम्मे। २१॥ तेजोसि। २२॥
हिरण्यगर्भः सम। २३॥ अश्वस्तूपरः। २४॥ शा-

दंन्दुह्निऽं । २५ ॥ अग्निश्च । २६ ॥ समास्त्वा । २७ ॥
होता यक्षत् । २८ ॥ समिद्धोऽअञ्जन् । २९ ॥ देव स-
वितऽं । ३० ॥ सहस्रशीर्षा पुरुषऽं । ३१ ॥ तदेव । ३२ ॥
अस्याजरासः । ३३ ॥ यज्जाग्रतऽं । ३४ ॥ अपेतऽं ।
। ३५ ॥ ऋचं वाचम् । ३६ ॥ देवस्य त्वा । ३७ ॥
देवस्य । ३८ ॥ स्वाहा प्राणेभ्यः । ३९ ॥ ईशा वास्य-
म । ४० ॥ ॐ हिरण्मयेन पात्रेण । सत्यस्यापिहित-
म्मुखम् । योऽसावादित्ये पुरुषऽं सोऽसावहम् । १७/४० ॥
ॐ ३ म ॥ ॐ खम्ब्रह्म । अध्यायोक्ता ऋषयस्तृप्यन्ताम् ॥
अथ 'कण्डिकाः'—व्रतमुपैष्यन् । १ । सवैकपालान्येवा-
न्यतरऽउपदधाति । २ । सवैस्रुचऽं संमार्ष्टि । ३ ।
हिङ्कृत्यान्वाह । ४ । सवै प्रवरायाश्रावयति । ५ ।
ऋतवो हवै देवेषु यज्ञे भागमीषिरे । ६ । सवै पर्ण-
शाखया वत्सानपाकरोति । ७ । मनवे हवै प्रातऽं । ८ ।
स यत्रा ह । ९ । स यवह्वाइतश्चेतश्च सम्भरति । १० ।
उद्धृत्याहवनीयम्पूर्णाहुतिं जुहोति । ११ । सूर्य्योहवाऽ
अग्निहोत्रम । १२ । अथ हुतेऽग्निहोत्रमुपतिष्ठते । १३ ।
प्रजापतिर्हवा इदमग्र ऽएकऽएवा स । १४ । पित्रा महा-
हविषाहवै देवा वृत्रं जघ्नुऽं । १५ । देवयजनं योषयन्ते ।
। १६ । दक्षिणेनाहवनीयं प्राचीनग्रीवे कृष्णाजिने
ऽउपस्तृणाति । १७ । सप्तपदान्यनुनिःक्रामति । १८
शिरो वै यज्ञस्यातिथ्यं बाहूप्रायणीयोदयनीयौ । १९
तद्य ऽएष पूर्वार्ध्यो वर्षिष्ठ स्थूणराजो भवति । २०
उदरमेवास्य सदः । २१ । अभ्रिमादत्ते । २२ । तद्यत्रै-
तत्प्रवृतो होता होतृषदन ऽउपविशति । २३ । प्रजाप-

तिर्वै प्रजाः स सृजानो रिरिचान ऽइवामन्यत । २४ । प्राणो हवा ऽअस्योपाꣳशुः ।२५। चक्षुषी हवा ऽअस्य शुक्रामन्थिनौ । २६ । भक्षयित्वा समुपहूताꣳ स्सऽइत्युक्त्वोत्तिष्ठति । २७ । मनो हवाऽअस्य सविता । २८। आदित्येन चरुणोदयनीयेन प्रचरति । २९ । प्रजापतिर्व्वाऽएष यद्ꣳशुः । ३० । देवाश्च वाऽअसुराश्च ।३१। अथ स्रुवञ्चाज्यविलापनीं चादाय । ३२ । अरण्योरग्नी समारोह्य । ३३ । केशवस्य पुरुषस्य । ३४ । आग्नेयोष्टाकपालꣳ पुरोडाशो भवति । ३५ । असद्वा ऽइदमग्रऽ आसीत् । ३६ । प्रजापतिरग्निरूपाण्यभ्यध्यायत । ३७ । एतद्वैदेवाऽअब्रुवन् । ३८ । अथैनमतꣳ खनन्त्येव । ३९ । पर्णकषाय निष्पक्काऽएताऽआपो भवन्ति । ४० । भूयाꣳसि हवीꣳषि भवन्ति । ४१ । रुक्मस्प्रतिमुच्य बिभर्त्ति । ४२ । त्रनीबाह्येताग्नि बिभ्रदित्याहुः । ४३ । गार्हपत्यं चेष्यन्पलाशशाखया व्युदूहति । ४४। अथातो नैर्ऋतीर्हरन्ति । ४५ । चितोगार्हपत्यो भवति । ४६ । आत्मन्नग्निं गृह्णीतेचेष्यन् ।४७। कूर्म्ममुपदधाति । ४८ । प्राणभृतऽउपदधाति ।४९ । द्वितीयां चितिमुपदधाति।५०। तृतीयां चितिमुपदधाति । ५१। चतुर्थीं चितिमपदधाति।५२।पञ्चमीं चितिमुपदधाति।५३।नाकसदऽउपदधाति। ५४। ऋतव्याऽउपदधाति।५५। अथातꣳशतरुद्रियं जुहोति।५६। उपवसथीये हन् प्रातरुदित ऽआदित्ये । ५७ । अथातो वैश्वानरं जुहोति । ५८ । अथातो राष्ट्रभृतो जुहोति । ५९ । अथातꣳ पयो व्रततायै । ६०। अग्निरेष पुरस्ताच्चीयते । ६१ । प्रजापतिꣳ स्वर्गंल्लोक-

२६

स्रजिगाᳫँसत । ६२ । प्राणो गायत्री । ६३ । प्रजापतिं विश्वस्तम् । ६४ । तस्य वाऽएतस्याऽम्नेः । ६५ । अथ हैतेरुणे । ६६ । संवत्सरो वै यज्ञः प्रजापतिः । ६७ । त्रिर्हवै पुरुषो जायते । ६८ । वाग्घवा ऽएतस्याग्निहोत्रस्या ग्निहोत्री । ६९ । उद्दालको हारुणिः । ७० । उर्वशी हाप्सराः । ७१ । भृगुर्हवै वारुणिः । ७२ । पशुबन्धेन यजते । ७३ । तद्यथा हवै । ७४ । अयं वै यज्ञो योयं पवते । ७५ । समुद्रं वाऽएते प्रचरन्ति । ७६ । यद्वा लोके । ७७ । दीर्घसत्त्रᳫँ हवाऽएतऽउपयन्ति । ७८ । तदाहुर्येदेष दीर्घसत्री । ७९ । सोमो वै राजा यज्ञः प्रजापतिः । ८० । विश्वरूपं वै त्वाष्ट्रमिन्द्रो हन् । ८१ । इन्द्रस्य वै यत्र । ८२ । एतस्माद्वै यज्ञात्पुरुषो जायते । ८३ । ब्रह्मौदनं पचति । ८४ । प्रजापतिर्देवेभ्यो यज्ञा-न्व्यादिशत । ८५ । प्रजापते रक्ष्यस्व यत । ८६ । प्रजापतिरकामयत । ८७ । अथ प्रातर्गोतमस्य । ८८ । पुरुषो ह नारायणो कामयत । ८९ । ब्रह्मवै स्वयम्भु तपोतप्यत । ९० । अथास्मै श्मशानं कुर्वन्ति द्यौः शान्तिः । ९१ । देवा हवै सत्रं निषेदुः । ९२ । अथातो रौहिणौ जुहोति । ९३ । सवै तृतीये हन् । ९४ । द्वया ह प्राजापत्याः । ९५ । दृप्तबालाकिर्हानूचानो गार्ग्यऽआ-स । ९६ । जनको ह वैदेहः । ९७ । जनकᳫँ ह वैदेहं याज्ञवल्क्यो जगाम । ९८ । पूर्णमदः पूर्णमिदम् । ९९ । श्वेत-केतुर्हवाऽआरुणेयः । १०० । प्राश्नीपुत्रादासुरिवासिनः ॥ चतुर्दशकाण्डेष्वध्यायोक्ता ऋषयस्तृप्यन्ताम् ॥ अथ 'शतस्था-नानि'—ॐ इषे त्वा । १ । परिते । २ । अग्नेनय । ३ ।

उपयामगृहीतोसि सुशर्म्मासि । ४ । (प्रथमा) सोमस्य त्विषिः । ५ । परस्याऽअधि । ६ । अन्यावं÷ । ७ । राज्ञसि । ८ । नमो हिरण्यबाहवे । ९ । इन्द्रेमम् । १० । इमौ तें । ११ । अन्नात्परिस्रुतं÷ । १२ । अश्विना तेजसा । १३ । पृथिव्यै स्वाहा । १४ । प्रजापतये च । १५ । तेऽअस्य । १६ । तनूनपात्पथऽ । १७ । अयमिह । १८ । अनुं नऽ । १९ । इयत्यग्रे । २० । ( शेषं पञ्चसप्ततिः )॥ हिरण्मयेन पात्रेण० । ॐखम्ब्रह्म । शतोक्ता ऋषयस्तृप्यन्ताम् ॥ व्रतमुपैष्यन् । १ । तद्यदेवं पिनष्टि । २ । अथाज्यलिप्ताभ्यां पवित्राभ्याम् । ३ । बृहच्छोचाय विष्टेति । ४ । वसूनांऽरातौ स्याम । ५ । अग्निर्वै देवानामद्धातमाम् । ६ । तद्यथा श्रोनौ रेतऽ सिञ्चेत् । ७ । तां वै प्राश्नन्त्येव । ८ । अथ वेदपत्नी विस्रऽ स्यति । ९ । अयं वै यज्ञो योऽयं पवते । १० । अथ यदस्तमेति । ११ । रेवतीरमध्वमिति । १२ । सवाऽआग्नेयोष्टाकपालऽ पुरोडाशो भवति । १३ । तद्वै सोमेनेजानाऽ । १४ ॥ अथोत्तरेण शालां परिश्रयन्ति । १५ । अथो लिखति । १६ । सा या बभ्रुऽ पिङ्गाक्षी सा सोमक्रयणी स्यात् । १७ । प्रथमं ते देवाऽ । १८ । इन्द्रघोषऽ प्रोक्षणीरध्वर्युरादत्ते । १९ । सा हा कद्रूरुवाच । २० । तद्याऽ एतऽ उच्छ्रिता देवा हवै यज्ञन्तन्वानाऽ । २१ । अथ पार्श्वेन वासिना वा प्रयौति । २२ । सजुहोति मृणोत्वाग्निऽ समिधा हुवंम ऽइति । २३ । इय८ हवाऽउपाऽशुऽ । २४ । तस्यासावेव ध्रुवऽआयुऽ । २५ । यत्र द्यावापृथिव्य८ शस्यते । २६ । सऽ आज्यस्योपस्तीर्य द्विरो-

रवद्यति । २७ । इन्द्रो ह वै षोडशी । २८ । तासां
द्वादश गर्भाऽ । २९ । तद्धे हस्म पुरा वाजपेयेन
यजते । ३० । अथ दिशोनुवीक्षमाणो जपति । ३१ ।
सवै दीक्षते । ३२ । अथै तमभिषेकुम्म कृष्ण विषाणया
नु विसृष्टे । ३३ । षडेवोत्तरे चरवऽ । ३४ । अथोऽआहुऽ
। ३५ । अमावास्यायां दीक्षते । ३६ । अश्वस्य पदे
जुहोति । ३७ । अथैनां धूपयति । ३८ । तमुपरिनाभि
विभर्ति । ३९ । अथोषान्निवपति । ४० । चतस्रः
सीता यजुषा कृषति । ४१ । तं प्रत्यञ्चयन्तम् । ४२ ।
अपाङ्कुम्भत्सीदेति । ४३ । तस्य मनो वैश्वकर्मणमिति
। ४४ । तद्यैवा मध्यमा स्वयमातृणा । ४५ । एका-
दशभिरस्तुवतेति । ४६ । तावाऽ एताः विराडेवा
। ४७ । अथ-स्वयमातृणामुपदधाति । ४८ । अथोत्त-
रार्धेन प्राक् । ४९ । स यः स वैश्वानरः । ५० ।
यास्तेऽअग्ने सूर्य्ये रुचऽ । ५१ । नाम कृत्वाथैनमुपति-
ष्ठते । ५२ । या वाऽ इयं वेदिऽ सप्तविधस्य । ५३ ।
अयमेवाकाशो जूः । ५४ । सोयमात्मा त्रेधा विहितऽ
एव । ५५ । अथ वऽशऽ । ५६ । अथ यामेतामाहुतिं
जुहोति । ५७ । अथ यदनुवाक्यामनूच्य । ५८ । ब्रह्म-
चार्य्यसीत्याह । ५९ । स यत्पशुबन्धेन यजते । ६० ।
दशेति होवाच । ६१ । अथ यत्र स्कन्नꣳ स्यात्
। ६२ । अथ यदि प्रप्लुतऽ । ६३ । सर्वेऽअश्विना
भवन्ति । ६४ । प्रजापतिर्यज्ञमसृजत । ६५ । किम्वाऽ
वपनं महदिति । ६६ । अथ योस्य निष्कऽ प्रतिमुक्तो

भवति। ६७। एतेनहेन्द्रो तो दैवापः शौनकः। ६८।
चतस्रः सीता यजुषा कृषति। ६९। अथोत्तरतः सि-
कताऽउपकीर्णा भवन्ति। ७०। अथ रौहिणौ जुहोति
। ७१। ते देवाऽ अब्रुवन्। ७२। तानि यदा गृह्णाति
। ७३। सोऽग्नौ तिष्ठन्। ७४। कतमऽ आत्मेति। ७५।
अथ हैनं मनुष्याऽऊचुः। ७६। अथ यामिच्छेद्गर्भं-
न्दधीतेति। ७७। सप्तसहस्रषट्शतशेषं चतुर्विंशतिः
। ७८। प्राश्नीपुत्रादासुरिवासिनः। ७९॥ चतुर्दशकाण्डे
शतोक्ता ऋषयस्तृप्यन्ताम्॥ अथ 'प्रपाठकाः'—व्रतमुपैष्यन्। १।
चतुर्धा विहितो हवाऽअग्रेग्निरास। २। तेवाऽआर्द्राऽस्युः
। ३। स स्रुचोत्तरमाधारमाधारयिष्यन्। ४। यज्ञेन वै
देवाः। ५। यज्ञेन वै देवा दिवमपोदक्रामन्। ६। स वै
स्रुचो व्यूहति। ७। स यद्वाऽ इतश्चेतश्च सम्भरति
। ८। वरुणो हैनद्राज्यकामऽआदधे। ९। यत्र वै प्र-
जापतिः प्रजाः ससृजे। १०। प्रजापतिर्हवाऽएतेनाग्रे
यज्ञेनेजे। ११। महाहविषा हवै देवा वृत्रं जघ्नुः। १२।
देवयजनं योषयन्ते। १३। वाचं यच्छति। १४। नीडे
कृष्णाजिनमास्तृणाति। १५। तद्यऽएष पूर्वोर्ध्यो वृषि-
ष्ठस्थूणाराजो भवति। १६। विजामानो हैवास्य
धिष्ण्याः। १७। पाशं कृत्वा प्रतिमुञ्चति। १८। सो-
तद्यूप यजति। १९। प्राणो हवा अस्यो पांशुः। २०।
आत्मा हवाऽअस्याग्रयणः। २१। घ्नन्ति वाऽएतद्य-
ज्ञम्। २२। स वाऽ अवभृथमभ्युवैति। २३। तद्य
त्रै तद्द्वादशाहेन व्यूढश्छन्दसा यजते। २४। देवाश्च

वाऽअसुराश्च । २५ । बार्हस्पत्येन चरुणा प्रचरति ।२६।
स वाऽअपऽं सम्भरति । २७ । मैत्रावरुण्यापयस्यया
प्रचरति । २८ । असद्वा ऽइदमग्रऽआसीत् । २९ ।
प्राजापत्यञ्चरन्तौ ऽ आलम्भन्ते । ३० । प्रदीप्ताऽ एते-
त्रयो भवन्ति । ३१ । तस्याऽएतस्याऽआषाढां पूर्वां क-
रोति । ३२ । रुक्मं प्रतिमुच्य बिभर्ति । ३३ । गार्ह-
पत्यञ्चेष्यन् पलाशशाखया व्युदूहति । ३४ । अथ दर्भ-
स्तम्भमुपदधाति । ३५ । आत्मन्नग्निं गृह्णीतेचेष्यन् । ३६ ।
कूर्ममुपदधाति । ३७ । प्राणभृतऽउपदधाति । ३८ ।
अथ त्रिस्वृज्योतिषमुपदधाति । ३९ । अथातोन्वावृतम
। ४० । गार्हपत्यमुपदधाति । ४१ । अथातः शतरु-
द्रियं जुहोति । ४२ । प्रत्येत्यग्निं प्रहरिष्यन् । ४३ । अ-
थैतान्यज्ञक्रतूञ्जुहोति । ४४ । अथ प्रातऽं प्रातरनुवा-
कमुपाकरिष्यन् । ४५ । अग्निरेष पुरस्ताच्चीयते । ४६ ।
अथातश्चयनस्यैव । ४७ । संवत्सरो वै प्रजापतिरग्निऽं
। ४८ । नेव वा ऽइदमग्रे सदासीन्नेव सदासीत् । ४९ ।
संवत्सरो वै यज्ञऽं प्रजापतिऽं । ५० । अपि हवाऽ ए-
तर्हि । ५१ । प्रजापतिर्वै प्रजाऽं सृजमानो तप्यत । ५२ ।
अथातऽ स्वाध्यायप्रशꣳसा । ५३ । अयं वै यज्ञो योयं
पवते । ५४ । पुरुषꣳ ह नारायणं प्रजापतिरुवाच । ५५ ।
सोमो वै राजा यज्ञऽं प्रजापतिऽं । ५६ । प्रजापति-
र्यज्ञमसृजत । ५७ । ब्रह्मौदनं पचति । ५८ । नियुक्तेषु
पशुषु । ५९ । प्रमुच्याश्वं दक्षिणेन वेदिम् । ६० । पु-
रुषो ह नारायणो कामयत । ६१ । देवा हवै सत्रन्नि-
षेदुऽं । ६२ । स यत्रैताꣳहोतान्वाह । ६३ । इया ह ।

प्राजापत्याऽ । ६४ । दृप्तबालाकिर्हानूचानो गार्ग्यऽ आस । ६५ । अथ हैनं भुज्युर्लाह्यायनिः पप्रच्छ । ६६ । जनकु ह वैदेहं याज्ञवल्क्यो जगाम । ६७ । भूमिरन्तरिक्षं द्यौरिति । ६८ । प्राश्नीपुत्रादासुरिवासिनः०। ६९ ॥ इति चतुर्दशकाण्डे प्रपाठोक्ता ऋषयस्तृप्यन्ताम्। इति प्रपाठकाः ॥ अथ व्रतं विसृजते स यस्मिन्हुत्तावमुँल्लोकमेत्यथ निग्राम्याख्यो ग्रहान्विगृह्णतेथ गृहपतिः सुब्रह्मण्यामाह्वयति ता वाऽएतास्तानि दश भवन्ति ता ऽएताऽ अङ्गुलयो मध्यमेव तृतीयां चितिः सहोवाचाथर्वशस्तस्माऽ उहैतदुवाच स वाऽ एष ऽआत्मैव यत्सौत्रामणी मर्यादाया ऽएव लोष्टमाहृत्य प्राश्नीपुत्रादासुरिवासिनः० । १ ॥ अन्त्यकाण्डकोक्ता ऋषयस्तृप्यन्ताम् । एवं व्रतं विसृजेत परमाङ्गतिङ्गच्छतीति तस्माद्धोतृचमसात् तस्मिन् समुपहवमिष्ट्वा समिधोभ्यादधति द्वादश वा त्रयोदश वा दक्षिणा भवन्ति या वानग्निर्यावत्यस्य समात्रातावत्तद्भवति तस्मात्समान् सम्बन्धनास्तस्मादिमे प्राणऽउपरिष्टादसञ्छन्नाः संवादेनैवर्त्विजो लोका ऽइति ब्रह्मणो ब्रह्मस्वयम्भु ब्रह्मणे नमः कैशिनीरेवेमाऽ आप्येतर्हि प्रजा जायन्ते तस्मादिमावात्मानमभितो बाहू तस्मादुहैतज्जीवाश्च पितरश्च न संदृश्यन्ते व्वाजसनेयेन याज्ञवल्क्येनाख्यायन्ते । २ ॥ चतुर्दशकाण्डे अन्त्यफङ्किकोक्ता ऋषयस्तृप्यन्ताम् ॥ 'नमस्कारः'—ततः तदेतदृचाभ्युक्तं नमृषा श्रान्तं यदुवन्ति देवा ऽइति नहैवैवं विदुषः किञ्चनमृषा श्रान्तं भवति तथो हास्यै तत्सर्वं देवाऽअवन्ति । १ । इति नमस्कारः । 'विसर्जनम्'—ॐ उत्तिष्ठ ब्रह्मण-

स्प्पते देवयन्तस्त्वे महे। उपप्रयन्तु मरुतः सुदानवऽइन्द्र प्राशूर्भवा सचा १। ५६/३४ स्वस्वप्रवरान्विसर्जयेत् ॥ 'जले मास्यन्'— ॐ समुद्रङ्गच्छ स्वाहान्तरिक्षङ्गच्छ स्वाहा देवᳬं सवितारङ्गच्छ स्वाहा मित्रावरुणौ गच्छ स्वाहाहोरात्रे गच्छ स्वाहा छन्दाᳬंसि गच्छ स्वाहा द्यावापृथिवी गच्छ स्वाहा यज्ञङ्गच्छ स्वाहा सोमङ्गच्छ स्वाहा दिव्यन्नभो गच्छ स्वाहाग्निं वैश्वानरङ्गच्छ स्वाहा मनो मे हार्दि यच्छ दिवन्ते धूमो गच्छतु स्वर्ज्योतिः पृथिवीम्भस्मना पृण स्वाहा । २ २१/६ ततो द्विराचमनं कुर्युः ॥ आचार्यादि ब्राह्मणपूजनं कृत्वा ॥ 'अर्पणम्'—अनेनाध्यायोत्सर्गकर्माङ्गत्वेन कृतेन ऋषिपूजनतर्पणादिकर्मणा श्रीभगवान्परमेश्वरः प्रीयतां न मम । ॐ तत्सद्ब्रह्मार्पणमस्तु ॥ इति श्रावणीप्रयोगः ॥

५२७. 'अथ ऋषिश्राद्धम्'—कृतप्राणायामो देशकालौ सङ्कीर्त्य ॥ 'सङ्कल्पः'—उत्सर्गाङ्गभूतमृषिश्राद्धमहं करिष्ये ॥ ॐ इदं विष्णुर्वि० ॥ १ १५/५ ॥ इति मन्त्रेण दिग्बन्धः । ऋषिश्राद्धस्योपहाराः शुचयो भवन्तु ॥ इत्युपहारप्रोक्षणम् । देशकालपात्रसम्पदस्तु ॥ अरुन्धतीसहितकश्यपादिस्वऋषीणामिदमासनम् यथा यथा विभागं वः स्वाहा । अरुन्धतीसहितकश्यपादिस्वऋषयः यथादत्तं गन्धाद्यर्चनं यथा यथा विभागं वः स्वाहा । इति गन्धादिदानम् । ऋषिश्राद्धसाङ्गतासिद्ध्यर्थं सप्तसङ्ख्याकान् ब्राह्मणान् यथाकालं यथासम्पन्नान्नेन तर्पयिष्ये तेन अरुन्धतीसहितकश्यपादिस्वऋषयः प्रीयन्ताम् । ऋषिश्राद्धसाङ्गतासिद्ध्यर्थं हिरण्यनिष्क्रयभूतां दक्षिणां आचार्याय तुभ्यमहं सम्प्रददे । आचार्यः ॐ को दात्कस्मा ऽअदात्कामो दात्कामायादात् । कामो दाता कामः प्रतिग्रहीता कामैतत्ते । २ ४८/७ ॥ इति मन्त्रं पठेत् । उपविष्टेषु

(१) तेभ्यो दक्षिणां दत्वा ब्राह्मणाशिषो गृह्णीयात् । कृतस्योत्सर्गोपाकर्मकर्मणः साङ्गतासिद्ध्यर्थं यथावकाशेन यथाशक्ति ब्राह्मणान् भोजयिष्ये इति सङ्कल्प्य ॥

ब्राह्मणेषूदकादिदानम् ॥ 'तद्यथा'—ॐ शिवा आपः सन्तु । सौमनस्यमस्तु । अक्षतं चारिष्टं चास्तु । अघोरा ऋषयः सन्तु । सर्वत्र सन्त्विति विप्राः प्रतिवचनं दद्युः । उत्सर्गकर्मणो न्यूनातिरिक्तदोषपरिहारार्थं नानानामगोत्रेभ्यो ब्राह्मणेभ्यो भूयसीं दक्षिणां सम्प्रददे ॥ 'प्रार्थना'—उत्सर्गाङ्गभूतं ऋषिश्राद्धं परिपूर्णमस्तु ॥ अस्तु परिपूर्णमिति आचार्यादयः प्रतिवचनं दद्युः । ततः सहनोस्तु सहनोवतु सहनऽइदं वीर्यवदस्तु ब्रह्म ऽइन्द्रस्तद्वेद येन यथा न विद्विषामह इति ॥ पश्चात्—उभाकवी० इति मन्त्रं पठेत् ॥ इति ऋषिश्राद्धम् ॥ इति श्रावणीपद्धतिः ॥

५२८. 'अध्यायोपाकर्म'. पारस्करगृह्यसूत्रे—अथातोऽध्यायोपाकर्मौषधीनां प्रादुर्भावे श्रवणेन श्रावण्यां पौर्णमास्याᳩ श्रावणस्य पञ्चम्याᳩ हस्तेन वाज्यभागाविष्ट्वाज्याहुतीर्जुहोति । पृथिव्या ऽअग्नयऽ इत्यृग्वेदेऽन्तरिक्षाय वायवऽ इति यजुर्वेदे दिवे सूर्यायेति सामवेदे दिग्भ्यश्चन्द्रमसऽ इत्यथर्ववेदे ब्रह्मणे छन्दोभ्यश्चेति सर्वत्र प्रजापतये देवेभ्यो ऋषिभ्यः श्रद्धायै मेधायै सदसस्पतयेऽनुमतयऽइति चैतदेव व्रतोद्देशेन विसर्गेषु सदसस्पतिमित्यक्षतधानाभिः सर्वेऽनुपठेयुर्हुत्वा हुत्वौदुम्बर्यस्तिस्रस्तिस्रः समिध ऽआदध्युरार्द्राः सपलाशा घृताक्ताः सावित्र्या ब्रह्मचारिणश्च पूर्वकल्पेन शन्नो भवत्वित्यक्षतधाना ऽअखादन्तः प्राश्नीयुर्दधिक्राव्णऽइति दधि भक्षेयुः स यावन्तं गणमिच्छेत्तावन्तस्तिलानाकर्षफलकेन जुहुयात्सावित्र्या शुक्रज्योतिरित्यनुवाकेन वा प्राशनान्ते प्रत्यङ्मुखेभ्य ऽउपविष्टेभ्य ॐकारमुक्त्वा त्रिश्च सावित्रीमध्यायादीन्प्रब्रूयादृषिमुखानि बह्वृचानां पर्वाणि छन्दोगानाᳩ सूक्ताभ्याथर्वणानाᳩ सर्वे जपन्ति सह नोस्तु सह नो वतु सह न ऽइदं वीर्यवदस्तु ब्रह्म ऽइन्द्रस्तद्वेद येन यथा न विद्विषामहऽइति त्रिरात्रं नाधीयीरँल्लोमनखानामनिकृन्तनमेके प्रागुत्सर्गात् ॥ १२ ॥

५२९. 'अथोपाकर्मप्रयोगः'—[गुरुः हस्तौ पादौ प्रक्षाल्य द्विराच-

१ इदं ऋषिश्राद्धं कृताकृतमस्ति ॥

ग्न्यावसथ्याग्नेर्लौकिकाग्नेर्वा पश्चाच्छिष्यैः सह प्राङ्मुख उपविश्य प्राणायामत्रयं कृत्वा देशकालौ सङ्कीर्त्य श्रीपरमेश्वरप्रीत्यर्थं अध्यायोपाकर्मणि पञ्चभूसंस्कारपूर्वकमग्निस्थापनमहं करिष्य इति सङ्कल्प्य पञ्चभूसंस्कारान्कुर्यात्। (ते च—१—दर्भैः परिसमुह्य। २—गोमयोदकेनोपलिप्य।३—स्रुवेणोल्लिख्य। ४—अनामिकाङ्गुष्ठाभ्यामुद्धृत्य।५—उदकेनाभ्युक्ष्य॥ ततः अग्निं प्रतिष्ठाप्य पात्रस्थापनादि कुर्यात्। तत्र पूर्वेण ब्रह्मणो गमनम्। अग्नेरुत्तरतः पात्रासादनम्। द्वे पवित्रे ताम्रमयी आज्यस्थाली। पालाश्यः समिधः। प्राञ्चावाघारौ। समिद्धतमे आज्यभागौ। तिलहोमः सावित्रीमन्त्रेण। पूर्णपात्रं दक्षिणा। त्रिरात्रं लोमनखानामनिकृन्तनम्)॥] 'ऋषिच्छन्ददेवतास्मरणम्'—इषेत्वेत्यादिकस्य खम्ब्रह्मान्तस्य माध्यन्दिनीयस्य वाजसनेयकस्य यजुर्वेदाम्नायस्य विवस्वानृषिः। वायुर्देवता। गायत्र्यादीनि सर्वाणि छन्दांसि। अध्यायोपाकर्मणि विनियोगः— 'देवताभिध्यानम्'—तत्र— प्रजापतिम्। इन्द्रम्। अग्निम्। सोमम्। पृथिवीम्। अग्निम्। ब्रह्माणम्। छन्दाꣳसि। अन्तरिक्षम्। वायुम्। ब्रह्माणम्। छन्दाꣳसि। दिवम्। सूर्य्यम्। ब्रह्माणम्। छन्दाꣳसि। दिशः। चन्द्रमसम्। ब्रह्माणम्। छन्दाꣳसि। प्रजापतिम्। देवान्। ऋषीन्। श्रद्धाम्। मेधाम्। सदसस्पतिम्। अनुमतिम्॥ एताः प्रधानदेवता आज्येन। सदसस्पतिम् धानाभिः। सवितारं तिलैः। अग्निं स्विष्टकृतं धानाशेषेण। अग्निम्। वायुम्। सूर्य्यम्। अग्नीवरुणौ। अग्नीवरुणौ। अग्निम्। वरुणम्। सवितारम्। विष्णुम्। विश्वान्देवान्। मरुतः। स्वर्कान्। वरुणम्। प्रजापतिम्। एता अङ्गप्रधानार्था देवता अस्मिन्कर्मण्यहं यक्ष्ये॥ [ब्रह्मवरणम् (दक्षिणतो ब्रह्मासनमास्तीर्य। अमुकशर्मन् अस्मिन्कर्मणि त्वं 'ब्रह्मा' भव। भवामीति प्रतिवचनम्। ब्रह्मा तूष्णीं आसनावलोकनं आसनात्तृणनिरसनञ्च कृत्वा उपविशेत्। अग्नेरुत्तरतः प्रणीतार्थमासनद्वयं निधाय। प्रणीताचमसं वामहस्ते कृत्वा आत्माभिमुखं जलेनापूर्य प्रथमासने निधाय चमसदण्डमालभ्य ब्रह्माणमवलोक्य तेन सङ्केतादिनाऽनुज्ञातः प्रणीयोत्तरासने निदध्यात्। तत उदगग्रैः प्रागग्रैः कुशैरग्निं परिस्तीर्य। अर्थवदासाद्य। अग्नेरुत्तरतः प्राक्संस्थमु-

द्वक्संस्थं वा पात्रासादनम् । पवित्रच्छेदनार्थं दर्भास्त्रयः । पवित्रे द्वे । प्रोक्षणीपात्रम् । आज्यस्थाली । सम्मार्जनकुशास्त्रिप्रभृतयः । उपयमनकुशाः सप्तप्रभृतयः । समिधस्त्रिप्रभृतयः । स्रुवः । आज्यम् । धानाः । पूर्णपात्रं च ॥ 'अथोपकल्पनीयानि'—प्रतिशिष्यं नव नव समिध आर्द्राः सपत्रा औदुम्बरस्य । दधि भक्षणार्थं । लौकिका धानाः बाहुमात्रमौदुम्बरकाष्ठं तिलस्थापनस्थाने सर्पफणाकारमकार्षफलकम् । तिलाश्चेति । पवित्रकरणम् । द्वयोरुपरि त्रीणि निधाय द्विमूलेन द्वौ कुशौ प्रदक्षिणीकृत्य सर्वान्युगपद्धृत्वानामिकाङ्गुष्ठाभ्यां छित्वा तानुत्तरतः प्रक्षिपेत् । प्रोक्षणीपात्रं प्रणीतोत्तरतो निधाय । प्रोक्षणीपात्रे पात्रान्तरेण प्रणीताद्भिस्तासां प्रोक्षणम् । सपवित्रहस्तेनोत्तानेन पात्रप्रोक्षणम् । आज्यस्थाल्याः प्रोक्षणम् । संमार्गकुशानां प्रोक्षणम् । उपयमनकुशानां प्रोक्षणम् । समिधां प्रोक्षणम् । स्रुवस्य प्रोक्षणम् । आज्यस्य प्रोक्षणम् । धानानां प्रोक्षणम् । पूर्णपात्रस्य प्रोक्षणम् । प्रणीताग्न्योर्मध्येसञ्चरे प्रोक्षणीं निधाय । कुशोपग्रहेण आज्यस्थाल्यामाज्यनिर्वापः । आज्याधिश्रयणम् । ततो ज्वलदुल्मुकेन पर्यग्निकरणम् । इतरथावृत्तिः । अर्धश्रिते स्रुवं प्रतप्य । संमार्गकुशैः संमृज्य । अग्रैर्मूलादारभ्याग्रपर्यन्तं मूलैरग्रादारभ्य मूलपर्यन्तं प्रणीतोदकेनाभ्युक्ष्य । पुनः प्रतप्य । दक्षिणतो निदध्यात् । आज्यमुद्वास्य । उत्तरतो निधाय । ततोऽग्नेः पश्चिमतो निदध्यात् । पवित्राभ्यामाज्यमुत्पूय । प्रोक्षणीश्च पूर्ववदुत्पूय । आज्यमवेक्ष्य । अपद्रव्यनिरसनम् । उपयमनकुशानादाय । तिष्ठन् । समिधोऽभ्याधाय । प्रोक्षण्युदकशेषेण सपवित्रेण हस्तेनेशानमारभ्येशानपर्यन्तं प्रदक्षिणमग्निं पर्युक्ष्य । इतरथावृत्तिः । पवित्रयोः प्रणीतासु निधानम् । सोपग्रहं सव्यहस्तमुत्तानं हृदि निधाय दक्षिणजानुनिपातः ब्रह्मणोन्वारम्भः । दक्षिणहस्तेन स्रुवेण होमः ।] मनसा—ॐ प्रजापतये स्वाहा इदं प्रजापतये न मम ॥ ( त्यागान्ते द्रव्यप्रक्षेपः । प्रोक्षणीपात्रे संस्रवधारणम् ) । ॐ इंद्राय स्वाहा । इदं इन्द्राय न मम ॥ ॐ अग्नये स्वाहा इदमग्नये न मम ॥ ॐ सोमाय स्वाहा इदं सोमाय न मम ॥ १ 'ऋग्वेदे' — 'सप्तविंशत्याहु-

१ औदुम्बरस्य या शाखा फलकद्वयसंयुता । आकर्षफलकं नाम याज्ञिकैः ...म् ॥ ( २ ) एताः सप्तविंशत्याहुतयः आज्येन ॥ ततः प्रोक्षितधानाभिघा... स्रुवेण धाना अवदाय । सदसस्पतिमद्भुतमित्यनेन मन्त्रेण जुहुयात् ॥

तयः'— ॐ पृथिव्यै स्वाहा इदं पृथिव्यै न मम । ॐ अग्नये स्वाहा इदमग्नये न मम । ॐ ब्रह्मणे स्वाहा इदं ब्रह्मणे न मम । छन्दोभ्यः स्वाहा इदं छन्दोभ्यो न मम ॥ २ 'यजुर्वेदे'— ॐ अन्तरिक्षाय स्वाहा इदमन्तरिक्षाय न मम । ॐ वायवे स्वाहा इदं वायवे न मम । ॐ ब्रह्मणे स्वाहा इदं ब्रह्मणे न मम । ॐ छन्दोभ्यः स्वाहा इदं छन्दोभ्यो न मम ॥ ३ 'सामवेदे'—ॐ दिवे स्वाहा इदं दिवे न मम । ॐ सूर्य्याय स्वाहा इदं सूर्य्याय न मम । ॐ ब्रह्मणे स्वाहा इदं ब्रह्मणे न मम । ॐ छन्दोभ्यः स्वाहा इदं छन्दोभ्यो न मम ॥ ४ 'अथर्वणवेदे'—ॐ दिग्भ्यः स्वाहा इदं दिग्भ्यो न मम । ॐ चन्द्रमसे स्वाहा इदं चन्द्रमसे न मम । ॐ ब्रह्मणे स्वाहा इदं ब्रह्मणे न मम । ॐ छन्दोभ्यः स्वाहा इदं छन्दोभ्यो न मम । ॐ प्रजापतये स्वाहा इदं प्रजापतये न मम । ॐ देवेभ्यः स्वाहा इदं देवेभ्यो न मम । ॐ ऋषिभ्यः स्वाहा इदं ऋषिभ्यो न मम । ॐ श्रद्धायै स्वाहा इदं श्रद्धायै न मम । ॐ मेधायै स्वाहा इदं मेधायै न मम । ॐ सदसस्पतये स्वाहा इदं सदसस्पतये न मम । ॐ अनुमतये स्वाहा इदं अनुमतये न मम । **ॐ सदसस्पतिमद्भुतम्प्रियमिन्द्रस्य काम्म्यम् । सनिम्मेधामयासिषᳬ स्वाहा । १ $\frac{१३}{३२}$ ॥** इदं सदसस्पतये न मम । ( इमं मन्त्रं गुरुणा पठ्यमानं शिष्या अपि सहानुपठेयुः । तत उदुम्बरसमिन्त्रितयमभिघार्य हस्ते गृहीत्वा उत्थाय प्राङ्मुखास्तिष्ठन्तः ) ॥ **ॐ तत्त्सवितुर्वरेण्य०** । २ $\frac{२}{३०}$ ॥ स्वाहा इदमग्नये न मम ॥ ( इत्युच्चार्य एकां समिधमादध्युः । एवं मन्त्रेण द्वितीयां तथा तृतीयाम् । ततः सर्व उपविशेयुः । आचार्यः पुनः । स्रुवेण धाना अवदाय । ) ॥ द्वितीयां धानाहुतिं पूर्ववत्— **ॐ तत्त्सवितु०** । ३ $\frac{२}{३०}$ ॥ स्वाहा इदमग्नये न मम ॥ ततस्त्रोऽपराः समिधो घृतेनाभ्यज्य । उत्थाय प्राङ्मुखास्तिष्ठन्तः— **ॐ तत्त्सवितु०** । ४ $\frac{२}{३०}$ ॥ स्वाहा इदमग्नये न मम ॥ ( इत्युच्चार्य एकां समिधमादध्युः । ) पुनः **ॐ तत्त्सवितु०** । षडो

स्वाहा इदमग्नये न मम। एवं द्वितीया। पुनः ॐ तत्सवितु०। ६ $\frac{२}{३०}$ ॥ स्वाहा इदमग्नये न मम ॥ एवं तृतीयां हुत्वाचार्यो धानाहुतिं जुहुयात् ॐ सदसस्प०। ७ $\frac{१३}{३२}$ ॥ स्वाहा इदं सदसस्पतये न मम ॥ मन्त्रानुपठनं (शिष्याणामपि—समित्त्रयं पूर्ववज्जुहुयात्)—ॐ तत्सवितु०। ८ $\frac{२}{३०}$ ॥ स्वाहा इदमग्नये न मम। एवं द्वितीयां तथा तृतीयां। ब्रह्मचारी तु। शिष्योऽहरहरग्निकार्यक्रमेण समिदाधानं कुर्यात्। न सावित्र्या अन्यत्सर्वं समानम् ॥) 'धानाभक्षणम्'— (ततो या उपकल्पिता धानास्तिस्रस्तिस्रो गृहीत्वा)—ॐ शन्नो भवन्तु वाजिनो हवेषु देवताता मितद्रवः स्वर्काः। जम्भयन्तो हिं वृक रक्षांसि स नेम्म्युस्मद्युयवन्नमीवाः। ९ $\frac{१६}{९}$ ॥ (इति मन्त्रेण दन्तैरखादन्तः प्राश्नीयुः ॥ ततो—द्विराचमनम् ॥) "दधिभक्षणम्"— ॐ दधिक्राव्णोऽअकारिषञ्जिष्णोरश्वस्य वाजिनः। सुरभिनो मुखाकरत्प्रणऽआयूंषि तारिषत्। १० $\frac{३२}{२३}$ ॥ (इति मन्त्रेण दधि भक्षेयुः) ॥ द्विराचमनम् ॥ (तत आचार्यो यावन्तं शिष्यगणं आत्मन इच्छेत्तावतस्तिलान् गणयित्वा आकर्षफलकेनावदाय)—ॐ शुक्रज्योतिश्च। चित्रज्योतिश्च सत्यज्योतिश्च ज्योतिष्मांश्च। शुक्रश्च ऽऋतपाश्चात्यंहाः। ११ $\frac{८०}{१७}$ ॥ इत्यानुवाकेन सावित्र्या वा जुहुयात् ॐ तत्सवितु०। १२ $\frac{२}{३०}$ ॥ स्वाहा इदं सवित्रे न मम ॥ (संस्रवप्रक्षेपः। ततो धानाभ्यः स्विष्टकृत्)— ॐ अग्नये स्विष्टकृते स्वाहा इदमग्नये स्विष्टकृते न मम ॥ [प्रा]याश्चित्ताद्या नवाहुतयः'—(आज्येन जुहुयात्। सर्वत्र त्यागान्ते द्रव्य[त्यागः]। ) 'तद्यथा'— १ ॐ भूःस्वाहा इदमग्नये न मम ॥ २ ॐ [भुवः] स्वाहा इदं वायवे न मम ॥ ३ ॐ स्वः स्वाहा इदं सूर्याय [न म]म। ४। ॐ त्वन्नो ऽअग्ने वरुणस्य विद्वान् देवस्य [हे]डोऽअवयासिसीष्ठाः। यजिष्ठो वह्नितमः शोशुचा-

न्नो विश्श्वाद्वेषाᳬंसि प्प्रमुमुग्ग्ध्यस्स्मत् स्वाहा। १३ $\frac{३}{२१}$॥
इदमग्नीवरुणाभ्यां न मम। ५। सत्त्वन्नो ऽअग्ग्ने वुमो भवो-
ती नेदिष्ठोऽअस्या ऽउषसो व्युष्टौ। अवयक्ष्वनो व्वरुणᳬ
रराणो व्वीहि मृडीकᳬसुहवो न ऽएधि स्वाहा।१४ $\frac{४}{२१}$॥
इदमग्नीवरुणाभ्यां न मम। ६। अयाश्चाग्नेस्यनभिशस्तिपाश्च
सत्यमित्वमयाऽअसि। अयानो यज्ञं वहास्ययानो धेहि भेषजᳬ
स्वाहा। (सौत्रमन्त्रः)। इदमायाय न मम। (इदमग्नये अयसे
न मम इति केचित्)। ७। ये ते शतं वरुण ये सहस्रं यज्ञियाः
पाशा वितता महान्तः। तेभिर्नोऽअद्य सवितोतव्विष्णुर्व्विश्वे मु-
ञ्चन्तु मरुतः स्वर्काः स्वाहा। (सौत्रमन्त्रः)। इदं वरुणाय स-
वित्रे विष्णवे विश्वेभ्यो देवेभ्यो मरुद्भ्यः स्वर्केभ्यश्च न मम। ८॥
उदुत्तमं व्वरुणपाशमस्स्मदवाधमं व्विमध्यमᳬ श्र-
थाय। अथा व्वयमादित्यव्व्रते तवानागसो ऽअदितये
स्याम स्वाहा। १५ $\frac{१२}{१२}$॥ इदमादित्यायादितये न मम। ९।
(उपांशु)—ॐ प्रजापतये स्वाहा इदं प्रजापतये न मम॥ (संस्र-
वप्राशनम्)॥ आचमनम्। पवित्राभ्यां मार्जनम्। अग्नौ पवित्रप्रति-
पत्तिः)॥ 'ब्रह्मणे पूर्णपात्रदानम्'— 'तद्यथा'—ब्रह्मन् अस्यां
पाकर्मणोऽङ्गतया विहितं पूर्णपात्रं प्रतिगृह्यताम्। ॐ द्यौस्त्वा द-
दातु पृथिवी त्वा प्रतिगृह्णातु इति मन्त्रस्य ब्रह्मा जपं कुर्यात्।
(प्रणीताविमोकः। ततोऽग्निमुत्तरेण कुशेषु प्रत्यङ्मुखोपविष्टेभ्यः शिष्ये-
भ्यः प्राङ्मुख ऽआचार्यः ओङ्कारमुक्त्वा त्रिश्च सावित्रीमनुब्रूयात्)
यथा— ॐ तत्सवि० दयात्। $\frac{२}{३२}$। (इति त्रिः)। इषेत्वा
ईशावास्यान्तम्। व्रतमुपैष्यन्नित्यादि सर्वमन्त्रब्राह्मणयोरध्याया
प्रब्रूयात्। बह्वृचां ऋषिमुखानि। पर्वाणि छन्दोगानाम्। सूक्तान्
थर्वणानाम्। (एवं सर्वं पठित्वा गुरुः शिष्याश्च जपन्ति॥ ॐ
हनोस्तु सहनोवतु सहनऽइदं वीर्यवदस्तु ब्रह्म। इन्द्रस्तद्वेद
यथा न विद्विषामहे॥ (इति मन्त्रं जपित्वा त्रिरात्रमध्ययनं लोमनख

मनिकृन्तनमवपनं च करिष्यामहे ॥ इति सर्वेषां सङ्कल्पः ) ॥ प्रागुत्सर्गाद्वा नियमो लोमनखनिकृन्तनम् । उत्सर्गावधि लोमनखानामकृन्तनमहं करिष्ये इति । छन्दसामुत्सर्गात्प्राङ्मन्त्रब्राह्मणयोरध्ययनम् ॥ इत्युपाकर्मप्रयोगः ॥

५२९. अथ 'वाजसनेयब्राह्मणानां शान्तिसूक्तपाठः'—तत्रादौ हस्तौ पादौ प्रक्षाल्याचम्य प्राणानायम्य । 'सङ्कल्पः'—अद्य मम अमुकशर्मणो यजमानस्य प्रसूताया बालसहिताया अस्याः स्त्रिया आयुरारोग्यैश्वर्याभिवृद्धिद्वारा सकलारिष्टशान्त्यर्थं आराध्यदेवताप्रीत्यर्थं प्रजापतिदेवताप्रीत्यर्थं च शान्तिसूक्तपाठमहं करिष्ये ॥ (इति सङ्कल्प्य शान्तिसूक्तपाठं कुर्यात्)—तद्यथा—हरिः— ॐ रुक्षोहणं व्वलगुहनं व्वैष्णवीमिदमुहन्तं व्वलगमुत्किरामि यम्मे निष्ट्यो यममात्त्यो निचखानेदमुहन्तं व्वलगमुत्किरामि यम्मे समानो यमसमानो निचखानेदमुहन्तं व्वलगमुत्किरामि यम्मे सबन्धुर्य्यमसबन्धुर्न्निचखानेदमुहन्तं व्वलगमुत्किरामि यम्मे सजातो यमसजातो निचखानोत्कृत्त्याङ्किरामि । १ $\frac{२३}{५}$ ॥ रुक्षोहणो वो व्वलगुहनः प्प्रोक्षामि वैष्णवान्न्रक्षोहणो वो व्वलगुहनो वनयामि व्वैष्णवान्न्रक्षोहणो वो व्वलगुहनोवस्तृणामि व्वैष्णवान्न्रक्षोहणौ वां व्वलगुहनाऽउपदधामि व्वैष्णवी रक्षोहणौ वां व्वलगुहनौ पर्य्यूहामि व्वैष्णवी व्वैष्णवमसि व्वैष्णवास्त्थ ।२ $\frac{२५}{५}$॥रक्षसाम्भागोसि निरस्तꣳरक्षऽइदमुहꣳ

(१) स च अस्या बालसहितायाः प्रसूतिकाया आयुरारोग्यैश्वर्याभिवृद्धिद्वारा सर्वारिष्टशान्त्यर्थं नूतनदे[illegible]तिष्ठावास्तुकर्मानन्तरं वा दीपकाले यजमानेन ब्राह्मणद्वारा पाठयितव्यः । तत्र सूतिकाबालकयोः सर्वारिष्टशान्त्यर्थं प्रथमदिवसमारभ्य दशमदिनपर्यन्तं दीपकाले[illegible]पस्थापनोत्तरं शुचिर्भूतो ब्राह्मणः सूतिकायाः श्रवणपथगं पाठं पठित्वा तदभिमन्त्रितं [illegible] सूतिकाबालकयोर्धारणार्थं दद्यात् )। (२) अस्मिन्पाठे संक्षेपतो दर्शिता मन्त्रा रुद्राध्याये द्रष्टव्याः ॥

मू ।

रक्षोभितिष्ठामीदमुहꣳ रक्षो वबाधऽइदमुहꣳ रक्षोधमन्तमो नयामि। घृतेन द्यावापृथिवी प्प्रोर्णुवाथां व्वायोव्वेस्तोकानामग्निराज्ज्यस्य व्वेतु स्वाहा स्वाहाकृतेऽऊर्द्ध्वनभसम्मारुतङ्गच्छतम्। ३$\frac{१६}{६}$ ॥ रक्षोहा व्विश्वचर्षणिरभियोनि मयो हते। द्रोणे सधस्त्थमासदत्।४$\frac{२६}{२६}$ ॥ (अपसर्पन्तु ते भूता ये भूता भूमिसंस्थिताः। ये भूता विघ्नकर्त्तारस्ते नश्यन्तु शिवाज्ञया)॥ ॐ गणानान्त्वा०। ४$\frac{१५}{२३}$ ॥ श्रीश्चते लक्ष्मी०। ५$\frac{१९}{२३}$ ॥ आकृष्णेन रजसा०। ६$\frac{४२}{३३}$ ॥ इमन्देवाऽअसपत्नꣳसुवद्ध्वम्महते क्षत्राय महते ज्ज्यैष्ठ्याय महतेजानराज्ज्यायेन्द्रस्स्येन्द्रियाय। इममुमुष्ष्यपुत्रममुष्ष्यै पुत्रमस्यै व्विशऽएषवोमी राजा सोमोस्माकम्ब्राह्मणानाꣳ राजा। ७$\frac{४०}{९}$ ॥ अग्निर्मूर्द्धा। दिवः ककुत्पतिः पृथिव्या अयम्। अपाꣳ रेताꣳसि जिन्वति।*। ८$\frac{१४}{१३}$ ॥ उद्बुद्ध्यस्वाग्ने प्प्रति जागृहित्वमिष्टापूर्त्ते सꣳसृजेथामयञ्च। अस्मिन्त्सधस्त्थेऽअद्ध्युत्तरस्मिन्विश्वेदेवा यजमानश्च सीदत। ९$\frac{६१}{१८}$ ॥ बृहस्पतेऽअति यदर्य्योऽअर्हाद्द्युमद्विभाति क्क्रतुमज्जनेषु। यद्दीदयच्छवस ऽऋतप्प्रजा तदस्म्मासु द्रविणन्धेहि चित्रम्।* १०$\frac{३}{२६}$ ॥ अन्नात्परिस्रुतो रसम्ब्रह्मणा व्यपिबत्क्षत्रम्पयꣳसोमम्प्रजापतिः। ऋतेन सत्त्यमिन्द्रियं व्विपानꣳ शुक्क्रमन्धसऽ इन्द्रस्स्येन्द्रियमिदम्पयोमृतम्मधु। ११$\frac{७५}{१९}$ ॥ शन्नो देवीर०। १२$\frac{१२}{१६}$ ॥ कयान श्चित्र०। १३$\frac{४}{६६}$ ॥ केतुङ्कृण्वन्न केतवे पेशो मर्य्याऽअपेशसे। समुषद्भिरजायथाः। १४$\frac{३७}{२९}$ ॥ त्र्यम्बकं यजा

।१५$\frac{६१}{३}$॥ सुजोषाऽइन्द्र स गणो मुरुद्भिःसोमम्पिब
वृत्रहा शूर विद्वान् । जुहि शत्रू । १ँ ॥ रपमृधो नुद
स्वाथाभयङ्कृणुहि विश्वतो नः । १६$\frac{३७}{७}$॥ त्रातारमि-
न्द्रमवितारमिन्द्रछ हवे हवे सुहवछ शूरमिन्द्रम । ह्व-
यामि शक्रम्पुरुहूतमिन्द्रंछ स्वस्तिनो मघवा धात्विन्द्रः
।१७$\frac{५०}{२०}$॥ त्वनोऽअग्ने तव देव पायुभिर्म्मघोनो रक्ष
तन्न्वश्च वन्द्य । त्राता तोकस्य तनये गवामस्यनिमेषछ
रक्षमाणस्तव व्रते । १८$\frac{१३}{३४}$॥ यमायत्वाङ्गिरस्वते पितृ-
मते स्वाहा । स्वाहा घर्म्माय स्वाहा घर्मःपित्रे ।*।१९$\frac{६}{३८}$॥
असुन्न्वन्तमयजमानमिच्छस्तेनस्येत्त्यामन्विहितस्करस्य ।
अन्यमस्म्मदिच्छसा तऽइत्त्या नमो देवि निर्ऋते तुभ्य-
मस्तु । २०$\frac{६२}{१२}$॥ तत्त्वा । यामि ब्रह्मणा वन्दमानस्तदा-
शास्ते यजमानो हविर्भिः । अहेडमानो वरुणेहबोध्यु-
रुशछ समानऽ आयुः प्रमोषीः । २१$\frac{४९}{१८}$॥ आनो नि-
युद्भिःशतिनीभिरध्वरछसहस्रिणीभिरुप याहि यज्ञम ।
वायोऽअस्मिमन्त्सवने मादयस्व यूयम्पात स्वस्तिभिः
सदा नः । २२$\frac{२८}{२७}$॥ वयछ सोमव्र० २३$\frac{५६}{३}$॥ तमीशा-
नञ्जगतस्तस्थुषस्पतिन्धियञ्जिन्वमवसे हूमहे वयम ।
पूषानो यथा वेदसामसद्वृधे रक्षिता पायुरदब्धः स्वस्त-
ये । २४$\frac{१८}{२५}$॥ अस्मे रुद्रा मेहना पर्वतासो वृत्रहत्ये
भरहूतौ सजोषाः । यःशछसते स्तुवते धायि पज्रऽ
इन्द्रज्येष्ठाऽ अस्मा २ँ ॥ ऽअवन्तु देवाः । २५$\frac{५०}{३३}$॥
स्योना पृथिवि । नो भवानृक्षरा निवेशनी । यच्छानः
शर्म्म सप्रथाः । २६$\frac{१३}{३६}$॥ आनो भद्राः क्रतवो यन्तु
विश्वतोदब्धासोऽअपरीतास ऽउद्भिदः । देवानो यथा

सदुमिद्वृधेऽअसुन्नप्रायुवो रक्षितारो दिवे दिवे ।२७ $\frac{१५}{२५}$॥
देवानाम्भुद्रा । सुमुतिर्ऋजूयुतान्देवानांॐ रातिरुभिनो
निर्वर्त्तताम् । देवानांॐ सुक्ख्यमुपंसेदिमा व्युयन्देवा नुऽ
आयुंम्प्रतिरन्तु जीवसे । २८ $\frac{१५}{२५}$॥ तान्पूर्व्वया निविदा-
हूमहे व्युयम्भगम्मित्रमदितिन्दक्षमुस्त्रिधम् । अर्य्युमणं
व्वरुणुॅ सोमंमुश्विना सरंस्वती नंः सुभगामयस्करत् ।
२९ $\frac{१६}{२५}$ ॥ तन्नो व्वातो मयो भुव्वातु भेषजन्तन्माता पृ-
थिवी तत्पिताद्द्यौः । तद्ग्रावाणः सोमसुतो मयोभुव-
स्तदंश्विना शृणुतन्धिष्ण्या युवम् । ३० $\frac{१७}{२५}$ ॥ तमीशानु-
ञ्जगतस्त० । ३१ $\frac{१८}{२५}$ ॥ स्वस्तिनुऽइन्द्रो वृ० । ३२ $\frac{१९}{२५}$॥ पृ-
षंदश्वा मुरुतंः पृश्निमातरः शुभुं य्यावानो व्विदथेषु
जग्ग्मयः । अग्निजिह्वा मनंवुःसूरंचक्षसो व्विश्वेनो
देवाऽ अवुसागमन्निह । ३३ $\frac{२०}{२५}$ भुद्रङ्कर्णेभिः शृ० ॥
३४ $\frac{२१}{२५}$ ॥ शतमिन्नु शुरदोऽ अन्ति देवा यत्रा नश्चुक्रा
जुरसंन्तुनूनाम् । पुत्रासो यत्र पितरो भवंन्ति मानो
मुद्ध्यारीरिषुतायुर्ग्गन्तोः । ३५ $\frac{२२}{२५}$ ॥ अदिंतिद्द्यौरदिति-
रुन्तरिक्षमदितिर्म्माता स पिता स पुत्रः । व्विश्वेदेवाऽ
अदितिः पञ्चजनाऽ अदिंतिर्ज्जातमदितिर्जनित्वम् ।
३६ $\frac{२३}{२५}$ ॥ ऋचं वाचं । ३७ $\frac{१}{३६}$ ॥ यन्मे छि० । ३८ $\frac{२}{३६}$
कयानश्चित्र० । ३९ $\frac{४}{३६}$ ॥ कस्त्वासुत्यो० । ४० $\frac{५}{३६}$ ॥ अ-
भीषुण÷स० । ४१ $\frac{६}{३६}$ ॥ कया त्वन्नऽऊ० । ४२ $\frac{७}{३६}$
इन्द्रो व्विश्वस्य रा० । ४३ $\frac{८}{३६}$ ॥ शन्नो मित्रः शं०
४४ $\frac{९}{३६}$ ॥ शन्नो व्वात÷प० । ४५ $\frac{१०}{३६}$ ॥ अहानिश०
४६ $\frac{११}{३६}$ ॥ शन्नो देवीरुभि० । ४७ $\frac{१२}{३६}$ ॥ स्योना पृ०

। ४८ $\frac{१३}{३६}$ ॥ आपोहिष्ठा० ४९ $\frac{१४}{३६}$ ॥ योवः शिव० । ५० $\frac{१५}{३६}$ तस्म्माऽअरं० । ५१ $\frac{१६}{३६}$ ॥ द्यौः शान्तिरन्त० । ५२ $\frac{१७}{३६}$ ॥ दृते दृᳪ हमामित्र० । ५३ $\frac{१८}{३६}$ ॥ दृते दृᳪ हमाज्ज्यो० । ५४ $\frac{१९}{३६}$ ॥ नमस्ते हरसे०।५५ $\frac{२०}{३६}$ नमस्तेऽअस्तु० ।५६ $\frac{२१}{३६}$ ॥ यतो यतः समि० । ५७ $\frac{२२}{३६}$ ॥ सुमित्रिया नऽआ०।५८ $\frac{२३}{३६}$॥ तच्चक्षुर्द्देवहितं० । ५९ $\frac{२४}{३६}$ ॥ अभिधाऽअसि भुवनमसि यन्तासि धर्त्ता । सत्त्वमग्निं वैश्वानरᳪ स प्प्रथसङ्गछ-स्वाहा कृतः । ६० $\frac{३}{२२}$ ॥ स्वगा त्वा देवेब्भ्यः प्प्रजाप-तये ब्रह्मन्नश्वम्भन्त्स्यामि देवेब्भ्यः प्प्रजापतये तेन रा-द्ध्यासम् । तम्बधान देवेब्भ्यः प्प्रजापतये तेन राद्ध्नुहि ६१ $\frac{४}{२२}$ ॥ प्रजापतये त्त्वा जुष्टम्प्रोक्षामीन्द्राग्निब्भ्यान्त्वा जुष्टम्प्रोक्षामि व्वायवे त्वा जुष्टम्प्रोक्षामि व्विश्वेब्भ्यस्त्वा देवेब्भ्यो जुष्टम्प्रोक्षामि सर्व्वेब्भ्यस्त्वा देवेब्भ्यो जुष्टम्प्रो-क्षामि । योऽअर्व्वन्तञ्जिघाᳬसति तमब्भ्यमीति व्वरुणः परो मर्त्तः परः श्वा । ६२ $\frac{५}{२२}$ ॥ अग्नये स्वाहा सोमाय स्वाहा पाम्मोदाय स्वाहा सवित्रे स्वाहा व्वायवे स्वाहा विष्णवे स्वाहेन्द्राय स्वाहा बृहस्पतये स्वाहा मित्राय स्वाहा व्वरुणाय स्वाहा । ६३ $\frac{६}{२२}$ ॥ हिङ्काराय स्वाहा हि-ङ्कृताय स्वाहा क्रन्दते स्वाहा वक्रन्दाय स्वाहा प्प्रोथते स्वाहा प्प्रप्प्रोथाय स्वाहा गन्धाय स्वाहा घ्घ्राताय स्वाहा निविष्टाय स्वाहोपविष्टाय स्वाहा सन्दिताय स्वाहा व्वल्गते स्वाहा सीनाय स्वाहा शयानाय स्वाहा स्वपते स्वाहा जाग्ग्रते स्वाहा कूजते स्वाहा प्प्रबुद्धाय स्वाहा व्विजृम्भमाणाय स्वाहा व्विचृताय स्वाहा सᳪ हानाय

स्वाहोपस्त्थिताय स्वाहायनाय स्वाहा प्रायणाय स्वाहा । ६४ $\frac{७}{२२}$ ॥ यते स्वाहा धावते स्वाहो द्रावाय स्वाहो द्रुताय स्वाहा शूकाराय स्वाहा शूकृताय स्वाहा निषण्णाय स्वाहोत्थिताय स्वाहा जवाय स्वाहा बलाय स्वाहा विवर्त्तमानाय स्वाहा विवृत्ताय स्वाहा विधून्वानाय स्वाहा विधूताय स्वाहा शुश्रूषमाणाय स्वाहा शृण्वते स्वाहेक्षमाणाय स्वाहेक्षिताय स्वाहा वीक्षिताय स्वाहा निमेषाय स्वाहा यदत्ति तस्मै स्वाहा यत्पिबति तस्मै स्वाहा यन्मूत्रङ्करोति तस्मै स्वाहा कुर्वते स्वाहा । कृताय स्वाहा । ६५ $\frac{८}{२२}$ ॥ आशुःशि० ६६ $\frac{३३}{१७}$ ॥ सङ्क्रन्देनना० । ६७ $\frac{३४}{१७}$ ॥ सऽइषुहस्तैः । ६८ $\frac{३५}{१७}$ ॥ बृहस्पते परि० । ६९ $\frac{३६}{१७}$ ॥ बलविज्ञाय० । ७० $\frac{३७}{१७}$ ॥ गोत्रभिदं० । ७१ $\frac{३८}{१७}$ ॥ अभिगोत्रा० । ७२ $\frac{३९}{१७}$ ॥ इन्द्रऽआसान्ने० । ७३ $\frac{४०}{१७}$ ॥ इन्द्रस्य वृ० । ७४ $\frac{४१}{१७}$ ॥ उद्धर्षय मघ० । ७५ $\frac{४२}{१७}$ अस्माकमिन्द्रःस० । ७६ $\frac{४३}{१७}$ ॥ अमीषाञ्चि० । ७७ $\frac{४४}{१७}$ ॥ अवसृष्टाप० । ७८ $\frac{४५}{१७}$ ॥ प्रेताजय० । ७९ $\frac{४६}{१७}$ ॥ असौ यासे० । ८० $\frac{४७}{१७}$ ॥ यत्र बाणाःस० । ८१ $\frac{४८}{१७}$ ॥ मर्म्माणि ते व० । ८२ $\frac{४९}{१७}$ ॥ नमोस्तु । सर्प्पेब्भ्यो ये के च पृथिवीमनु । येऽअन्तरिक्षे ये दिवि तेब्भ्यः सर्प्पेब्भ्यो नमः । ८३ $\frac{६}{१३}$ ॥ याऽइषवो यातुधानानां ये वा वनस्पती १ँ ॥ रनु । ये वा वटेषु शेरते तेब्भ्यः सर्प्पेब्भ्यो नमः । ८४ $\frac{७}{१३}$ ॥ ये वा । मीरोचने दिवो ये वा सूर्यस्य रश्मिषु । येषामप्सु सदस्कृतन्तेब्भ्यः सर्प्पेब्भ्यो नमः । ८५ $\frac{८}{१३}$ ॥ यद्देवा देवहेडनन्देवासश्च कृमा वयम् । अग्निर्म्मा तस्मादेनसो विश्वान्मुञ्चत्व६

सऽ। ८६$\frac{१४}{२०}$ ॥ यदि दिवा यदि नक्तमेनाᳪसि च कृमा वयम्। वायुर्म्मातस्म्मादेनसो विश्श्वान्मुञ्चत्वᳪहसऽ। ८७$\frac{१५}{२०}$ ॥ यदि जाग्ग्रद्यदि स्वप्नऽएनाᳪसि चकृमा वयम्। सूर्य्यो मातस्म्मादेनसो विश्श्वान्मुञ्चत्वᳪहसऽ। ८८$\frac{१८}{२०}$ ॥ देवस्य त्वा। सवितुः प्प्रसवेश्विनोर्बाहुब्भ्याम्पूष्णो हस्ताब्भ्याम्। सरस्वत्त्यै वाचो यन्तुर्य्यन्त्रिये दधामि बृहस्प्पतेष्ट्वा साम्म्राज्ज्येनाभिषिञ्चाम्म्यसौ। ८९$\frac{३०}{९}$ ॥ देवस्य त्वा। सवितुः प्प्रसवेश्विनोर्बाहुब्भ्याम्पूष्णो हस्ताब्भ्याम्। सरस्वत्त्यै वाचो यन्तुर्य्यन्त्रेणाग्ग्नेःसाम्म्राज्ज्येनाभिषिञ्चामि। ९०$\frac{३७}{१८}$ ॥ देवस्य त्वा। सवितुः प्प्रसवेश्विनोर्बाहुब्भ्याम्पूष्णो हस्ताब्भ्याम्। अश्विनोर्ब्भैषज्ज्येन तेजसे ब्रह्मवर्च्चसायाभिषिञ्चामि सरस्वत्त्यै भैषज्ज्येन वीर्य्यायान्नाद्यायाभिषिञ्चामीन्द्रस्येन्द्रियेण बलाय श्रियै यशसेभिषिञ्चामि। ९१$\frac{३}{२०}$ ॥ अग्निर्द्देवता वातो देवता सूर्य्यो देवता चन्द्रमा देवता वसवो देवता रुद्रा देवतादित्या देवता मरुतो देवता विश्वेदेवा देवता बृहस्पतिर्द्देवतेन्द्रो देवता वरुणो देवता। ९२$\frac{२०}{१४}$ ॥ दीर्ग्घायुस्त ऽओषधे खनिता यस्म्मै च त्वा खनाम्म्यहम्। अथो त्वन्दीर्ग्घायुर्भूत्वा शतवल्शा विरोहतात्। ९३$\frac{१००}{१२}$ ॥

अथ 'ब्राह्मणम्'—ॐ अथैनाऽआप्यानवतीभ्यामभिमृशतीदमेवैतद्रेतः सिक्तमाप्याययति तस्माद्योनौ रेतः सिक्तमाप्यायते सौमीभ्याम्प्राणो वै सोमः प्राणं तद्रेतसि दधाति तस्माद्रेतःसिक्तं प्राणमभिसम्भवति पूर्वेद्ध यद्रेते

प्राणात्सम्भवेद्देवो हैवात्र सूददोहाऽप्राणो वै सोमः
प्राणꣳसूददोहाः । १ ॥ आप्यायस्व समेतु ते विश्वतः
सोम वृष्ण्यमिति रेतो वै वृष्ण्यमाप्याय स्वसमेतु ते सर्व-
तःसोम रेतऽइत्येतद्भवा वाजस्य सङ्गथऽइत्यन्नं वै वा-
जो भवान्नस्य सङ्गथऽइत्येतत्सन्ते पयाꣳसि समुयन्तु
वाजाऽइति रसो वै पयोऽन्नं वाजाः सन्ते रसः समु-
यन्त्वन्नानीत्येतत्सवृष्ण्यान्यभिमातिषाहऽ इति सꣳ-
रेताꣳसि पाप्मासहऽइत्येतदाप्यायमानोऽअमृताय सो-
मेति प्रजात्यान्तदमृतं दधाति तस्मात् प्रजातिरमृता दि-
वि श्रवाꣳस्युत्तमानिधिष्वेति चन्द्रमा वाऽअस्य दिवि
श्रवऽउत्तमꣳस ह्येनममुष्मिँल्लोके श्रावयति द्वाभ्यामा-
प्याययति गायत्र्या च त्रिष्टुभा च तस्योक्तो बन्धुः ।
२ ॥ 'अथातꣳसम्पदेव'—चतस्रो लोगेऽष्टकाऽउपदधाति
षड्ऋचेन निवपति द्वाभ्यामाप्याययति द्वादश द्वादश-
मासाःसंवत्सरःसंवत्सरोऽग्निर्यावानग्निर्यावत्यस्य ।
मात्रा तावत्तद्भवति । ३ ॥ अथ 'साम गायति' क्षत्रं वै
सामक्षत्रेणैवैनमेतदभिषिञ्चत्यथो साम्राज्यं वै साम साम्रा-
ज्येणैवैनꣳ साम्राज्यं गमयति सर्वेषां वाऽएष वेदानाꣳ
रसो यत्साम सर्व्वेषामेवैनमेतद्वेदानाꣳरसेनाभिषिञ्चति।४
'बृहत्यां गायति'—बृहत्यां वाऽआसावादित्यः श्रियां
प्रतिष्ठायां प्रतिष्ठितस्तपति बृहत्यामेवैनमेतच्छ्रियां प्रति-
ष्ठायां प्रतिष्ठापयति। ५ । 'ऐन्द्र्यां बृहत्यां गायति'—ऐन्द्रो
वाऽएष यज्ञो यत्सौत्रामणीन्द्रायतनऽएषऽएतर्हि यो ऽभिषि-
जते स्वऽएवैनमेतदायतनेभिषिञ्चति । ६ ॥ अथ यस्य

त्सꣳ शानानि नामैतैर्वै सामभिर्देवा इन्द्रमिन्द्रियाय वीर्य्याय समश्यं स्तथोऽएवै तमृत्विजो यजमानमेतैरेव सामभिरिन्द्रियाय वीर्य्याय सꣳस्यन्ति सुꣳ श्रवसे विश्रवसे सत्यश्रवसे श्रवसऽइति सामानि भवन्त्येष्वेवैनमेतं लोकेषु श्रावयन्ति चतुर्निधनं भवति चतस्रो वै दिशऽंसर्वास्वेवैनमेतद्दिक्षु प्रतिष्ठापयन्ति सर्वे निधनमुपावयन्ति सुंविदानऽएवास्मिंस्तच्छ्रियं दधाति ।७॥ 'तदाहुः'—तदाहुर्य्यदेतत्सामगीयतेथर्क्के तस्य साम्नऽउक्थमेका प्रतिष्ठा व्यत्र ह्युꣳ हि तद्यस्तु तमननुशस्तमिति । ८ । त्रयाहि देवाऽएकादशेत्येतद्वाऽएतस्य साम्नऽउक्थमेषा प्रतिष्ठाव्यत्र ह्युꣳ हि तद्यस्तु तमननुशस्तमिति ।९॥ 'त्रयाहि देवाऽएकादशेति'—त्रय स्त्रिꣳ श ग्रहं जुहोति त्रयाहि देवाऽएकादश त्रयस्त्रिꣳशाऽंसुराधसऽइति त्रयस्त्रिꣳशद्धि देवा बृहस्पति पुरोहिताऽइति ब्रह्म वै बृहस्पतिर्ब्रह्मपुरोहिताऽइत्येवैतदाह देवस्य सवितुऽंसवऽइति देवेन सवित्रा प्रसूताऽइत्येवै तदाह देवा देवैरवन्तुमेति देवाह्येतं देवैरभिषिञ्चन्ति।१०॥ 'प्रथमाद्वितीयैरिति'—प्रथमाह्येतं द्वितीयैरभिषिञ्चति द्वितीयास्तृतीयैरिति द्वितीया ह्येतं तृतीयैरभिषिञ्चन्ति तृतीयाऽं सत्येनेति तृतीया ह्येतꣳ सत्येनाभिषिञ्चन्ति सत्यं यज्ञेनेति सत्यꣳ ह्येतं यज्ञेनाभिषिञ्चन्ति यज्ञो यजुर्भिरिति यज्ञो ह्येतं यजुर्भिरभिषिञ्चन्ति यजूꣳषि सामभिरिति यजूꣳषि ह्येतꣳ सामभिरभिषिञ्चन्ति सामान्यृग्भिरिति सामानि ह्येतमृग्भिरभिषिञ्चन्त्यृचऽंपुरोनुवाक्याभिरित्यृचो ह्येतं पुरोनुवाक्याभिरिति पुरोनुवाक्या ह्येतं याज्याभिरभिषिञ्चन्ति

याज्या वषट्कारैरति याज्या ह्येतं वषट्कारैरभिषिञ्चन्ति वषट्काराऽआहुतिभिरिति वषट्कारा ह्येतमाहुतिभिरभिषिञ्चन्त्याहुतयो मे कामान्समर्द्धयन्तु भूःस्वाहेति तदेनमेताभिर्देवताभिः परोवरमभिषिञ्च्याथास्माऽआहुतिभिः सर्वान् कामान्समर्धयन्त्यथर्विक्षूपहवमिष्ट्वा भक्षयत्यृतवो वाऽऋत्विजऽ ऋतुष्वेवैतदुपहवमिच्छते । । ११ ॥ 'स भक्षयति'—लोमानि प्रयतिर्मत्वङ्मऽआनतिरागतिः । मांसम्मऽउपनतिर्वं स्वस्थि मज्जामऽआनतिरिति ह्येव वाऽएष लोकाँश्च देवताश्च विशति यःसौत्रामण्याभिषिच्यते तदेतद्वाँन्तरात्मानमुपह्वयते तथा कृत्स्नऽएव सर्वं तनुःसाङ्गःसम्भवति । १२ ॥ 'चित्रावसो स्वस्ति'—तेपारमशीयेति । त्रिरेतज्जपति रात्रिर्वै चित्रावसुःसा हीयः सङ्गृह्येव चित्राणि वसति तस्मान्नारकाच्चित्रं दहृशे । १३ ॥ एतेन हस्मावाऽऋषयः । तद्वाऽअग्नयऽइति क्रियतेऽग्निर्वै स देव तस्यैतानि नामानि शर्वऽइति यथा प्राच्याऽ आचक्षते भवऽइति यथा बाहीकाःपशूनां पती रुद्रोऽग्निरिति तान्यस्या शान्तान्येवैतराणि नामान्यग्निरित्येव शान्ततमं तस्मादग्नयऽइति क्रियते स्विष्टकृतऽइति । १४ ॥ ता हैता गौतमो राहूगणो विदाञ्चकार साह जनकं वैदेहं प्रत्युत्ससादता ह्यांगजिद्ब्राह्मणेष्वन्विवेष तामह याज्ञवल्क्य विवेद सहोवाच सहस्रं भो याज्ञवल्क्य दध्मो यस्मिन्वयं त्वयि मित्रविन्दामन्वविदामेति विन्दते मित्रः राष्ट्रमस्य भवत्यप पुनर्मृत्युं जयति सर्वमायुरेति यऽ एवं विद्वानेतयेष्ट्या यजते यो वै तदेवं वेद । १५ ॥ 'तस्मादेतदृषिणाभ्युन्

क्तम्'—चत्वारि वाक्परिमितापदानि तानि विदुर्ब्राह्मणा ये मनीषिणः गुहात्रीणि निहितानेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति । १६ ॥ 'अथातःस्वाध्यायप्रशꣳसा'—प्रिये स्वाध्यायप्रवचने भवतो युक्तमना भवत्यपराधीनो हरहरर्थान्साधयते सुखꣳ स्वपिति परमचिकित्सकऽआत्मनो भवतीन्द्रियसंयमश्चैकारामता च प्रज्ञावृद्धिर्यशोकपङ्क्तिःप्रज्ञा वर्द्धमाना चतुरो धर्मान्ब्राह्मणमभिनिष्पादयति ब्राह्मण्यं प्रतिरूपचर्य्यां यशो लोकपङ्क्तिर्लोकः पुच्यमानश्चतुर्भिर्धर्म्मैर्ब्राह्मणं भुनत्यर्चया च दानेन चाज्येयतया चावध्यतया च । १७ ॥ 'ये ह वै के च श्रमाः'—सऽउदीक्षते स्वयम्भूरसि श्रेष्ठो रश्मिरित्येषवै श्रेष्ठो रश्मिर्यत्सूर्यस्तस्मादाह स्वयम्भूरसि श्रेष्ठो रश्मिरिति वर्च्चोदाऽअसि वर्चो मे देहीतित्वेवाहं ब्रवीमीति हस्माह याज्ञवल्क्यस्तद्वेव ब्राह्मणेनैष्टव्यं जद्ब्रह्मवर्चसी स्यादित्युतोहस्माहौपोदिते यऽ एषवा व मह्यं गां दास्यति गोदा गा मे देहीत्येवं यं कामं कामयते सोस्मै कामःसमृध्यते । १८ ॥ 'एषवाऽआशीर्जीवेयम्' प्रजा मे स्याच्छ्रियं गच्छेयमिति तद्यत्पशूनाशास्ते तच्छ्रियमाशास्ते श्रीर्हि पशवस्तदेताभ्यामेवैतदाशीर्भ्याꣳ सर्वमाप्नं तस्माद्वाऽएतेऽअत्र द्वेऽआशिषौ क्रियेते । १९ ॥ 'तदेष श्लोको भवति'—विद्यया च दारो हन्ति यत्र कामाःपरागताः । न तत्र दक्षिणायन्ति नाविद्वाꣳसस्तपस्विनऽइति न हैव तं लोकं दक्षिणाभिर्न्न तपसानेवं विदश्नुतऽएवं विदाꣳहैषा सा लोकोभ्रं पुरीषम् । २० ॥ 'तदेतदृचाभ्युक्तम्'—विभक्तारꣳ हवामहे

वसोश्चित्रस्य राधसः सवितारं नृचक्षसमिति तदेतत्सर्वमायुर्दीर्घमनन्तᳪ हि तद्यदिदमाहुर्दीर्घᳪऽआयुरस्तु सर्वमायुरेहीत्येषु ते लोकऽएतदस्त्विति हैवैतत्पश्यन्ती वाग्वदति । २१ ॥ अथ वᳪशᳪसमानमासाञ्जीवीपुत्रात्साञ्जीविपुत्रो माण्डूकायनेर्माण्डूकायनिर्माण्डव्यान्माण्डव्यः कौत्सात्कौत्सो माहित्थेर्माहित्थिर्वामकक्षायणाद्वामकक्षायणो वात्स्याद्वात्स्यᳪशाण्डिल्याच्छाण्डिल्यः कुश्रे कुश्रिर्यज्ञवचसो राजस्तम्बायनाद्यज्ञवचा राजस्तम्बायनस्तुरात्कावषेयात्तुरः कावषेयः प्रजापतेः प्रजापतिर्ब्रह्मणो ब्रह्म स्वयम्भुब्रह्मणे नमः । २२ ॥ सुशांतिर्भवतु । यजमानस्य सूतिकाबालकयोः आयुष्याभिवृद्धिरस्तु ॥ 'अर्पणम्'— अनेन शान्तिपाठाख्येन कर्मणा श्रीआराध्यदेवता प्रजापतिदेवता च प्रीयतां न मम । इति वाजसनेयब्राह्मणानां शान्तिसूक्तपाठः ॥

५३१. अथ 'यज्ञोपवीतविधिः' पारस्करगृह्यसूत्रे—अष्टवर्षं ब्राह्मणमुपनयेद्गर्भाष्टमे वैकादशवर्षᳪ राजन्यं द्वादशवर्षं वैश्यं यथा मङ्गलं वा सर्वेषां ब्राह्मणान् भोजयेत्तञ्च पर्युप्तशिरसमलङ्कृतमानयन्ति । पश्चादग्नेरवस्थाप्य ब्रह्मचर्यमागामिति वाचयति । ब्रह्मचार्यसानीति चाथैनं वासः परिधापयति येनेन्द्राय बृहस्पतिर्वासः पर्यदधामृतम् । तेन त्वा परिधदाम्यायुषे दीर्घायुत्वाय बलाय वर्चसऽइति मेखलां बध्नीत । इयं दुरुक्तं परिबाधमाना वर्णं पवित्रं पुनती मऽआगात् । प्राणापानाभ्यां बलमादधाना स्वसादेवी सुभगा मेखलेयमिति ॥ 'युवासुवासाः परिवीतऽआगात्सऽउश्रेयान्भवति जायमानः ॥ तन्धीरासः कवयऽउन्नयन्ति स्वाध्यो मनसा देवयन्त' इति वा तूष्णीं वात्र यज्ञोपवीतपरिधानम् । 'यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत्सहजं पुरस्तात् । आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः' [ इति मन्त्रं पठितवतो माणवकस्य

दक्षिणबाहुमुद्धृत्य वामस्कन्धे यज्ञोपवीतं निवेशयति] 'यज्ञोपवीतमसि यज्ञस्य त्वा यज्ञोपवीतेनोपनह्यामि। इत्यथाजिनं प्रयच्छति मित्रस्य चक्षुर्धरुणं बलीयस्तेजो यशस्वि स्थविरꣳ समिद्धम्। अनाहनस्यं वसनं जरिष्णुः परीदं वाज्यजिनं दधेहमिति तूष्णीं वा दण्डं प्रयच्छति तं प्रतिगृह्णाति यो मे दण्डः परापतद्वैहायसोऽधि भूम्याम्। तमहं पुनरादद ऽआयुषे ब्रह्मणे ब्रह्मवर्चसायेति दीक्षा वदेके दीर्घसत्रमुपैतीति वचनादथास्याद्भिरञ्जलिनाञ्जलिं पूरयत्यापोहिष्ठेति तिसृभिरथैनꣳ सूर्यमुदीक्षयति तच्चक्षुरित्यथास्य दक्षिणांसमधि हृदयमालभे। मम व्रतं ते हृदये दधामि मम चित्तमनुचित्तं तेऽ अस्तु। मम वाचमेकमना जुषस्व बृहस्पतिष्ट्वा नियुनक्तु मह्यमित्यथास्य दक्षिणꣳ हस्तं गृहीत्वाह कोनामासीत्यसावहं भो ॥ ३ ॥ मनुः—ब्रह्मवर्चसकामस्य कार्यं विप्रस्य पञ्चमे। राज्ञो बलार्थिनः षष्ठे वैश्यस्येहार्थिनोऽष्टमे ॥ दण्डाजिनोपवीतानि मेखलां चैव धारयेत् ॥

५३२. 'यज्ञोपवीतलक्षणम्.' पारस्करगृह्यसूत्रे—हरिहरभाष्ये—यथोक्तं छन्दोगपरिशिष्टे—त्रिवृदूर्ध्वं वृतं कार्यं तन्तुत्रयमधोवृतम्। त्रिवृतं चोपवीतं स्यात्तस्यैको ग्रन्थिरिष्यते ॥ वामावर्तं त्रिगुणं कृत्वा प्रदक्षिणावर्तं नवगुणं विधाय तदेवं त्रिसरं कृत्वा ग्रन्थिमेकं विदध्यात् ॥ तथा—पृष्ठवंशे च नाभ्यां च धृतं तद्विन्दते कटिम्। तद्धार्यमुपवीतं स्यान्नातिलम्बं न चोच्छ्रितम्। वामस्कन्धे कृतं नाभिहृत्पृष्ठवंशयोर्धृतम् ॥ (कटिपर्यन्तमाप्नोति तावत्परिमाणकं कर्तव्यमित्यर्थः) ॥ कार्पासक्षौमगोवालशाणवल्कतृणादिकम्। सदा सम्भवतो धार्यमुपवीतं द्विजातिभिः ॥ शुचौ देशे शुचिः सूत्रं संहताङ्गुलिमूलके। आवेष्ट्य षण्णवत्या तत्त्रिगुणीकृत्य यत्नतः ॥ अलिङ्गकैस्त्रिभिः सम्यक् प्रक्षाल्योर्ध्ववृतं च तत्। अप्रदक्षिणमावृत्तं सावित्र्या त्रिगुणीकृतम् ॥ अधः प्रदक्षिणावृत्तं समं स्यान्नवसूत्रकम्। त्रिरावेष्ट्य दृढं बध्वा हरिब्रह्मेश्वरान्नमन् ॥ 'यज्ञोपवीतं परममिति' मन्त्रेण धारयेत्)। सूत्रं सलोमकं चेत्स्यात्ततः कृत्वा विलोमकम्। सावित्र्या दशकृत्वाद्भिर्मन्त्रिताभिस्तदुक्षयेत् ॥ छिन्नं वाप्यधो यातं मुक्त्वा निर्मितमुत्सृजेत्। स्तनादूर्ध्वमधो नाभेर्न तत्कथञ्चन ॥ ब्रह्मचारिण एकं स्यात्स्नातव्यं द्वे बहूनि वा। तृती-

यमुत्तरीयं वा वस्त्राभावे तदिष्यते ॥ ब्रह्मसूत्रेऽपसव्येंऽसे स्थिते यज्ञोपवीतिता । प्राचीनावीतिता सव्ये कण्ठस्थे तु निवीतिता ॥

५३३. 'यज्ञोपवीततन्तुदेवता.' हरिहरभाष्ये— ॐकारः प्रथमे तन्तौ द्वितीयेऽग्निस्तथैव च । तृतीये नागदैवत्यं चतुर्थे सोमदेवता ॥ पञ्चमे पितृदैवत्यं षष्ठे चैव प्रजापतिः । सप्तमे मारुतश्चैव अष्टमे सूर्य एव च ॥ सर्वे देवास्तु नवम इत्येतास्तन्तुदेवताः । ब्रह्मणोत्पादितं सूत्रं विष्णुना त्रिगुणीकृतम् ॥ रुद्रेण दत्तो ग्रन्थिर्वै सावित्र्या चाभिमन्त्रितम् । कृते पद्ममयं सूत्रं त्रेतायां कनकोद्भवम् ॥ द्वापरे राजतं प्रोक्तं कलौ कार्पाससम्भवम् ॥

५३४. 'यज्ञोपवीतधारणे संख्या.' सङ्ग्रहे—द्वे पवीते सदा धार्ये एकं नैव च धारयेत् ॥ तृतीयं चोत्तरीयं स्याद्वस्त्राभावे विधीयते । विना यज्ञोपवीतेन तोयं यः पिबते द्विजः ॥ उपवासेन चैकेन पञ्चगव्येन शुध्यति । विना यज्ञोपवीतेन विण्मूत्रोत्सर्गकृद्यदि ॥ उपवासद्वयं कृत्वा दानैर्होमैस्तु शुद्ध्यति ॥ उपाकर्मणि चोत्सर्गे गते मासचतुष्टये । नवयज्ञोपवीतानि धृत्वा पूर्वाणि संत्यजेत् । जीर्णयज्ञोपवीतानि शिरोमार्गेण संत्यजेदिति ॥ अन्यच्च—सूतके मृतके चैव गते मासचतुष्टये । नवयज्ञोपवीतानि धृत्वा जीर्णानि सन्त्यजेत् ॥ 'धारितयज्ञोपवीते कण्ठादुत्तीर्णे दोषः—कठाः काण्वाश्च चरका विप्रा वाजसनेयकाः । बह्वृचाः सामगाश्चैव ये चान्ये यजुःशाखिनः ॥ कण्ठादुत्तीर्य सूत्रं तु पुनः संस्कारमर्हति ॥

५३५. अथ 'यज्ञोपवीतधारणप्रयोगः'— 'आचम्य प्राणानायम्य' ॥ 'सङ्कल्पः'—अद्येत्यादि मम श्रौतस्मार्तकर्मानुष्ठानसिद्ध्यर्थं तथाच अमुककर्माङ्गत्वेन यज्ञोपवीतधारणमहं करिष्ये । 'सूत्रत्रिगुणीकरणम्'—इदं विष्णुरिति मेधातिथिर्ऋषिः । विष्णुर्देवता । गायत्री छन्दः । सूत्रत्रिगुणीकरणे विनियोगः—**ॐ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूढमस्य पाꣳसुरे स्वाहा ।**१ १५/५ ॥ 'प्रक्षालनम्'—आपोहिष्ठेति तिसृणां सिन्धुद्वीप ऋषिः । आपो देवता छ

(१) देवपूजाप्रयोगवत् बोध्यम् (१३२) ॥

गायत्री छन्दः। यज्ञोपवीतप्रक्षालने विनियोगः—ॐ आपोहि। ष्ठामयोभुवस्तानऽऊर्ज्जे दधातन। महेरणाय चक्षसे। २ $\frac{१४}{३६}$ ॥ यो वः शिवतमो रसस्तस्य भाजयतेह नः। उशतीरिव मातरः। ३ $\frac{१५}{३६}$ ॥ तस्मा ऽअरङ्गमामवो यस्य क्षयाय जिन्वथ। आपो जनयथा च नः। ४ $\frac{१६}{३६}$ ॥ ततो यज्ञोपवीतानि प्रक्षाल्यानन्तरं दशगायत्रीमन्त्रैरभिमन्त्र्य ॥ 'तन्तुदेवतानामावाहनम्'—प्रणवस्य। ब्रह्मा ऋषिः। परमात्मा देवता। गायत्री छन्दः। प्रथमतन्तौ ॐकारावाहने विनियोगः। ॐ प्रथमतन्तौ ॐकारमावाहयामि ॥ अग्निंदूतमिति मेधातिथिर्ऋषिः। अग्निर्देवता। गायत्री छन्दः। द्वितीयतन्तौ अग्न्यावाहने विनियोगः—ॐ अग्निन्दूतम्पुरो दधे हव्यवाहमुप ब्रुवे। देवा २ँ॥ ऽआसादयादिह। ५ $\frac{१७}{२२}$ ॥ द्वितीयतन्तौ अग्निमावाहयामि। नमोऽस्तु सर्पेभ्य इत्यस्य। प्रजापतिर्ऋषिः। सर्प्पा देवताः। अनुष्टुप् छन्दः। तृतीयतन्तौ सर्प्पावाहने विनियोगः—ॐ नमोस्तु। सर्प्पेभ्यो ये के च पृथिवीमनु। येऽअन्तरिक्षे ये दिवि तेभ्यः सर्पेभ्यो नमः। ६ $\frac{६}{१३}$ ॥ तृतीयतन्तौ सर्पानावाहयामि। वयꣳ सोमेत्यस्य बन्धुर्ऋषिः। सोमो देवता। गायत्री छन्दः। चतुर्थतन्तौ सोमावाहने विनियोगः—ॐ वयꣳ सोम व्रते तव मनस्तनूषु बिभ्रतः। प्रजावन्तः सचेमहि। ७ $\frac{५६}{३}$ ॥ चतुर्थतन्तौ सोममावाहयामि ॥ उदीरतामित्यस्य शङ्खऋषिः। पितरो देवता। त्रिष्टुप् छन्दः। पञ्चमतन्तौ पित्रावाहने विनियोगः—ॐ उदीरतामवर ऽ उत्परास ऽउन्मध्यमाः पितरः सोम्यासः। असुं यऽईयुरवृका ऽऋतज्ञास्ते नो ऽवन्तु पितरो हवेषु। ८ $\frac{४९}{१९}$ ॥ पञ्चमतन्तौ पितॄनावाहयामि। प्रजापतेरित्यस्य हिरण्यगर्भ ऋषिः। प्रजापतिर्देवता। त्रिष्टुप् छन्दः। षष्ठतन्तौ प्रजापत्यावाहने विनियोगः—ॐ प्रजापतेन। त्वदेतान्यन्यो विश्वा रूपाणि परिता बभूव। यत्कामास्ते जु-

हुमस्तन्नोऽअस्तु व्वयꣳ स्याम पतयो रयीणाम् । ९$\frac{६५}{२३}$ ॥ षष्ठतन्तौ प्रजापतये नमः प्रजापतिमावाहयामि । आनोनियुद्भिरित्यस्य । वसिष्ठऋषिः । अनिलो देवता । त्रिष्टुप् छन्दः । सप्तमतन्तौ अनिलावाहने विनियोगः—ॐ आनो नियुद्भिः शतिनीभिरध्वरꣳ सहस्रिणीभिरुपयाहि यज्ञम् । व्वायोऽअस्मिन्त्सवने मादयस्व यूयम्पात स्वस्तिभिः सदा नः । १०$\frac{२८}{२७}$ ॥ सप्तमतन्तौ अनिलाय नमः अनिलमावाहयामि । सुगाव इत्यस्यात्रिर्ऋषिः । गृहपतयो देवता । आर्षी त्रिष्टुप् छन्दः । अष्टमतन्तौ यमावाहने विनियोगः— ॐ सुगावो देवाः सदनाऽअकर्म्म यऽआजग्मेदꣳ सवनञ्जुषाणाः । भरमाणा व्वहमाना हवीꣳष्यस्मे धत्त व्वसवो व्वसूनि स्वाहा । ११$\frac{१८}{८}$ ॥ अष्टमतन्तौ यमाय नमः यममावाहयामि । विश्वेदेवासऽआगत इत्यस्य मधुच्छन्दा ऋषिः । विश्वेदेवा देवताः । त्रिष्टुप् छन्दः । नवमतन्तौ विश्वेषां देवानामावाहने विनियोगः—ॐ व्विश्वेदेवासऽआगत शृणुतामऽइमꣳ हवम् । एदम्बर्हिर्न्निषीदत । * १२$\frac{३४}{७}$ ॥ नवमतन्तौ विश्वेभ्योदेवेभ्यो नमः विश्वान्देवानावाहयामि ॥ 'यज्ञोपवीतग्रन्थिदेवताऽवाहनम्'— ब्रह्म यज्ञानमित्यस्य । प्रजापतिर्ऋषिः । ब्रह्मा देवता । गायत्री छन्दः । ग्रन्थिमध्ये ब्रह्मावाहने विनियोगः— ॐ ब्रह्मयज्ञानम्प्रथमम्पुरस्ताद्विसीमतः सुरुचो व्वेनऽआवः । स बुध्न्याऽउपमाऽअस्य व्विष्ठाः सतश्च योनिमसतश्च व्विवः । १३$\frac{३}{१३}$ ॥ इदं विष्णुरित्यस्य मेधातिथिर्ऋषिः । विष्णुर्देवता । गायत्री छन्दः । ग्रन्थिमध्ये विष्णवावाहने विनियोगः—ॐ इदं व्विष्णु० । १४$\frac{१५}{५}$ ॥ त्र्यम्बकमित्यस्य वसिष्ठऋषिः । रुद्रो देवता । विराड् ब्राह्मी त्रिष्टुप् छन्दः । ग्रन्थिमध्ये रुद्रावाहने विनियोगः—ॐ त्र्यम्बकं यजामहे । सुगन्धिम्पुष्टिवर्द्धनम् । उर्व्वारुकमिव बन्धनान्मृत्योर्म्मुक्षीय मा म-

तात् । * $१५\frac{६०}{३}$ ॥ यज्ञोपवीतग्रन्थिदेवताभ्यो नमः ग्रन्थिदेवताः आवाहयामि ॥ प्रणवाद्यावाहितदेवताभ्यो नमः यथास्थानमहं न्यसामि । मानसोपचारैः सम्पूज्य ॥ अथ 'ध्यानम्'—प्रजापतेर्यत्सहजं पवित्रं कार्पाससूत्रोद्भवब्रह्मसूत्रम् । ब्रह्मत्वसिद्ध्यै च यशःप्रकाशं जपस्य सिद्धिं कुरु ब्रह्मसूत्रम् ॥ ॐ युवासुवासाः परिवीतऽआगात्सऽउ श्रेयान्भवति जायमानः । तन्धीरासः कवय उन्नयति स्वाध्यो मनसा देवयन्तः । 'यज्ञोपवीतधारणम्'—यज्ञोपवीतमिति मन्त्रस्य । परमेष्ठीऋषिः । लिङ्गोक्ता देवता । त्रिष्टुप् छन्दः । यज्ञोपवीतधारणे विनियोगः—ॐ यज्ञोपवीतम्परमम्पवित्रम्प्रजापतेर्यत्सहजम्पुरस्तात् । आयुष्यमग्र्यम्प्रतिमुञ्च शुभ्रं यज्ञोपवीतम्बलमस्तु तेजः ॥ यज्ञोपवीतमसि यज्ञस्य त्वा यज्ञोपवीतेनोपनह्यामि ॥ अनेन मन्त्रेण यज्ञोपवीतानां पृथक् पृथक् धारणं कुर्यात् । प्रतियज्ञोपवीतधारणस्याद्यन्तयोराचमनम् । धारणान्ते 'जीर्णसूत्रत्यागमन्त्रः—एतावद्दिनपर्यन्तं ब्रह्म त्वं धारितं मया । जीर्णत्वात्त्वत्परित्यागो गच्छ सूत्र यथासुखम् ॥ इति मन्त्रेण जीर्णयज्ञोपवीतं शिरोमार्गेण निःसार्य शुद्धभूमौ त्यजेत् ॥ पश्चाद्यथाशक्ति गायत्रीमन्त्रजपं कुर्यात् ॥ 'अर्पणम्'—अनेन नवयज्ञोपवीतधारणार्थे कृतेन यथाशक्तिगायत्रीजपकर्मणा श्रीसवितादेवता प्रीयतां न मम ॥ ॐ तत्सद्ब्रह्मार्पणमस्तु ॥ यस्य० ॥ इति यज्ञोपवीतधारणप्रयोगः ॥

५३६. अथ 'संक्षेपतो यज्ञोपवीतधारणप्रयोगः'—यज्ञोपवीतान्युदकेन प्रक्षाल्यानन्तरमाचम्य प्राणानायम्य ॥ 'सङ्कल्पः'—अद्येत्यादि मम श्रौतस्मार्तकर्मानुष्ठानसिद्ध्यर्थं तथा च अमुककर्माङ्गत्वेन नवीनयज्ञोपवीतधारणमहं करिष्ये । (इति सङ्कल्प्य यज्ञोपवीतानि करसम्पुटे दशगायत्रीमन्त्रैः अभिमन्त्रयेत् । तदनन्तरं)—ॐ यज्ञोपवीतम्परमम्पवित्रम्प्रजापतेर्यत्सहजम्पुरस्तात् । आयुष्यमग्र्यम्प्रतिमुञ्च शुभ्रं यज्ञोपवीतम्बलमस्तु तेजः ॥ ॐ यज्ञोपवीतमसि यज्ञस्य त्वा यज्ञोपवीतेनोपनह्यामि ॥ (इति मन्त्रौ पठित्वा पृथक् पृथक् यज्ञोपवीतानि सव्यहस्तद्वारा धार्याणि । प्रतियज्ञोपवीतधारणान्ते आचम्य) पश्चात् यथाशक्तिगायत्रीजपेत् ॥ ( ततो जीर्णयज्ञोपवीतत्यागः कार्यः ) ॥

'अर्पणम्'— अनेन नवयज्ञोपवीतधारणार्थे कृतेन यथाशक्ति गायत्रीजपाख्येन कर्मणा श्रीसूर्यनारायणः प्रीयतां न मम । ॐ तत्सद्ब्र० ॥ इति संक्षेपतो यज्ञोपवीतधारणप्रयोगः ॥

## भूतप्रेतपिशाचव्याघ्रचौरसङ्कटादिभयं ग्रहपीडादेहपीडा राजपीडाश्चैतेषां निवारणार्थे तथा च बालरक्षाकरणार्थे उपयुक्तस्तोत्राणि यथा अधोदर्शितक्रमेण—

५३७. अथ 'महामृत्युञ्जयमन्त्रजपविधिः' 'सङ्कल्पः'— अद्येत्यादिपूर्वोच्चारित एवंगुणविशेषेण विशिष्टायां शुभपुण्यतिथौ मम आत्मनः श्रुतिस्मृतिपुराणोक्तफलप्राप्त्यर्थं यजमानस्य शरीरेऽमुकपीडानिरासद्वारा सद्यः आरोग्यप्राप्त्यर्थं श्रीमहामृत्युञ्जयदेवताप्रीत्यर्थं श्रीमहामृत्युञ्जयमन्त्रजपमहं करिष्ये—ॐ अस्य श्रीमहामृत्युञ्जयमन्त्रस्य । वसिष्ठऋषिः । श्रीमृत्युञ्जयरुद्रो देवता । अनुष्टुप् छन्दः । हौं बीजम् । जूं शक्तिः । सः कीलकम् । मृत्युञ्जयप्रीत्यर्थे जपे विनियोगः— 'न्यासाः'— वसिष्ठऋषये नमः शिरसि । अनुष्टुप् छन्दसे नमः मुखे । श्रीमहामृत्युञ्जयरुद्रदेवतायै नमः हृदये । हौं बीजाय नमः गुह्ये । जूं शक्तये नमः पादयोः । सः कीलकाय नमः सर्वाङ्गेषु । ॐ त्र्यंबकं अङ्गुष्ठाभ्यां नमः । ॐ यजामहे तर्जनीभ्यां नमः । ॐ सुगन्धिं पुष्टिवर्द्धनं मध्यमाभ्यां नमः । ॐ उर्वारुकमिव बन्धनात् अनामिकाभ्यां नमः । ॐ मृत्योर्मुक्षीय कनिष्ठिकाभ्यां नमः । ॐ मामृतात् करतलकरपृष्ठाभ्यां नमः । एवं हृदयादि ॥ 'ध्यानम्'—चन्द्रोद्भासितमूर्धजं सुरपतिं पीयूषपात्रं महद्धस्ताब्जेन दधत्सुदिव्यममलं हास्यास्यपङ्केरुहम् । सूर्येन्दुग्निविलोकनं करतलैः पाशाक्षसूत्राङ्कुशांभोजं बिभ्रतमक्षयं पशुपतिं मृत्युञ्जयं तं स्मरे ॥ १ ॥ मानसोपचारैः सम्पूज्य ॥ ॐ लं पृथिव्यात्मकं गन्धं समर्पयामि । ॐ हं आकाशात्मकं पुष्पं समर्पयामि । ॐ यं वाय्वात्मकं धूपं समर्पयामि । ॐ रं तेजात्मकं दी

समर्पयामि । ॐ वं अमृतात्मकं नैवेद्यं समर्पयामि । ॐ सं सर्वात्मकं मन्त्रपुष्पं समर्पयामि 'मन्त्रोद्धारः'—ॐ हौं ॐ जूं ॐ सः ॐ भूः ॐ भुवः ॐ स्वः ॐ त्र्यम्बकं यजामहे ॐ स्वः ॐ भुवः ॐ भूः ॐ सः ॐ जूं ॐ हौं ॐ । उत्तरन्यासं कृत्वा ॥ गुह्यातिगुह्यगोप्ता त्वं गृहाणास्मत्कृतं जपम् । सिद्धिर्भवतु मे देव त्वत्प्रसादान्महेश्वर ॥ मृत्युञ्जय महारुद्र त्राहि मां शरणागतम् । जन्ममृत्युजरारोगैः पीडितं कर्मबन्धनैः ॥ 'अर्पणम्'—अनेन महामृत्युञ्जयजपाख्येन कर्मणा श्रीमहामृत्युञ्जयः प्रीयतां न मम ॥ अथ 'षट्प्रणवयुक्तमृत्युञ्जयमहामन्त्रः'— 'सङ्कल्पः'—पूर्ववत् ॥ ॐ हौं जूं सः ॐ भूर्भुवः स्वः ॐ त्र्यम्बकं यजामहे सुगन्धिम्पुष्टिवर्द्धनम् । उर्वारुकमिवबन्धना० ॐ सः जूं हौं ॐ स्वः भुवः भूः ॥ अर्पणम् पूर्ववत् ॥ इति षट्प्रणवयुक्तमृत्युञ्जयमहामन्त्रः ॥ एवं जपानन्तरं देवपूजनं कृत्वा ॥ 'प्रार्थना'—मृत्युञ्जय महादेव त्राहि मां शरणागतम् । जन्ममृत्युजरारोगैः पीडितं कर्मबन्धनैः ॥ तावकस्त्वद्गतप्राणस्त्वच्चित्तोऽहं सदा मृड । इति विज्ञाप्य देवेशं जपेन्मन्त्रं तु त्र्यम्बकम् ॥ 'जपनिवेदनम्'— जपसाङ्गतासिद्ध्यर्थं यथाकामनया द्रव्येण[1] दशांशहोमतर्पणमार्जनब्राह्मणभोजनानि कुर्यात् ॥ इति महामृत्युञ्जयमन्त्रजपविधिः ॥

५३८. 'अथ नवग्रहस्तोत्रम्.'—भास्वान्काश्यपगोत्रजोऽरुणरुचिर्यः सिंहराशीश्वरः षट्त्रिस्थो दशशोभनो गुरुशशीभौमेषु मित्रं सदा ।

---

१ 'होमद्रव्याणि'—पुत्रार्थं शालिबीजेन धनार्थं बिल्वपत्रकैः । दूर्वाभिरायुष्कामस्तु [पु]ष्टिकामस्तु वेतसैः । कन्याकामस्तु लाजाभिः पशुकामो घृतेन तु । विद्याकामस्तु पा[ला]शैर्दशांशेन तु होमयेत् । धान्यकामो यवैश्चैव गुग्गुलेन रिपुक्षये । तिलैरारोग्यकामस्तु [व्री]हिभिः सुखमश्नुते ॥ अथ 'प्रकारः'—शान्तः स्वरास्त्रसंयुक्तो बिन्दुभूषितमस्तकः । [प्र]सादाख्यो मनुः प्रोक्तो भजतां कल्पभूरुहः ॥ मनःसंवरणं शौचं मौनं मन्त्रार्थचि[न्तन]म् । अव्यग्रत्वमनिर्वेदो जपसंपत्तिहेतवः ॥ धीरो धृतव्रतो मौनी जितक्रोधो जिते[न्द्रियः] । धौतवासास्त्वधःशायी रुद्रलोके महीयते ॥ गृहे चैकगुणः प्रोक्तो गोष्ठे दशगुणः [...] । अयुतं पर्वते पुण्ये नद्यां लक्षगुणो जपः ॥ कोटि देवालये प्राप्ते अनन्तः शि[वस]न्निधौ । एवं यः प्रत्यहं कुर्याच्छिवसायुज्यमाप्नुयात् ॥ यस्मिन् स्थाने जपं कृत्वा शक्रो [...] तज्जपम् । तन्मृदा लक्ष्म कुर्वीत ललाटे तिलकाकृति ॥

शुक्रो मन्दरिपुः कलिङ्गजनितश्चाग्नीश्वरो देवता मध्ये वर्तुलपूर्वदिग्दिनकरः कुर्यात्सदा मङ्गलम् ॥ सुलग्न सावधान् । १ ॥ चन्द्रः कर्कटकप्रभुः सितनिभश्चात्रेयगोत्रोद्भवश्चाग्नेयश्चतुरस्रवारुणमुखश्चापोऽप्युमाधीश्वरः । षट्सप्ताग्निदशैकशोभनफलो शौरीगुरोर्कप्रियः स्वामी यामुनदेशजो हिमकरः कुर्यात्सदा मङ्गलम् । सुलग्न सावधान् । २ ॥ भौमो दक्षिणदिक्त्रिकोणयमदिक् विघ्नेश्वरो रक्तभस्वामी वृश्चिकमेषयोः सुरगुरुश्चार्कः शशीसौहृदः । शौरी षट्त्रिफलप्रदश्च वसुधास्कन्दौ क्रमाद्देवते भारद्वाजकुलोद्भवः क्षितिसुतः कुर्यात्सदा मङ्गलम् । सुलग्न सावधान् । ३ ॥ सौम्योदङ्मुखपीतवर्णमगधश्चात्रेयगोत्रोद्भवो बाणेशानदिशः सुहृच्छनिभृगुः शत्रुः सदा शीतगुः । कन्यायुग्मपतिर्दशाष्टचतुरः षण्नेत्रकः शोभनो विष्णुः पौरुषदेवते शशिसुतः कुर्यात्सदा मङ्गलम् । सुलग्न सावधान् । ४ ॥ जीवश्चाङ्गिरगोत्रजोत्तरमुखो दीर्घोत्तरासंस्थितः पीताश्वत्थसमिच्च सिन्धुजनितश्चापोथ मीनाधिपः । सूर्येन्दुक्षितिजप्रियो बुधसितौ शत्रू समाश्चापरे सप्ताङ्कद्विभवः शुभः सुरगुरुः कुर्यात्सदा मङ्गलम् । सुलग्न सावधान् । ५ ॥ शुक्रो भार्गवगोत्रजः सितनिभः प्राचीमुखः पूर्वदिक्पञ्चाङ्को वृषभस्तुलाधिपमहाराष्ट्राधिपोदुम्बरः । इन्द्राणीमघवानुभौ बुधशनी मित्रार्कचन्द्रौ रिपू षष्ठो द्विर्दशवर्जितो भृगुसुतः कुर्यात्सदा मङ्गलम् । सुलग्न सावधान् । ६ ॥ मन्दः कृष्णनिभस्तु पश्चिममुखः सौराष्ट्रकः काश्यपः स्वामी मकरकुम्भयोर्बुधसितौ मित्रे समश्चाङ्गिराः । स्थानं पश्चिमदिक्प्रजापतियमौ देवौ धनुष्यासनः षट्त्रिस्थः शुभकृच्छनीरविसुतः कुर्यात्सदा मङ्गलम् । सुलग्न सावधान् । ७ ॥ राहुः सिंहलदेशजश्च निर्ऋतिः कृष्णाङ्गशूर्पासनो यः पैठीनसिगोत्रसम्भवसमिद्दूर्वामुखो दक्षिणः यः सर्पाद्यधिदेवते च निर्ऋतिः प्रत्याधिदेवः सदा षट्त्रिस्थः शुभकृच्च सिंहिकसुतः कुर्यात्सदा मङ्गलम् । सुलग्न सावधान् । ८ ॥ केतुर्जैमिनिगोत्रजः कुशसमिद्वायव्यकोणे स्थितश्चित्राङ्गध्वजलाञ्छनो हिमगुहा यो दक्षिणाशामुखः । ब्रह्मा चैव सचित्रचित्रसहितः प्रत्याधिदेवः सदा षट्त्रिस्थः शुभकृच्च बर्बरपतिः कुर्यात्सदा मङ्गलम् । सुलग्न सावधान् ॥ ९ ॥ इत्येतद्ग्रहमङ्गलाष्टनवकं लोकोपकारप्रदं पापौघप्रशमं महच्छुभकरं सौ...

(१) 'सुलग्नसावधान्'—एवं विवाहसमये वदेत् । स्तोत्रपाठे तु न ॥

ग्यसंवर्धनम्। यः प्रातः शृणुयात्पठत्यनुदिनं श्रीकालिदासोदितं स्तोत्रं मङ्गलदायकं शुभकरं प्राप्नोत्यभीष्टं फलम्॥ इति नवग्रहमङ्गलस्तोत्रम्॥

५३९. अथ 'वेदोक्तं सबीजं नवग्रहस्तोत्रम्'—'आचम्य प्राणानायम्य'॥ 'सङ्कल्पः'—अद्य पूर्वोच्चारित एवंगुणविशेषेण विशिष्टायां शुभपुण्यतिथौ ममाऽऽत्मनः श्रुतिस्मृतिपुराणोक्तफलप्राप्त्यर्थं मम जन्मराशेः सकाशाद्विरुद्धचतुर्थाष्टमद्वादशादिस्थानस्थितामुकग्रहपीडापरिहारद्वारा एकादशस्थानस्थितवदुत्तमफलप्राप्त्यर्थं अमुकग्रहस्य स्तुतिं जपं वा करिष्ये। इति सङ्कल्प्य जपादि कुर्यात्। 'तत्रादित्यमन्त्रः'—आकृष्णेति मन्त्रस्य। हिरण्यस्तूपाङ्गिरसऋषिः। सूर्योदेवता। त्रिष्टुप्छन्दः। सूर्यमन्त्रजपे विनियोगः— ॐ ह्राँ, ह्रीँ ह्रौँ, सः—ॐ भूर्भुवः स्वः—ॐ आकृष्णेन रजसा वर्तमानो निवेशयन्नमृतम्मर्त्यञ्च। हिरण्ययेन सविता रथेनादेवो याति भुवनानि पश्यन्। ॐ स्वः, भुवः, भूः, ॐ सः, ह्रौँ, ह्रीँ, ह्राँ, ॐ सूर्यायनमः। $1\frac{43}{33}$॥ 'सोममन्त्रः'—इमन्देवा इति मन्त्रस्य वरुणऋषिः। अग्निर्देवता। सोममन्त्रजपे विनियोगः—ॐ श्राँ, श्रीँ, श्रौँ, सः—ॐ भूर्भुव स्वः—ॐ इमन्देवाऽअसपत्नꣳ सुवद्ध्वम्महते क्षत्राय महते ज्यैष्ठ्याय महते जानराज्यायेन्द्रस्येन्द्रियाय। इमममुष्य पुत्रममुष्यै पुत्रमस्यै विशऽएषवोमी राजा सोमो स्माकम्ब्राह्मणानाꣳ राजा। ॐ स्वः, भुवः, भूः, ॐ सः, श्रौँ, श्रीँ ॐ, सोमाय नमः॥ $2\frac{40}{9}$॥ 'भौममन्त्रः'— अग्निर्मूर्धा इति मन्त्रस्य विरूपाङ्गिरसऋषिः। अग्निर्देवता। गायत्रीछन्दः। भौममन्त्रजपे विनियोगः—ॐ क्राँ, क्रीँ, क्रौँ, सः— भूर्भुवः स्वः— ॐ अग्निर्मूर्द्धा दिवःककुत्पतिः पृथिव्याऽअयम्। अपाꣳरेताꣳसि जिन्वति। * ॐ स्वः, भुवः, भूः, ॐ सः, क्रौँ, क्रीँ, क्राँ—ॐ भौमाय नमः। $3\frac{92}{3}$॥ 'सौम्यमन्त्रः'—

उद्बुध्य इति मन्त्रस्य परमेष्ठीऋषिः । बुधोदेवता । त्रिष्टुप्छन्दः । सौम्यमन्त्रजपे विनियोगः—ॐ ब्राँ, ब्रीं, ब्रौँ, सः— भुर्भुवः स्वः ॐ उद्बुध्यस्वाग्ने प्रतिजागृहि त्वमिष्टापूर्ते सꣳ सृजेथामयञ्च । अस्मिन्त्सधस्थेऽअध्युत्तरस्मिन्विश्वे देवा यजमानश्च सीदत । ॐ स्वः, भुवः, भूः, ॐ सः— ब्रौँ, ब्रीँ, ब्राँ, ॐ—सौम्याय नमः ॥ ४$\frac{६१}{१८}$ ॥ 'बृहस्पतिमन्त्रः' —बृहस्पत इति मन्त्रस्य गृत्समदऋषिः । ब्रह्मादेवता । त्रिष्टुप्छन्दः बार्हस्पत्यमन्त्रजपे विनियोगः—ॐ ह्राँ, ह्रीँ, ह्रौँ, सः भुर्भुवः स्वः— ॐ बृहस्पतेऽअतियदर्य्योऽअर्हाद्द्युमद्विभाति क्रतुमज्जनेषु । यद्दीदयच्छवस ऋतप्रजात तदस्मासुद्रविणन्धेहि चित्रम् । * ॐ स्वः, भुवः, भूः, ॐ सः—ह्रौँ, ह्रीँ, ह्राँ, ॐ बृहस्पतये नमः ॥ ५$\frac{३}{२६}$ ॥ 'शुक्रमन्त्रः'— अन्नात्परिस्रुत इति मन्त्रस्य प्रजापतिर्ऋषिः । अश्विसरस्वतीन्द्रादेवताः । जगतीछन्दः । शुक्रमन्त्रजपे विनियोगः—ॐ द्राँ, द्रीँ, द्रौँ, सः—भूर्भुवः स्वः— ॐ अन्नात्परिस्रुतो रसम्ब्रह्मणा व्यपिबत्क्षत्रम्पयꣳ सोमम्प्रजापतिः । ऋतेन सत्यमिन्द्रियं विपानꣳ शुक्रमन्धसऽइन्द्रस्येन्द्रियमिदम्पयोमृतम्मधु ॥ ॐ स्वः, भुवः, भूः ॐ सः—द्रौँ, द्रीँ, द्राँ, ॐ शुक्राय नमः ॥ ६$\frac{७५}{१९}$ ॥ 'शनिमन्त्रः'—शन्नो देवी इति मन्त्रस्य दध्यङ्ङाथर्वणऋषिः । आपोदेवता । गायत्रीछन्दः । शनिमन्त्रजपे विनियोगः— ॐ खाँ, खीँ, खौँ सः ॐ भूर्भुवः स्वः—ॐ शन्नो देवीरभिष्टयऽआपो भवन्तु पीतये । शं य्योरभिस्रवन्तु नः । ॐ स्वः, भुवः, भूः, ॐ सः—खौँ, खीँ, खाँ, ॐ शनैश्चराय नमः । ७$\frac{१३}{३६}$ 'राहुमन्त्रः'—कयानश्चित्र इति मन्त्रस्य वामदेवऋषिः । राहुर्दे[illegible] गायत्रीछन्दः । राहुमन्त्रजपे विनियोगः—ॐ भ्राँ, भ्रीँ, भ्रौँ, सः—ॐ भूर्भुवः स्वः—ॐ कयानश्चित्रऽआभुवदूती सदावृधꣳ सखा । कया शचिष्ठयावृता । ॐ स्वः, भुवः, भूः

ॐ सः—भ्रौँ, भ्रीँ, भ्राँ, ॐ राहवे नमः ॥ ८$\frac{४}{३६}$ ॥ 'केतु-मन्त्रः'— केतुं कृण्वन्निति मन्त्रस्य मधुच्छन्दाऋषिः । केतुर्देवता । गायत्री छन्दः । केतुमन्त्रजपे विनियोगः—ॐ प्रौँ, प्रीँ, प्राँ, सः—ॐ भूर्भुवः स्वः ॐ केतुङ्कृण्वन्न केतवे पेशो मर्य्याऽअपेशसे । समुषद्भिरजायथाः । ॐ स्वः, भुवः, भूः, ॐ सः—प्रौँ, प्रीँ प्राँ, ॐ केतवे नमः ॥ ९$\frac{३७}{३९}$ ॥ 'अर्पणम्'—अनेन अमुकग्रहमन्त्र-जपकर्मणाऽमुकग्रहरूपी परमेश्वरः प्रीयतां न मम ॥ ॥ इति वेदोक्तं सबीजं नवग्रहस्तोत्रम् ॥

५४०. अथ 'विष्णुपञ्जरस्तोत्रम्'—आचम्य (तूष्णीम्) ॥ 'सङ्कल्पः'—ॐ अस्य श्रीविष्णुपञ्जरस्तोत्रमन्त्रस्य नारदऋषिः अनुष्टुप् छन्दः श्रीविष्णुः परमात्मादेवता अहम्बीजम् सोऽहं शक्तिः ॐ ह्रीं कीलकम् मम (अमुकशर्मणः यजमानस्य अमुकबालकस्य वा) शरीरपीडायाः सद्यः परिहारार्थे तथा च भयसङ्कटादिनाशनार्थे जपे विनियोगः ॥ 'करन्यासाः'—ॐ नारदऋषये नमः—शिरसि । ॐ अनुष्टुप् छन्दसे नमः—मुखे । ॐ श्रीविष्णुपरमात्मदेवतायै नमः—हृदये । ॐ अहं बीजम्—गुह्ये । ॐ सोऽहं शक्तिः—पादयोः । ॐ ह्रीं कीलकम्—पादाग्रे । ॐ ह्रां, ह्रीं, ह्रूं, ह्रैं, ह्रौं, ह्रः—इति मन्त्रः । ॐ ह्रां—अङ्गुष्ठाभ्यां नमः । ॐ ह्रीं—तर्जनीभ्यां नमः । ॐ ह्रूं—मध्यमाभ्यां नमः । ॐ ह्रैं—अनामिकाभ्यां नमः । ॐ ह्रौं—कनिष्ठिकाभ्यां नमः । ॐ ह्रः—करतलकरपृष्ठाभ्यां नमः ॥ 'शरीरन्यासाः'—ॐ ह्रां—हृदयाय नमः । ॐ ह्रीं—शिरसे स्वाहा । ॐ ह्रूं—शिखायै—वषट् । ॐ ह्रैं—कवचाय हुम् । ॐ ह्रौं—नेत्रत्रयाय—वौषट् । ॐ ह्रः—अस्त्राय फट् ॥ 'प्राणायामाः'—ॐ अहम्बीजम् । ॐ अहम्बीजम् । ॐ अहम्बीजम् ॥ 'ध्यानम्'—परम्परस्मात् प्रकृतेरनादिमेकं संनिविष्टं बहुधा गुहायाम् । सर्वालयं सर्वचराचरस्थं नमामि विष्णुं जगदेकनाथम् । १ ॥ ॐ विष्णुपञ्जरकं दिव्यं सर्वदुष्टनिवारणम् । उग्रतेजो महावीर्यं सर्वशत्रुनिकृन्तनम् । २ ॥ त्रिपुरं दह्यमानस्य हरस्य ब्रह्मणोदितम् । तदहं सम्प्रवक्ष्यामि आत्मरक्षाकरं नृणाम् । ३ ॥ पादौ रक्षतु गोविन्दो जङ्घे चैव त्रिविक्रमः । ऊरू मे केशवः पातु कटिं चैव जनार्दनः । ४ ॥ नाभिं चैवाऽ

च्युतः पातु गुह्यं चैव तु वामनः। उदरं पद्मनाभश्च पृष्ठं चैव तु मा-
धवः। ५ ॥ वामपार्श्वे स्थितो विष्णुर्दक्षिणे मधुसूदनः। बाह्वोर्वै वासु-
देवश्च हृदि दामोदरस्तथा। ६ ॥ कण्ठं रक्षतु वाराहः कृष्णश्च मुखम-
ण्डले। माधवः कर्णमूले तु हृषीकेशश्च नासिके। ७ ॥ नेत्रे नारायणो
रक्षेत् ललाटे गरुडध्वजः। कपोलौ केशवो रक्षेद्वैकुण्ठः सर्वतोदिशम्। ८॥
श्रीवत्साङ्कश्च सर्वेषामङ्गानां भव रक्षकः। पूर्वस्यां पुण्डरीकाक्ष आग्नेय्यां
श्रीधरस्तथा। ९ ॥ दक्षिणे नारसिंहश्च नैर्ऋत्यां पातु माधवः। पुरुषो-
त्तमो मे वारुण्यां वायव्यां च जनार्दनः। १० ॥ गदाधरस्तु कौबेर्यामी-
शान्यां पातु केशवः। आकाशे च गदा पातु पाताले च सुदर्शनम्।११॥
सन्नद्धः सर्वगात्रेषु प्रविष्टो विष्णुपञ्जरः। विष्णुपञ्जरप्रविष्टोऽहं विचरामि
महीतले। १२ ॥ राजद्वारे पथे घोरे सङ्ग्रामे रिपुसङ्कटे। नदीषु च रणे
चैव चौरव्याघ्रभयेषु च। १३ ॥ डाकिनीभूतप्रेतेषु भयं तस्य न जा-
यते। रक्ष रक्ष महादेव रक्ष रक्ष जनेश्वर। १४ ॥ रक्षन्तु देवताः
सर्वा ब्रह्मविष्णुमहेश्वराः। जले रक्षतु वाराहः स्थले रक्षतु वामनः। १५॥
अटव्यां नारसिंहश्च सर्वतः पातु केशवः। दिवा रक्षतु मां सूर्यो रात्रौ
रक्षतु चन्द्रमाः। १६ ॥ पन्थानं दुर्गमं रक्षेत् सर्वमेव जनार्दनः। रोग-
विघ्नहतश्चैव ब्रह्महा गुरुतल्पगः। १७ ॥ स्त्रीहन्ता बालघाती च सुरापी
वृषलीपतिः। मुच्यते सर्वपापेभ्यो यः पठेन्नात्र संशयः। १८ ॥ अपुत्रो
लभते पुत्रं धनार्थी लभते धनम्। विद्यार्थी लभते विद्यां मोक्षार्थी लभते
गतिम्। १९ ॥ आपदा हरते नित्यं विष्णुस्तोत्रार्थसम्पदा। यस्त्विदं
पठते स्तोत्रं विष्णुपञ्जरमुत्तमम्। २० ॥ मुच्यते सर्वपापेभ्यो विष्णुलोकं
स गच्छति। गोसहस्रफलं तस्य वाजपेयशतानि च। २१ ॥ अश्वमेधस-
हस्रेण फलं प्राप्नोति मानवः। सर्वकामं लभेदस्य पठनान्नाऽत्र संशयः
। २२ ॥ जले विष्णुः स्थले विष्णुर्विष्णुः पर्वतमस्तके। ज्वालामालाकुले
विष्णुः सर्वं विष्णुमयं जगत्। २३ ॥ इति श्रीब्रह्माण्डपुराणे इन्द्रनारद-
संवादे विष्णुपञ्जरस्तोत्रम् ॥

८४१. अथ 'नारायणास्त्रम्'—हरिः—ॐ नमो भगवते श्रीनाराय-
णाय नमो नारायणाय विश्वमूर्तये नमः। श्रीपुरुषोत्तमाय युष्मद्दृष्टिप्रत्यक्षं
परोक्षं वा अजीर्णं पञ्चविषूचिकां हन हन। ऐकाहिक्यं द्व्याहिक्यं त्र्याहिक

चातुर्थिक्यं ज्वरं नाशय नाशय । चतुःशीतवातानष्टादशकुष्टान् अष्टादश–क्षयरोगान् हन हन । सर्वदोषान् भञ्जय भञ्जय । तत्सर्वान्नाशयं नाशय । शोषय शोषय । आकर्षय आकर्षय। शत्रून्मारय मारय। उच्चाटयोच्चाटय। विद्वेषय विद्वेषय। स्तम्भय स्तम्भय । निवारय निवारय। विघ्नैर्हन हन दह दह मथ मथ विध्वंसय विध्वंसय । चक्रं गृहीत्वा शीघ्रमागच्छागच्छ चक्रेण हत्वा परविद्यां छेदय छेदय भेदय भेदय।चतुःशीतानि विस्फोटय विस्फोटय । अर्शवातशूलदृष्टिसर्पसिंहव्याघ्रद्विपदचतुष्पदपदे बाह्यदिवि भुव्यन्तरिक्षे अन्येपि केचित् तद्वेषकान्सर्वान् हन हन । विद्युन्मेघनदीपर्वताटवीसर्वस्थानरात्रिदिनपन्थाचौरान् वशं कुरु कुरु ॥ "अथ मन्त्रः"—हरिः—ॐ नमो भगवते ह्रीं हुं फट्स्वाहा ठ ठ ठ ठ हृदयादत्ता । एषा विद्या महानाम्नी पुरा दत्ता शतक्रतवे । असुरानेव जित्वा तान्सर्वांश्च बलदानवान् ॥ यः पुमान्पठते भक्त्या वैष्णवो नियतात्मना । तस्य सर्वाणि हिंसन्ति यत्र दृष्टिगतं विषम् । अन्यदेहविषं चैव न देहे सङ्क्रमेद्ध्रुवम् । सङ्ग्रामे धारयत्यङ्गे स शत्रून् जयते क्षणात् ॥ अतः सद्यो जयस्तस्य विघ्नस्तस्य न जायते । किमत्र बहुनोक्तेन सर्वसौभाग्यसम्पदः ॥ लभते नात्र सन्देहो नान्यथा न भवेदिति । गृहीतो यदि वा येन बलिना विविधैरपि ॥ शीतं समुष्णतां याति चोष्णं शीतलतां व्रजेत् । नान्यथा भवते विद्या यः पठेत्कथितं मया ॥ भूर्जपत्रे लिखेन्मन्त्रं गोरोचनजलेन च । इमां विद्यां स्वके बध्वा सर्वरक्षां करोतु मे ॥ पुरुषस्याथवा स्त्रीणां हस्ते बध्वा विचक्षणः । विद्रवन्ति च विघ्नानि न भवन्ति कदाचन ॥ न भयं तस्य कुर्वन्ति गगने भास्करादयः । भूतप्रेतपिशाचाश्च ग्रामग्राहितडाकिनी ॥ शाकिनी तु महाघोरा वेतालाश्च महाबलाः । राक्षसाश्च महारौद्रा दानवा बलिनो हि ये॥ असुराश्च सुराश्चैव अष्टयोनिश्च देवता । सर्वत्र स्तम्भिता तिष्ठन्मन्त्रोच्चारणमात्रतः ॥ सर्वहत्याः प्रणश्यन्ति सर्वं फलति नित्यशः । सर्वे रोगा विनश्यन्ति विघ्नस्तस्य न बाधते ॥ उच्चाटनेऽपराह्ले तु सन्ध्यायां मारणे तथा । शान्तिके चार्धरात्रे तु ततोऽर्थः सर्वकर्मकैः ॥ इदं मन्त्ररहस्यं च नारायणास्त्रमेव च । त्रिकालं जपते नित्यं जयं प्राप्नोति मानवः ॥ आयुरारोग्यमैश्वर्यं ज्ञानं विद्यां पराक्रमम् । चिन्तितार्थसुखप्राप्तिं लभते नात्र संशयः ॥ इति नारायणास्त्रम् ॥

५४२. अथ 'गणपतिस्तोत्रम्'—प्रणम्य शिरसा देवं गौरीपुत्रं विनायकम् । भक्त्या व्यासं स्मरेन्नित्यमायुःकामार्थसिद्धये । १ ॥ प्रथमं वक्रतुण्डं च एकदन्तं द्वितीयकम् । तृतीयं कृष्णपिङ्गाक्षं गजवक्त्रं चतुर्थकम् । २ ॥ लम्बोदरं पञ्चमं च षष्ठं विकटमेव च । सप्तमं विघ्नराजेन्द्रं धूम्रवर्णं तथाष्टमम् । ३ ॥ नवमं भालचन्द्रं च दशमं तु विनायकम् । एकादशं गणपतिं द्वादशं तु गजाननम् । ४ ॥ एतानि द्वादशनामानि त्रिसन्ध्यं यः पठेन्नरः । न च विघ्नभयं तस्य सर्वसिद्धिर्भवेद्ध्रुवम् । ५ ॥ विद्यार्थी लभते विद्यां धनार्थी लभते धनम् । पुत्रार्थी लभते पुत्रं मोक्षार्थी लभते गतिम् । ६ ॥ जपेद्गणपतिस्तोत्रं षड्भिर्मासैः फलं लभेत् । संवत्सरेण सिद्धिं च लभेच्चात्र न संशयः । ७ ॥ अष्टौ वै ब्राह्मणान् जातु लिखित्वा यः समर्पयेत् । तस्य विद्या भवेत्सद्यो गणेशस्य प्रसादतः । ८ ॥ इति श्रीनारदपुराणे गौरीहरसंवादे गणपतिस्तोत्रम् ॥

५४३. अथ 'आदित्यस्तोत्रम्'—आदित्यः प्रथमं नाम द्वितीयं तु दिवाकरः । तृतीयं भास्करः प्रोक्तः चतुर्थं तु प्रभाकरः । १ ॥ पञ्चमं तु सहस्रांशुः षष्ठं त्रैलोक्यलोचनः । सप्तमं हरिदश्वश्च अष्टमं तु विभाकरः । २ ॥ नवमं दिनकरः प्रोक्तः दशमं द्वादशात्मकः । एकादशं त्रयोमूर्तिर्द्वादशं सूर्य एव च । ३ ॥ द्वादशादित्यनामानि प्रातःकाले पठेन्नरः । दुःस्वप्नो नश्यते तस्य सर्वदुःखं च नश्यति । ४ ॥ दद्रुकुष्ठहरं चैव दारिद्र्यं हरते ध्रुवम् । यः पठेत्प्रातरुत्थाय भक्त्या नित्यमिदं नरः ।५॥ सौख्यमायुस्तथारोग्यं लभते मोक्षमेव च । अग्निमीळे नमस्तुभ्यं इषेत्त्वोर्जःस्वरूपिणे । ६ ॥ अग्न आयाहि वीतये नमस्ते ज्योतिषां पते । शन्नोदेवि नमस्तुभ्यं जगच्चक्षुर्हि ते नमः । ७ ॥ पद्मासनः पद्मकरः पद्मगर्भसमद्युतिः । सप्ताश्वरथसंयुक्तो द्विभुजः स्यात्सदा रविः । ८ ॥ आदित्यस्य नमस्कारं ये कुर्वन्ति दिने दिने । जन्मान्तरसहस्रेषु दारिद्र्यं नोपजायते ॥ ९ ॥ इति आदित्यस्तोत्रम् ॥

५४४. अथ 'श्रीमहालक्ष्मीस्तोत्रम्'—नमोस्तु ते महामाये श्रीपीठे विश्वपूजिते । शङ्खचक्रगदाहस्ते महालक्ष्मि नमोस्तु ते । १ ॥ नमस्ते गरुडारूढे कोल्हासुरभयङ्करि । कौमारी वैष्णवी ब्राह्मी महाल

क्ष्मि नमोस्तु ते। २॥ सर्वदा सर्ववरदे सर्वदुष्टभयङ्करि। सर्वसिद्धिप्रदे देवि महालक्ष्मि नमोस्तु ते। ३॥ सर्वसिद्धिप्रदे देवि भुक्तिमुक्तिप्रदायिनी। मन्त्रमूर्तिः सदा वन्द्ये महालक्ष्मि नमोस्तु ते। ४॥ आद्यन्तरहिते देवि आदिशक्ति महेश्वरि। योगिनी योगसम्भूतिर्महालक्ष्मि नमोस्तु ते। ५॥ पद्माक्षी वै महामाये महालक्ष्मि नमोस्तु ते। परमेश्वरि महामाये महालक्ष्मि नमोस्तु ते। ६॥ श्वेताम्बरधरे देवि नानालङ्कारभूषिते। मन्त्रमूर्तिः सदा वन्द्ये महालक्ष्मि नमोस्तु ते। ७॥ स्थूले सूक्ष्मे महारौद्रे महाशान्ति महोदरे। महापापहरे देवि महालक्ष्मि नमोस्तु ते। ८॥ महालक्ष्म्यष्टकमिदं पठते भक्तितो नरः। दुःखदारिद्र्यशान्तिश्च राज्यप्राप्तिश्च शाश्वती। ९॥ कालमेकं पठेन्नित्यं महापातकनाशनम्। द्विकालं पठते नित्यं सर्वशत्रुविनाशनम्। १०॥ त्रिकालं पठते नित्यं प्रसादो हि भवेत् खलु। यः पठेत्प्रयतो नित्यं दारिद्र्यं नोपजायते। ११॥ सर्वमङ्गलमाङ्गल्ये शिवे सर्वार्थसाधिके। शरण्ये त्र्यम्बके गौरि नारायणि नमोस्तु ते। १२॥ ॥ इति श्रीमहालक्ष्मीस्तोत्रम्॥

## आत्मविद्याविचारः

५४५. अथ 'महापुरुषविद्या'—जितं ते पुण्डरीकाक्ष नमस्ते विश्वभावन। सुब्रह्मण्य नमस्तेऽस्तु महापुरुष पूर्वज। १॥ नमो हिरण्यगर्भाय प्रधानाव्यक्तरूपिणे। ॐ नमो वासुदेवाय शुद्धज्ञानस्वरूपिणे। २॥ देवानां दानवानां च सामान्यमसि दैवतम्। सर्वदा चरणद्वन्द्वं व्रजामि शरणं तव। ३॥ एकस्त्वमसि लोकस्य स्रष्टा संहारकस्तथा। अध्यक्षश्चानुमन्ता च गुणमायासमावृतः। ४॥ संसारसागरं घोरमनन्तं क्लेशभाजनम्। त्वामेव शरणं प्राप्य निस्तरन्ति मनीषिणः। ५॥ न ते रूपं न चाकारो नायुधानि न चास्पदम्। तथाऽपि पुरुषाकारो भक्तानां त्वं प्रकाशसे। ६॥ नैव किञ्चित्परोक्षं ते प्रत्यक्षोऽसि न कस्यचित्। नैव किञ्चिदसाध्यं ते न च साध्योऽसि कस्यचित्। ७॥ कार्याणां कारणं पूर्वं वचसां वाच्यमुत्तमम्। योगिनां परमां सिद्धिं परमं ते पदं विदुः। ८॥ अहं भीतोऽस्मि देवेश संसारेऽस्मिन्महाभये। त्राहि मां

पुण्डरीकाक्ष न जाने शरणे परम् । ९ ॥ कालेष्वपि च सर्वेषु दिक्षु सर्वासु चाच्युत । शरीरेऽपि गतौ चापि वर्तते मे महद्भयम् । १० ॥ त्वत्पादकमलादन्यन्न मे जन्मान्तरेष्वपि । निमित्तं कुशलस्यास्ति येन गच्छामि सद्गतिम् ॥ ११ ॥ विज्ञानं यदिदं प्राप्तं यदिदं ज्ञानमर्जितम् । जन्मान्तरेऽपि मे देव माभूदस्य परिक्षयः । १२ ॥ दुर्गतावपि जातायां त्वं गतिस्त्वं मतिर्मम । यदि नाथं च विंदेयं तावतास्मि कृती सदा । १३ ॥ आकामकलुषं चित्तं मम ते पादयोः स्थितम् । कामये वैष्णवत्वं तु सर्वजन्मसु केवलम् । १४ ॥ इति महापुरुषविद्या ॥

५४६. अथ 'रामहृदयम्'—श्रीमहादेव उवाच—ततो रामः स्वयं प्राह हनुमन्तमुपस्थितम् । शृणु तत्वं प्रवक्ष्यामि ह्यात्मानात्मपरात्मनाम् । १ ॥ आकाशस्य यथा भेदस्त्रिविधो दृश्यते महान् । जलाशये महाकाशस्तदवच्छिन्न एवहि । २ ॥ प्रतिबिम्बाख्यमपरं दृश्यते त्रिविधं नभः । बुद्ध्यवच्छिन्नचैतन्यमेकं पूर्णमथापरम् । ३ ॥ आभासस्त्वपरं बिम्बभूतमेवं त्रिधा चितिः । साभासबुद्धेः कर्तृत्वमविच्छिन्नेऽविकारिणि । ४ ॥ साक्षिण्यारोप्यते भ्रान्त्या जीवत्वं च तथाऽबुधैः । आभासस्तु मृषाबुद्धिरविद्याकार्यमुच्यते । ५ ॥ अविच्छिन्नं तु तद् ब्रह्म विच्छेदस्तु विकल्पितः । अविच्छिन्नस्य पूर्णेन एकत्वं प्रतिपाद्यते । ६ । तत्वमस्यादिवाक्यैश्च साभासस्याहमस्तथा । ऐक्यज्ञानं यदोत्पन्नं महावाक्येन चात्मनोः । ७ ॥ तदा विद्या स्वकार्यैश्च नश्यत्येव न संशयः । एतद्विज्ञाय मद्भक्तो मद्भावायोपपद्यते । ८ ॥ मद्भक्तिविमुखानां हि शास्त्रगर्तेषु मुह्यताम् । न ज्ञानं न च मोक्षः स्यात्तेषां जन्मशतैरपि । ९ ॥ इदं रहस्यं हृदयं ममात्मनो मयैव साक्षात् कथितं तवानघ । मद्भक्तिहीनाय शठाय न त्वया दातव्यमैन्द्रादपि राज्यतोऽधिकम् । १० ॥ इति श्रीमदध्यात्मरामायणे बालकाण्डे रामहृदयम् ॥

५४७. अथ 'चतुःश्लोकीभागवतम्.' श्रीभगवानुवाच—ज्ञानं परमगुह्यं मे यद्विज्ञानसमन्वितम् । सरहस्यं तदङ्गं च गृहाण गदितं मया । १ ॥ यावानहं यथाभावो यद्रूपगुणकर्मकः । तथैव तत्वविज्ञानमस्तु ते मदनुग्रहात् । २ ॥ अहमेवासमेवाग्रे नान्यद्यत् सदसत्परम् । पश्चादहं यदेतच्च योवशिष्येत सोऽस्म्यहम् । ३ ॥ ऋतेऽर्थं यत् प्रतीयेत न प्रती-

येत चात्मनि । तद्विद्यादात्मनो मायां यथा भासो यथा तमः । ४ ॥ यथा महान्ति भूतानि भूतेषूच्चावचेष्वनु । प्रविष्टान्यप्रविष्टानि तथा तेषु न तेष्वहम् । ५ ॥ एतावदेव जिज्ञास्यं तत्वजिज्ञासुनात्मनः । अन्वयव्यतिरेकाभ्यां यत्स्यात् सर्वत्र सर्वदा । ६ ॥ एतन्मतं समातिष्ठ परमेण समाधिना । भवान्कल्पविकल्पेषु न विमुह्यति कर्हिचित् । ७ ॥ इति चतुःश्लोकीभागवतम् ॥

**५४८. अथ 'सप्तश्लोकीगीता'**—ओमित्येकाक्षरं ब्रह्म व्याहरन्मामनुस्मरन् । यः प्रयाति त्यजन्देहं स याति परमां गतिम् । १ ॥ स्थाने हृषीकेश तव प्रकीर्त्या जगत् प्रहृष्यत्यनुरज्यते च । रक्षांसि भीतानि दिशो द्रवन्ति सर्वे नमस्यन्ति च सिद्धसङ्घाः । २ ॥ सर्वतः पाणिपादं तत्सर्वतोक्षिशिरोमुखम् । सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति । ३ ॥ कविं पुराणमनुशासितारमणोरणीयांसमनुस्मरेद्यः । सर्वस्य धातारमचिन्त्यरूपमादित्यवर्णं तमसः परस्तात् । ४ ॥ ऊर्ध्वमूलमधःशाखमश्वत्थं प्राहुरव्ययम् । छन्दांसि यस्य पर्णानि यस्तं वेद स वेदवित् । ५ ॥ सर्वस्य चाहं हृदि सन्निविष्टो मत्तः स्मृतिर्ज्ञानमपोहनं च । वेदैश्च सर्वैरहमेव वेद्यो वेदान्तकृद्वेदविदेव चाहम् । ६ ॥ मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु । मा मेवैष्यसि युक्त्वैवमात्मानं मत्परायणः । ७ ॥ इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे सप्तश्लोकीगीता ॥

**५४९. 'अथाऽत्मषट्कस्तोत्रम्'**—मनोबुद्ध्यहङ्कारचित्तानि नाहं न च श्रोत्रजिह्वे न च घ्राणनेत्रे । न च व्योमभूमी न तेजो न वायुश्चिदानन्दरूपः शिवोहं शिवोहम् । १ ॥ अहं प्राणवर्गो न पञ्चानिला मे न तोयं न मे धातवो नैव कोशाः । न वाक् पाणिपादौ न चोपस्थपायू चिदा० । २ ॥ न मे द्वेषरागौ न मे लोभमोहौ मदो नैव मे नैव मात्सर्यभावः । न धर्मो न चार्थो न कामो न मोक्षश्चिदा० । ३ ॥ न पुण्यं न पापं न सौख्यं न दुःखं न मन्त्रो न तीर्थं न वेदा न यज्ञाः । अहं भोजनं नैव भोज्यं न भोक्ता चिदा० । ४ ॥ न मे मृत्युशङ्का न मे जातिभेदः पिता नैव मे नैव माता न जन्म । न बन्धुर्न मित्रं गुरुर्नैव शिष्यश्चिदा० । ५ ॥ अहं निर्विकल्पो निराकाररूपो विभुर्व्याप्य सर्वत्र सर्वेन्द्रियाणि । सदा मे समत्वं न मुक्तिर्न बन्ध-

श्चिदा० । ६ ॥ इति श्रीमच्छङ्कराचार्यविरचितमात्मषट्कस्तोत्रं समाप्तम् ॥

५५०. अथ 'गर्भोपनिषत्'—ॐ पञ्चात्मकं पञ्चसु वर्त्तमानं षडाश्रयं षड्गुणयोगयुक्तम् । तं सप्तधातुं त्रिमलं द्वियोनिं चतुर्विधाहारमयं शरीरम् ॥ पञ्चात्मकमिति कस्मात् पृथिव्यापस्तेजो वायुराकाशमित्यस्मिन् पञ्चात्मके शरीरे का पृथिवी का आपः किं तेजः को वायुः किमाकाशम् । तत्र पञ्चात्मके शरीरे यत्कठिनं सा पृथिवी यद्द्रवं ता आपः यदुष्णं तत्तेजः यत्सञ्चरति स वायुः यच्छुषिरं तदाकाशम् । तत्र पृथिवी धारणे आपः पिण्डीकरणे तेजः प्रकाशने वायुर्व्यूहने आकाशमवकाशप्रदाने पृथक्कृ । श्रोत्रं शब्दोपलब्धौ त्वक् स्पर्शे चक्षुषी रूपे जिह्वारसने नासिका घ्राणे उपस्थ आनन्दने अपानमुत्सर्गे बुद्ध्या बुद्ध्यति मनसा सङ्कल्पयति वाचा वदति षडाश्रयमिति कस्मात् मधुराम्ल-लवण-तिक्त-कटु-कषाय-रसान् विन्दतीति षड्जर्षभगान्धारमध्यमपञ्चमधैवतनिषादाश्चेतीष्टानिष्ट-शब्दसंज्ञाः प्रणिधानाद्दशविधा भवन्ति । १ ॥ सप्तधातुकमिति कस्मात् शुक्लो रक्तः कृष्णो धूम्रः पीतः कपिलः पाण्डुर इति । यथा देवदत्तस्य द्रव्यादिविषया जायन्ते । परस्परं सौम्यगुणत्वात् षड्विधो रसः रसाच्छोणितं शोणितान्मांसं मांसान्मेदो मेदसः स्नायवः स्नायुभ्योऽस्थीनि अस्थिभ्यो मज्जा मज्जातः शुक्रं शुक्रशोणितसंयोगादावर्त्तते गर्भो हृदि व्यवस्थां नयति हृदयेन्तराग्निः अग्निस्थाने पित्तं पित्तस्थाने वायुः वायुतो हृदयं प्राजापत्यात् क्रमात् । २ ॥ ऋतुकाले सम्प्रयोगादेकरात्रोषितं कललं भवति सप्तरात्रोषितं बुद्बुदं अर्द्धमासाभ्यन्तरे पिण्डं मासाभ्यन्तरे कठिनं मासद्वयेन शिरः मासत्रयेण पादप्रदेशः चतुर्थे गुल्फ-जठर-कटिप्रदेशाः पञ्चमे पृष्ठवंशः षष्ठे मुखनासिकाक्षि-श्रोत्राणि सप्तमे जीवेन संयुक्तः अष्टमे सर्वलक्षणसम्पूर्णः । पितू रेतोऽतिरेकात्पुरुषः मातू रेतोऽतिरेकात्स्त्री उभयोर्बीजतुल्यत्वान्नपुंसकं व्याकुलितमनसोऽन्धा खञ्जाः कुब्जा वामना भवन्ति । अन्योन्यवायु-परिपीडित-शुक्रद्वैध्याद्द्विधा तनुः स्याद्युग्माः प्रजायन्ते पञ्चात्मकः समर्थः पञ्चात्मिका चेतसा बुद्धिर्गन्धरसादि-ज्ञानाक्षराक्षरमोङ्कारं चिन्तयतीति तदेकाक्षरं ज्ञात्वाष्टौ प्रकृतयः षोडश विकाराः शरीरे तस्यैव देहिनः । अथ मात्राशितपीतनाडीसूत्रगतेन प्राण आप्यायते। अथ नवमे मासि सर्वलक्षणज्ञानसम्पूर्णो भवति पूर्वजातिं स्मरति शुभाशुभञ्च

कर्म विन्दति । ३ ॥ पूर्वं योनि-सहस्राणि दृष्ट्वा चैव ततो मया । आहारा विविधा भुक्ताः पीता नानाविधाः स्तनाः । जातश्चैव मृतश्चैव जन्म चैव पुनः पुनः । मया परिजनस्यार्थे कृतं कर्म शुभाशुभम् । एकाकी तेन दह्येऽहं गतास्ते फलभोगिनः । अहो दुःखोदधौ मग्नो न पश्यामि प्रतिक्रियाम् । यदि योन्याः प्रमुच्येऽहं तत्प्रपद्ये महेश्वरम् ॥ अशुभक्षयकर्त्तारं फलमुक्ति-प्रदायकम् । यदि योन्याः प्रमुच्येऽहं तत्प्रपद्ये जनार्दनम् । अशुभक्षयकर्त्तारं फलमुक्तिप्रदायकम् । यदि योन्याः प्रमुच्येऽहं तत्सांख्यं योगमभ्यसे ॥ अशुभक्षयकर्त्तारं फलमुक्तिप्रदायकम् । यदि योन्याः प्रमुञ्चामि ध्याये ब्रह्म सनातनम् । अथ योनिद्वारं सम्प्राप्तो यन्त्रेणापीड्यमानो महता दुःखेन जातमात्रस्तु वैष्णवेन वायुना संस्पृष्टस्तदा न स्मरति जन्ममरणानि न च कर्म शुभाशुभं विन्दति । ४ ॥ शरीरमिति कस्मात् अग्नयो ह्यत्र श्रियन्ते ज्ञानाग्निर्दर्शनाग्निः कोष्ठाग्निरिति तत्र कोष्ठाग्निर्नामाशितपीतलेह्यचोष्यं पचति । दर्शनाग्नी रूपाणां दर्शनं करोति । ज्ञानाग्निः शुभाशुभं च कर्म विन्दति त्रीणि स्थानानि भवन्ति मुखे आहवनीय उदरे गार्हपत्यो हृदि दक्षिणाग्निः आत्मा यजमानो मनो ब्रह्मा लोभादयः पशवो धृतिर्दीक्षा सन्तोषश्च बुद्धीन्द्रियाणि यज्ञपात्राणि कर्मेन्द्रियाणि हवींषि शिरः कपालं केशा दर्भाः मुखमन्तर्वेदिः चतुष्कपालं शिरः षोडशपार्श्वदन्तपटलानि सप्तोत्तरं मर्मशतं साशीतिकं सन्धिशतं सनवकं स्नायुशतं सप्त शिराशतानि पञ्चमज्जाशतानि अस्थीनि च हवै त्रीणि शतानि षष्टिः सार्द्धचतस्रो रोमाणि कोट्यो हृदयं पलान्यष्टौ द्वादशपला जिह्वा पित्तं प्रस्थं कफस्याढकं शुक्रं कुडवं मेदः प्रस्थौ द्वावनियतं मूत्रपुरीषमाहारपरिमाणात् । पैप्पलादं मोक्षशास्त्रं पैप्पलादं मोक्षशास्त्रमिति ॥ इति गर्भोपनिषत् ॥

५५१. 'अथ आरुणेयोपनिषत्'—ॐ आरुणिः प्रजापतेर्लोकं जगाम तं गत्वोवाच केन भगवन् कर्माण्यशेषतो विसृजामीति । तं होवाच प्रजापतिस्तव पुत्रान् भ्रातॄन् बन्ध्वादीन् शिखां यज्ञोपवीतं च यागञ्च स्वाध्यायञ्च भूर्लोकभुवर्लोकस्वर्लोकमहर्लोकजनोलोकतपोलोकसत्यलोकञ्च अतलपातालवितलसुतलरसातलमहातलतलातलं ब्रह्माण्डञ्च विसृजेत् दण्डमाच्छादनञ्च कौपीनञ्च परिग्रहेत् शेषं विसृजेदिति । १ ॥ गृहस्थो

ब्रह्मचारी वा वानप्रस्थो वा उपवीतं शिखां भूमावप्सु वा विसृजेत् लौकिकाग्नीनुदराग्नौ समारोपयेत् गायत्रीञ्च स्ववाचाग्नौ समारोपयेत् कुटीचरो ब्रह्मचारी कुटुम्बं विसृजेत् पात्रं विसृजेत् पवित्रं विसृजेत् दण्डान् लोकांश्च विसृजेदिति होवाच अत ऊर्ध्वममन्त्रवदाचरेत् ऊर्ध्वगमनं विसृजेत् औषधवदशनमाचरेत् त्रिसन्ध्यादौ स्नानमाचरेत् सन्धिं समाधावात्मन्याचरेत् सर्वेषु वेदेष्वारण्यकमावर्त्तयेदुपनिषदमावर्त्तयेदुपनिषदमावर्त्तयेदिति । २ ॥ खल्वहं ब्रह्मसूचनात् सूत्रं ब्रह्मसूत्रमहमेव विद्वान् त्रिवृत्सूत्रं त्यजेद्विद्वान् य एवं वेद कामक्रोधहर्षरोषलोभमोहदम्भदर्पासत्यादीन् परित्यजेत् वर्षासु ध्रुवः शीतलोष्णौ मासावेकाकी यतिश्चरेत् द्वावेव वा विचरेद्द्वावेव वा विचरेदिति । ३ ॥ खलु वेदार्थं यो विद्वान् सोपनयनादूर्ध्वमेतानि प्राग्वा त्यजेत् पितरं पुत्रमग्न्युपवीतं कर्म कलत्रञ्चान्यदपीह सन्न्यस्तं मया सन्न्यस्तं मया सन्न्यस्तं मयेति त्रिःकृत्वोर्ध्वं वैणवं दण्डं कौपीनं च परिग्रहेन्नान्यत् । अथ भिक्षाचर्यञ्चरति ब्रह्मचर्यमहिंसाञ्चापरिग्रहञ्च सत्यञ्च यत्नेन हे रक्षत हे रक्षत इति । ४ ॥ अथातःपरमहंसपरिव्राजकानामासनशयनादिकं भूमौ ब्रह्मचर्यं मृत्पात्रमलाबुपात्रं दारुपात्रं वा यतीनां यतयो हि भिक्षार्थं ग्रामं प्रविशन्त्युदरपात्रं पाणिपात्रं वा । ओंहि ओंहि ओंहीत्येतदुपनिषदं विन्यसेत् खल्वेतदुपनिषदं विद्वान् य एवं वेद पालाशं बैल्वमाश्वत्थं दण्डमजिनं मेखलां यज्ञोपवीतं च त्यक्त्वा शूरो य एवं वेद । तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः । दिवीव चक्षुराततम् । तद्विप्रासो विपन्यवो जागृवांसः समिन्धते । विष्णोर्यत्परमं पदमिति एवं निर्वाणमनुशासनमिति वेदानुशासनमिति वेदानुशासनमिति । ५ ॥ इत्यथर्ववेदे आरुणेयोपनिषत् ॥

५५२. अथ 'ईशावास्यम्'[1]—ॐ ईशावास्यमिदꣳ सर्वं यत्किञ्च जगत्यां जगत् । तेन त्यक्तेन भुञ्जीथा मा गृधः कस्य स्विद्धनम् । १ ॥ कुर्वन्नेवेह कर्माणि जिजीविषेच्छतꣳ समाः । एवन्त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे । २ ॥ असुर्या नाम ते लोकाऽअन्धेन

(१) इममध्यायं रात्रौ न पठन्तीति साम्प्रदायो वर्तते ॥

तमसा वृताः। ताँस्ते प्रेत्यापि गच्छन्ति ये के चात्महनो जनाः। ३॥ अनेजदेकम्मनसो जवीयो नैनद्देवाऽ आप्नुवन्पूर्वमर्शत्। तद्धावतोन्यानत्त्येति तिष्ठत्तस्मिन्नपो मातरिश्वा दधाति।४॥ तदेजति तन्नैजति तद्दूरे तद्वदन्तिके। तदन्तरस्य सर्वस्य तदु सर्वस्यास्य बाह्यतः।५॥ यस्तु। सर्वाणि भूतान्यात्मन्नेवानुपश्यति। सर्वभूतेषु चात्मानन्ततो न विचिकित्सति।६॥ यस्मिन्त्सर्वाणि। भूतान्यात्मैवाभूद्विजानतः। तत्र को मोहः कः शोकऽएकत्वमनुपश्यतः।७। सपर्य्यगाच्छुक्रमकायमव्रणमस्नाविरꣳ शुद्धमपापविद्धम्। कविर्म्मनीषी परिभूः स्वयम्भूर्य्याथातत्थ्यतोर्त्थान्व्यदधाच्छाश्वतीभ्यः समाभ्यः।८॥ अन्धन्तमः। प्रविशन्ति ये सम्भूतिमुपासते। ततो भूयऽइव ते तमो यऽउ सम्भूत्याꣳ रताः।९॥ अन्यदेवाहुः संम्भवादन्यदाहुरसम्भवात्। इति शुश्रुम धीराणां ये नस्तद्विचचक्षिरे।१०॥ सम्भूतिञ्च। विनाशञ्च यस्तद्वेदोभयꣳसह। विनाशेन मृत्युन्तीर्त्वा सम्भूत्यामृतमश्नुते।११॥ अन्धन्तमः प्रविशन्ति ये विद्यामुपासते। ततो भूयऽइव ते तमो यऽउ विद्यायाꣳ रताः।१२॥ अन्यदेवाहुर्विद्यायाऽअन्यदाहुरविद्यायाः। इति शुश्रुमधीराणां ये नस्तद्विचचक्षिरे।१३॥ विद्याञ्चाविद्याञ्च यस्तद्वेदोभयꣳसह। अविद्यया मृत्युन्तीर्त्वा विद्ययामृतमश्नुते।१४॥ वायुरनिलममृतमथेदम्भस्मान्तꣳ शरीरम्। ॐ ३ म। क्रतो स्मर। क्लिबे स्मर। कृतꣳस्मर।१५॥ अग्ने नय। सुपथा रायेऽअस्मान्विश्वानि देव

व्वयुनानि व्विद्वान् । युयोद्ध्यस्म्मज्जुहुराणमेनो भूयिष्ठान्ते नमऽउक्तिं व्विधेम । १६ ॥ हिरण्मयेन पात्रेण । सत्त्यस्यापिहितम्मुखम् । यो सावादित्त्ये पुरुषः सो सावहम् । १७ ॥ ॐ ३ म । खम्ब्रह्म ॥ इति वाजसनेयसꣳहितायान्दीर्घपाठे चत्त्वारिꣳशत्तमोऽध्यायः ॥ इति ईशावास्यम् ॥

५५३. अथ 'दक्षिणद्वारनिर्णयः'—क्षीराम्भोनिधिमध्यगेसुलसिते चिन्तामणेरालये गीर्वाणद्रुमवाटिकापरिवृत्ते सिद्ध्यष्टकेऽनावृते । वैडूर्याष्टदलाम्बुजे जनकजायुक्तं बृहत्तारकं सानन्दं तदुपास्महे परतरं रामाभिधानं महः ॥ इह किल पूर्तादौ मण्डपप्रतिष्ठायां दक्षिणद्वारं याजुषाणामिति निश्चितम् ॥ तदुक्तं मात्स्ये—बह्वृचौ पूर्वतः स्थाप्यौ दक्षिणे तु यजुर्विदौ । सामगौ पश्चिमे तद्वदुत्तरेण त्वथर्वणौ ॥ अत्र तैत्तिरीया विवदन्ते ॥ अस्माभिरेव पूर्वयजुष्ट्वात्तत्र स्थेयम् ॥ तन्न । तेषां पूर्वत्वाभावात् । तथाहि वेदविभागात्पूर्वमेव दीर्घदर्शितया भगवता भास्करेण सारभागोद्धरणाच्छुक्लानामेव पूर्वत्वं सारत्वं चोक्तम् । किञ्चमाध्यन्दिनी तु या शाखा सर्वसाधारणी हि सा । तामेव च पुरस्कृत्य वसिष्ठेन प्रभाषितमिति कल्पद्रुमे वसिष्ठवचनात् ॥ सर्वेषु वेदमात्रेषु साधारणी तारतम्यरहितेति तस्यार्थः ॥ कात्यायनोऽपि सर्वानुक्रमस्यारम्भे—मण्डलं दक्षिणमक्षिहृदयं चाधिष्ठितं येन शुक्लानि यजूꣳषि भगवान् याज्ञवल्क्यो यतः प्राप्तः तं विवस्वन्तं त्रयीमयमर्चिष्मन्तमभिध्याय माध्यन्दिनीयवाजसनेयके यजुर्वेदाम्नाये सर्के सखिले सशुक्रिये इति । अत्र यजुर्वेदाम्नाय इति वेदाम्नायशब्दयोः पर्यायत्वाद्विरुक्तिः प्रसज्येतेति आम्नायशब्दो मुख्यार्थकः । एवं च शुक्लानां मुख्यत्वं भगवता सूत्रकारेणाऽपि प्रतिपादितम् । अत एव होलिभाष्ये—यजुर्वेदस्य मूलं हि भेदो माध्यन्दिनीयकः । सर्वानुक्रमणी तस्याः कात्यायनकृता तु येति ॥ शौनकोऽपि—यजुर्वेदलक्षणकथनमुखेन शुक्लानां मुख्यत्वं प्रतिपादितवान् । यथा मन्त्रब्राह्मणयोर्वेदस्त्रिगुणं यत्र पठ्यते । यजुर्वेदः स विज्ञेयो ह्यन्ये शाखान्तराः स्मृताः ॥ अस्यार्थः—मन्त्रब्राह्मणयोर्वेदसंज्ञ यत्र मन्त्रब्राह्मणात्मके वेदे त्रिगुणं विधिविधेयतर्करूपं पठ्यते । तथा च

भगवता सूत्रकारेण वेदलक्षणमुक्तम्—विधिर्विधेयं तर्कश्च वेद इति । अस्यार्थः—विधिर्विधायकं वाक्यम् । विधेयो मन्त्रः तर्कोऽर्थवादः । एतत्त्रयं माध्यन्दिनीयवेदे एव पठ्यते नान्यत्र ॥ तथा च शतपथे—सोऽसावाज्यमधिश्रयतीषेत्वेति वृष्ट्यै तदाह । यदाहेषेत्वेति अत्र सोऽसावाज्यमधिश्रयतीति विधिः । इषेत्वेति विधेयो मन्त्रः वृष्ट्यै इत्याद्यर्थवादः ॥ शुद्धमालायामन्यथैव त्रिगुणत्वमुक्तम्—माध्यन्दिनयजुर्वेदे खं ब्रह्मान्तमुदाहृतम् । तारपूर्वं हि त्रिगुणं नान्यशाखासु मुख्यतः ॥ पराशरोऽप्येवमेवाह—समाप्य चोत्तरादिर्यन्मन्त्रब्राह्मणयोर्द्विजाः ॥ ॐ खं ब्रह्मेति यो ध्यायन् दर्शकश्चोपवेधसः ॥ ओङ्कारस्त्रिगुणः प्रोक्तः खं ब्रह्म त्रिगुणं तथा । माध्यन्दिनीयशाखायां यजुर्वेदे पठन्ति हीति ॥ यद्वा—ऋषिच्छन्दोदैवतरूपं त्रिगुणं यत्र पठ्यते । मन्त्रब्राह्मणात्मके वेदे स यजुर्वेदो मुख्यः ॥ अत एव श्रीमतानन्तदेवेन खं ब्रह्मान्तताया अभावाद्गौणत्वं काण्वशाखीयानामप्युक्तम् ॥ श्रुतिरपि तेषां गौणत्वमाह । तानीमानि शुक्लानि यजूंषि वाजसनेयेन याज्ञवल्क्येनाख्यायन्ते इति ॥ एवमेतेषां यजुषां शुक्लत्वं प्रतिपादयन्त्या श्रुत्या तेषामर्थात्कृष्णत्वमुक्तं भवति ॥ उभयोरेकपण्डित इत्युक्त्या इतरस्य बालिशत्ववत् ॥ व्याख्यातं च गङ्गाभट्टैः । शुक्लानि शुद्धानि । श्रीभगवत्पादैरपि ॥ शुक्लानि शुभ्राणीत्येतदिति ॥ एवं च तेषां शुभ्रत्वशुद्धत्वे वदद्भ्यां श्रीभगवत्पादगङ्गाभट्टाभ्यामर्थादन्येषामशुद्धत्वकृष्णत्वे सूचिते ॥ अत एव वेदभाष्यकारेण शुक्लानीत्यस्य शुद्धानि शुभ्राणि पवित्राणीत्यर्थमुक्त्वा । अर्थादन्येषामशुद्धत्वं कृष्णत्वमपवित्रत्वं च सूचितमित्युक्तम् । महीधरेणाऽपि—तानि यजूंषि बुद्धिमालिन्यात्कृष्णानि जातानीति बुद्धिवैशद्याच्छुक्लानीति च ॥ ननु तेषां कृष्णत्वे किं प्रमाणमिति चेच्छृणु ॥ कुपितेन श्रीयोगीश्वरेण वान्तानि अङ्गारभूतानि यजूंषि तित्तिरयो भूत्वा आशुः । इति भागवते कथनाद्वान्ताशित्वाच्च । तदुक्तं श्रीमद्भागवते—यजूंषि तित्तिरा भूत्वा तल्लोलुपतयाददुः ॥ तैत्तिरीया इति यजुःशाखा आसन्सुपेशला इति ॥ शुक्लानां मुख्यत्वमपि तत्रैव । यजूंष्ययातयामानि मुनयेऽदात्प्रसादित इति । अर्थादन्येषामशुद्धत्वं कृष्णत्वमपवित्रत्वं सूचितमित्युक्तम् । एवंच शुक्लानामयातयामतां वदता श्रीमद्व्यासेनाऽपि । एतेषां

यातयामतारूपदोषवत्त्वं सूचितम् । अत एव श्रीभगवत्पादैरपि बृहदारण्यकान्तिमकण्डिकायां शुक्लानीत्यस्यायातयामानीत्यर्थ उदाहृतः । किञ्च स्तोमादेव शाखाविभागात्प्राक् पञ्चदशशाखोद्धरणेऽपि एतेषां यजुष्ट्वव्यवहारात् । स्तोमश्च यजुष्ट्वमेवेति गम्यते ॥ तथाच श्रुतिः—स्तोमश्च यजुश्च ऋक्चेत्यादि । तथा च यजुरेव शिर इत्यादीनामपि शुक्लयजुःपरत्वमेवेति गम्यते । एतेन ऋग्वेदोऽथ यजुर्वेद इति ऋग्वेदस्य प्रथमत्वं वदन्तोऽपि परास्ताः । तैत्तिरीयादिभ्यः पूर्वत्वेऽपि शुक्लेभ्यः पूर्वत्वाभावात् ॥ अत एव श्रीमतानन्तदेवेन कल्पद्रुमे कृष्णरुद्रस्यापठनीयत्वमुक्तम् ॥ अत एव प्रतिज्ञासूत्रभाष्ये ॥ अनन्तदेवेन स्मृतिरुदाहृता—शुक्लं कृष्णमिति द्वेधा यजुश्च समुदाहृतम् । शुक्लं वाजसनेयं तु कृष्णं स्यात्तैत्तिरीयकम् ॥ बुद्धिमालिन्यहेतुत्वात्तद्यजुः कृष्णमीर्यते । व्यवस्थितप्रकरणात्तद्यजुः शुक्लमीर्यत इति ॥ तस्मान्नैतेषां दक्षिणद्वारे स्थातुमधिकारः ॥ शुभ्रकृष्णयोः शुद्धमलिनयोः पवित्रापवित्रयोर्यातयामायातयामयोः शुभ्रशुद्धपवित्रायातयामानामेवाश्रयादित्यलम् । अत एव दानमयूखे—दक्षिणे तु द्वारपालौ रुद्रान्पुरुषसूक्तकम् । श्लोकाध्यायं शुक्रियं च मण्डलाध्यायमेव चेत्युक्त्वा ॥ श्लोकाध्यायो देवसवितः । शुक्रियं ऋचं वाचम् । मण्डलाध्यायं यदेतन्मण्डलं तपतीति । शुक्लयजुषामेव सूक्तान्युक्तानि ॥ गङ्गाभट्टैश्च—दक्षिणद्वारे अथ कात्यायनानामित्युक्त्वा कात्यायनानामेव मधुपर्के उक्तः ॥ नारायणभट्टाश्च अथ दक्षिणकुण्डे माध्यन्दिनीययजुर्वेदिनो होमविधिः इत्यारामोत्सर्गपद्धतौ प्राहुः ॥ एवमेव प्रतिष्ठामयूखेऽपि—कमलाकरभट्टा अप्येवमेवाहुः—न च तैत्तिरीयसूक्तानां जपस्य क्वचिदुक्तत्वान्माध्यन्दिनीयानां होतृत्वेऽपि तेषां जापकत्वं शङ्कनीयम् । हुत्वेति क्त्वाप्रत्ययस्य समानकर्तृत्वे एव सम्भवात् ॥ होमकर्तृभिरेव जपः कार्य इति तैरेव व्याख्यातत्वात् । तैरेव च पूर्वश्लोकव्याख्यायां यदेतन्मण्डलमित्यस्यैव पठनीयत्वमुक्तम् ॥ प्रतिष्ठामयूखेऽपि—आनोभद्रानुवाकश्च आशुःशिशानकस्तथा । यद्देवास्त्रीणि च पठेत्ततोऽष्टौ च पुनन्तु मा ॥ अभिधा असि सप्तैव दीर्घायुस्ते ऋचं पठेत् ॥ आप्यायस्वेति षट् । नमोस्तु सर्पेभ्यः० । आकृष्णेन० । नमः शम्भवाय० । इत्येका । अग्निर्देवता० । त्रातारमिन्द्रम्० । सोमꣳरा-

जानं०। अन्नपते०। महाँइन्द्रः०। ऋचं वाचं० इत्यादिशुक्लसूक्तानामेव पठनीयत्वमुक्तम्। न च प्रतिष्ठायाम्। आदित्यो वा एष एतन्मण्डलमिति गागाभट्टैरुक्तत्वात्कृष्णैर्विवदितव्यम्। श्लोकाध्यायमित्यस्यैव पद्यस्य तत्रैव तादृशव्याख्यानेन शाखास्वनुक्तत्वेऽपि बह्वृचानां श्रीसूक्तपठनमिव तत्र तस्यैव पठनस्य बोधनेन शुक्लानामभावे न किञ्चित्प्रमाणं गम्यते। किञ्च यदि तस्य तैत्तिरीयस्थितिरेवाभिप्रेता स्यात्तेषामेव मधुपर्कवरणादि ब्रूयात्। न च तन्नुक्तम्। तस्मात्सूक्तपठनकथनेऽपि स्थितिः शुक्लानामेवेति सर्वमनवद्यम्। एतेन त्रिविक्रमोऽपि व्याख्यातो भवति। एतेनोत्सर्गादिविषये मयूखकारेण पठितस्य तैत्तिरीयसूक्तकथनस्य सानुकूलत्वं वदन्तः परास्ताः। न च कात्यायनानामिति गागाभट्टोक्तौ कात्यायनान्यैः कण्वशाखिभिर्विवदितव्यम्। तेषां काण्वानां कात्यायनत्वाभावात्। तथाहि—मातुलस्य सुतामूढ्वा मातृगोत्रां तथैव च। समानप्रवरां चैव द्विजश्चाण्डालतां व्रजेत्॥ प्रवरान्पितृगोत्रेषु मातृगोत्रे न चिन्तयेत्। गोत्रमेव त्यजेन्मातुरिति कात्यायनोऽब्रवीत्॥ इत्यादि कात्यायनेनोक्तत्वेऽपि मातुलकन्यापरिणेतृत्वात्सत्वे वा गुरुवचनपालकत्वाभावेन विश्वामित्रज्येष्ठपञ्चाशत्पुत्रवद्दूषितत्वात्। अतः पञ्चदशशाखान्तर्गतत्वेऽपि न तैरस्माभिः सह विवाहादिः। अपि च गौणमुख्ययोर्मुख्यस्यैव स्वीकरणीयतया तेषां मुख्यत्वाभावान्न तेषामधिकारः। तथाहि—यस्यां सूत्रं भवेत्सा हि मुख्या शाखेति कीर्त्यत इति प्रसिद्धेर्भगवतः श्रीमत्कात्यायनस्य माध्यन्दिनीयशाखानुसारेणैव प्रवृत्तेः। तेषामेव मुख्यत्वात्। तथाहि—एषा हि भगवतां सूत्रकाराणां शैली लक्ष्यते। यन्मुख्यशाखोक्तमन्त्रप्रतीकमुपाददते इतरशाखोक्तांश्च सकलान्पठन्ति। इति सकलप्रसिद्धा। तथा च—श्रीमता सूत्रकारेण माध्यन्दिनीशाखोक्ता मन्त्रा अयमग्निः। पुरीष्यो। रयिमान्। शिवोनामासीत्यादयः प्रतीकमात्रेणोक्ताः। उलूखले मुसले। आप्यायताम्। ध्रुवा। हविषा। इत्यादयश्च कण्वशाखोक्ताः सम्पूर्णाः। तथा च—माध्यन्दिनीयानुसारेणैव भगवतः सूत्रकृतः प्रवृत्तेस्तेषामेव मुख्यत्वम्। अत एव बृहन्नारदीये—यजुर्वेदमहाकल्पतरोरेकोत्तरं शतम्। शाखास्तत्र शिखाकारा दशपञ्चाथ शुक्लगाः॥ तत्रापि मुख्यं विज्ञेयं शाखा माध्यन्दिनी यजुरिति। किञ्च केषांचिन्मते कात्या-

यनाभिधायाः सप्तदशशाखायाः सत्त्वान्नैतेषां कात्यायनत्वम् । न चास्तु तेषामेव दक्षिणद्वारपालत्वम् । तदभावे च प्रथमशाखीयत्वादस्माभिरेव स्थेयमिति वाच्यम् । माध्यन्दिनशाखायाः सर्वशाखासाधारणस्य वसिष्ठेनाभिहितत्वान्नारदेन च मुख्यत्वाभिधानादन्यासां गौणत्वाद्द्वयोर्गौणयोः परस्परकार्यसम्पादकत्वाभावान्माध्यन्दिनीयानामेव मुख्यत्वात्सकलशाखाकार्यसम्पादकत्वात्तैरेव दक्षिणद्वारि स्थेयम् । न कृष्णैर्न वा काण्वैरिति सकलमभिरामम् ॥ यत्पादाम्बुरुहार्चनात्समभवन्विष्ण्वीशपद्मोद्भवास्त्रैलोक्यावननाशसर्गनिपुणा यस्यैव कारुण्यतः । दक्षद्वारविनिर्णयः समभवत्तस्यामरेशस्य च श्रीरामस्य पदाम्बुजातयुगुले नारायणेनार्पितः ॥ यद्वा मयाऽत्र लिखितं सदथाप्यसद्वा ग्रन्थान्विलोक्य विविधान्स्वमतानुरूपम् । माध्यन्दिनीयविबुधा अवलोक्य तच्च दीने मयि प्रददतु ध्रुवमाशिषोर्याः ॥ इति श्रीमच्छुक्लयजुर्वेदान्तर्गतमाध्यन्दिनीयशाखाध्यायी देवोपनामकनारायणसूरिकृतो दक्षिणद्वारनिर्णयः समाप्तः ॥

---

## ॥ श्रीयाज्ञवल्क्यचरितम् ॥




सदाचारं शुद्धं निखिलमुनिमान्यं समदिशत्तथा राज्ञां नीतिमसुलभपदप्राप्यविषयाम् । मुमुक्षूणां ज्ञानं परमसुलभं यः समतनोदतो योगीशोऽभूत्परमपदभाग्वै त्रिजगति ॥

---

१ अयं दक्षिणद्वारनिर्णयसङ्ग्रहः त्र्यम्बकक्षेत्रनिवासिनो धारणेत्युपनाम्नः परलोकगतस्याम्बादासात्मजबाबाशास्त्रीसंज्ञकस्य ग्रन्थसङ्ग्रहात् करवीरक्षेत्रस्थबाबामहाराजाज्ञुजनानामहाराजद्वारा महता प्रयत्नेन सम्पादितः ॥

१. यस्याः शुक्लयजुर्वेदमाध्यन्दिनवाजसनेयशाखाया अध्येतारो वयं जातास्तस्याः प्रवक्ता याज्ञवल्क्यो महर्षिरासीत्। स पुण्यकीर्तिर्योगीश्वरो यशोधवलीकृतत्रैलोक्यो मिथिलायामवसत्तस्य जनिस्त्रेतायां वाजसनेयनाम्नो महर्षेरासीत्तस्यान्ववायो विस्तरेण श्रीबृहदारण्योपनिषदि द्रष्टव्यः। अतो दिगन्तकीर्तेस्तस्योदन्तो वेदशिरोभागेषूपनिषत्सु तथा महाभारतादीतिहासेषु प्रसिद्धः सोऽत्र समासेन विशदीक्रियते॥

२. याज्ञवल्क्यस्य द्वे भार्ये बभूवतुः। प्रथमा मैत्रेयी द्वितीया भरद्वाजकन्या कात्यायनी च। तत्र मैत्रेय्यनपत्या सा याज्ञवल्क्याज्ज्ञानोपदेशं लब्ध्वा गार्हस्थ्यमनुभूयान्ते कैवल्यपदमगमत्। कात्यायन्याश्चन्द्रकान्तमहामेघविजयनामानस्त्रयः पुत्रा बभूवुः॥

३. याज्ञवल्क्यशिष्यपरम्परायां द्वापरे पुत्रत्वेन दत्तः कात्यायनो नाम ऋषिरभवत्। तेन च वाजसनेयशाखिनां श्रौताग्निकर्मसाधनपद्धतिदर्शकानि सूत्राणि कल्पसूत्रं अष्टादश परिशिष्टसूत्राणि च कृतानि तदनुरोधेनैवेदानींतनानां वाजसनेयिनामाधानादि श्रौतं कर्म प्रवर्त्तते। तथा कात्यायनशिष्यानुयायी पारस्करनामा परमर्षिः कलेरारम्भकाले जातः तेन स्मार्ताग्निकर्मपद्धतिनिदर्शकानि सूत्राण्युपनिबद्धानि तदनुरोधेनैवेदानीं वाजसनेयिनां गर्भाधानादि षोडशसंस्कारकर्माणि प्रवर्त्तन्ते॥

४. याज्ञवल्क्यो वैशम्पायनर्षेर्भागिनेयः। तं च वैशम्पायनो यजुःशाखामध्यापयामास। तां च याज्ञवल्क्य उत्सृष्टवान् तत्कारणं त्वेकदा सर्वैर्ऋषिभिः कस्मिंश्चित्कारणान्तरे ऐकमत्यार्थं मेरुपर्वते एकत्र गन्तव्यमिति निश्चयं कृत्वा तत्र कश्चिदृषिर्यदि न गच्छेत्तर्हि स सप्तरात्रं वाचिकब्रह्महत्यापातकेन लिप्तो भवेदिति नियमः कृतः। तदनुसारेण तत्समाजे सर्वेऽप्यृषयो मिलिताः। याज्ञवल्क्यगुरोर्वैशम्पायनस्य तु तद्दिने पितुः श्राद्धतिथिः। अतो वैशम्पायनस्तद्दिने त्वरया नित्यकर्म समाप्य श्राद्धविधिं च कृत्वा तत्समाजे गन्तव्यमिति निश्चित्य प्रत्यूष उत्थाय सर्वतस्तमोव्याप्तायां रात्रावेव स्नानार्थं प्रस्थितः। तदा तद्गृहकोणे निद्राणस्य बालस्योपरि तत्पादः पतितः। तेन च स बालः पञ्चत्वमगमत्। तज्ज्ञात्वा तच्छोकव्याकुलस्यर्षेर्वैशम्पायनस्य तद्दिने सभागमनावकाशो न जातः। उत च बालहत्या जाता। तेन तस्य वाचिकब्रह्महत्यापातकं बालहत्यापा-

तकं च प्राप्तम् । ततो वैशम्पायन आत्मनो हत्याद्वयपातकस्य निरासार्थं शिष्यानाहूय प्रायश्चित्तार्थं नियुङ्क्ते । नियुक्तास्ते च ओमित्यूचुः । तेषु याज्ञवल्क्यो युवा सदृढ आचारसम्पन्नो मेधावी सर्वेषु वरीयानहमित्यात्मानं भावयमानो गुरुमुवाच । हे भगवन् सर्वेऽप्येते बालाः प्रायश्चित्तं कर्तुमसमर्था अतोहमेक एव पातकद्वयनिवृत्तये उद्युक्तो भवामि । भवद्भिर्निश्चिन्ततया स्थातव्यम् । तस्यैतत्सप्रश्रयमपि वाक्यमितरापमानकारीत्याकलय्य उत च जनकदत्तस्य गोसहस्रस्य सर्वैर्ष्यवज्ञापूर्वककृतप्रतिग्रहेण तद्विषयकृतस्वाज्ञोल्लङ्घनेन च परमक्रुद्धो वैशम्पायनो गुरुस्तच्छिक्षार्थमवदत् अरे विप्रावमन्ता गर्विष्ठस्त्वमसि अतो मदधीतां यजुःशाखां मह्यं प्रत्यर्प्य त्वया यथेष्टं गन्तव्यम् । एवं कुपितस्य गुरोर्वाक्यं श्रुत्वाप्यभीतो याज्ञवल्क्यो गुरोरधीतां यजुःशाखां तत्याज । तां च वमितान्नरूपां शाखां वेदलुब्धा ब्राह्मणास्तित्तिरिणः पक्षिविशेषा भूत्वा भक्षितवन्तः । तदध्येतारस्ते कृष्णयजुःसंज्ञका इति प्रसिद्धाः ॥ 'तथा च स्मृत्यन्तरे'—शुक्लकृष्ण इति द्वेधा यजुश्च समुदाहृतम् । शुक्लं वाजसनेयं तत्कृष्णं स्यात्तैत्तिरीयकम् ॥

५. पश्चाद्वेदरहितो दुःखितो याज्ञवल्क्यो मानुषं गुरुं नैव करोमीति निश्चित्य भगवन्तमादित्यमाराध्य प्रसन्नात्तस्मान्मनुष्यैरज्ञातां प्रत्यग्रां 'अयातयामां शुक्लयजुःशाखां माध्यन्दिनवाजसनेय'—नाम्नीमध्यगात् ॥ ततः पुनः स्वतपःसन्तोषितसरस्वतीप्रसादाद्याज्ञवल्क्यः शतपथब्राह्मणं सखिलं सरहस्यं प्रकटयामास । ततश्च पुनस्तपसा प्रसन्नात्सूर्यादृग्वेदादिकान्वेदान् लब्धवान् । अतो याज्ञवल्क्यश्चतुर्वेदाध्यायी॥[1]

६. एतच्छ्रुत्वा सर्वैर्ऋषिभिः सह गुरुर्वैशम्पायनो विस्मयमगात् । ततः कृतार्थो योगीश्वरः स्वशिष्येभ्यस्तां शाखामध्यापयदित्युदन्तो महाभारते शान्तिपर्वणि अष्टादशोत्तरत्रिशततमेऽध्यायेऽस्ति तत्रत्यावेतौ श्लोकौ—ततः शतपथं कृत्स्नं सरहस्यं ससङ्ग्रहम् । चक्रे स परिशेषं च हर्षेण परमेण ह । १६ ॥ कृत्वा चाध्ययनं तेषां शिष्याणां शतमुत्तमम् । विप्रियार्थं सशिष्यस्य मातुलस्य महात्मनः । १७ ॥ एतदारभ्य तस्य महर्षेर्याज्ञवल्क्यस्य कीर्तिस्त्रिजगत्प्रकाशिकासीत् ॥

(१) एतच्च बृहदारण्यभाष्ये शङ्कराचार्यैर्जनकाद्गोसहस्रानयनप्रकरणे स्पष्टीकृतमस्ति॥

७. कदाचिज्जनकतातेन यज्ञः प्रारब्धः । तत्र प्रधाना ऋत्विजो होत्राध्वर्यूद्गातृब्रह्माणः पैलवैशम्पायनजैमिनिसुमन्तवः । अप्रधाना ऋत्विजस्तु तच्छिष्याः । तत्र यज्ञे कात्यायनसहितो याज्ञवल्क्यश्च गतः । गत्वा च सशिष्यं स्वमातुलं वैशम्पायनमाध्वर्यवकर्मविषयककर्तव्यप्रायश्चित्ताद्यकरणेन यज्ञस्य वैगुण्योद्भावनेन तिरश्चक्रे । ततो वैशम्पायनसहितेन जनकेन सम्प्रार्थितो याज्ञवल्क्यः स्ववेदप्रसिद्धप्रायश्चित्तकरणद्वारा यज्ञस्य साद्गुण्यमजीजनत् । ततो जनकेन वैशम्पायनाय कर्मसाद्गुण्याय दक्षिणा दत्ता । तस्मिन्समये वैशम्पायनोपष्टम्भकस्य पश्यतो देवलस्य पुरस्तात्स्ववेददक्षिणानिमित्तं सशिष्येण स्वमातुलेन वैशम्पायनेन कलहं चक्रे । अध्वर्यूद्देशकत्वेदेनं दीयमाना सर्वापि दक्षिणा मह्यमेव देया । यतो मयैव यज्ञस्य स्ववेदेन साद्गुण्यं सम्पादितमिति । ततो देवलसंमत्या दक्षिणार्द्धं गृह्णन् जनकतातेन सम्मोदितः सम्प्रार्थितश्च ॥ पश्चाद्याज्ञवल्क्य आत्मनः कृतकृत्यताममन्यत ॥ ततः कदाचित्सामवेदधुरन्धरो धनञ्जयश्रेष्ठो यज्ञमकार्षीत् तत्र याज्ञवल्क्याय ब्रह्मिष्ठायाध्वर्यवं दत्तम् ॥ एकदा मुक्तिप्रदे गङ्गातीरे जनकोऽश्वमेधं चक्रे । तत्र स्वयं भगवान् याज्ञवल्क्यो याज्ञिको बभूव ॥ तद्गङ्गातीरं जनकयज्ञस्थानत्वाज्जनस्थानं ( नासिकं ) इति गीयते ॥ कदाचिद्वसिष्ठप्रार्थनया याज्ञवल्क्यपुत्रस्य पाराशरस्य विवाहं स्वसम्पादितायातयामवेदबोधितविधिना कारयामास ॥ पुनरेकदा पुण्यस्तम्भक्षेत्रे ( पुणताम्बें इति ख्याते ) गोदावरीतीरे चन्द्रपुष्करिणीजलसमीपे चन्द्रग्रहणे चन्द्र आत्मनो यक्ष्मरोगपापनिवृत्तये आदित्यदेवताकं यागं याज्ञवल्क्येन ऋत्विजा सह कृत्वा चन्द्रो यक्ष्मरोगाद्विमुक्तोऽभूत् ॥ पुनश्च नर्मदातीरे सूर्यपुष्करिणीजलसमीपे मित्रविन्दाख्ये पुरे सूर्यग्रहणे कात्यायनीयसूत्रोक्तप्रकारेण देवा यागं चक्रिरे ॥ अपि च परीक्षित्पुत्रं शतानीकं याज्ञवल्क्यः स्वकीयं वेदमध्यापयामास ॥ एकदा श्रीकाञ्च्यां श्रीविष्णुप्रीतये चतुर्मुखो ब्रह्माश्वमेधं चिकीर्षुर्याज्ञवल्क्यं सर्वेषामृत्विजामध्यक्षत्वेन वरयामास ॥

८. जनकस्य राज्ञ एवं सङ्कल्पः किलासीत् । कमपि ब्रह्मनिष्ठं परीक्ष्य तस्माद्ब्रह्मविद्योपदेशो ग्राह्य इति गूढाभिसन्धिं कृत्वा यज्ञव्याजेन याज्ञवल्क्येन सह सर्वर्षीन् निमन्त्रयामास । तथा सर्वेषु ब्रह्मर्षिषु सम्प्रा-

त्रेषु स राजा सवत्सं गोसहस्रं सौवर्णं निर्माय एवमुद्घोषयत् यः कश्चिद्ब्रह्मनिष्ठो भवेत्तेनैताः सजीवाः कृत्वा स्वीकार्याः । एतच्छ्रुत्वा सर्वेषामृषीणामेवं सङ्कल्पो मनस्यभवत् । सर्वे वयं ब्रह्मनिष्ठास्तथापि प्रथममेवाहं यद्युत्तिष्ठामि तदात्मन एव ब्रह्मनिष्ठत्वप्रदर्शनेनान्येषामवज्ञा कृता स्यात् इति कृत्वा प्रथमाभ्युत्थाने कस्यापि धैर्यं नाऽभवत् । तदा याज्ञवल्क्यः प्रोक्तकारिनामानं शिष्यमाहूय समादिशत् । तस्य गुरोराज्ञया गा नयतः सतः सर्वेषामृषीणां महान्कोलाहलः समजनि । तदा योगीश्वरयाज्ञवल्क्येन सह गार्ग्या अन्येषां च महर्षीणां प्रत्येकस्य वादः समभवत् । तान्सर्वानपि यथार्थं परिभाव्य पुनः शिष्यमित्थमादिदेश त्वमित्थमुच्चैर्घोषय ब्रह्मनिष्ठत्वाद्याज्ञवल्क्यो गा गृहीत्वावश्यं प्रयाहीति । तथा कृते योगीश्वरप्रभावात् सजीवाः सञ्जाता गा गृहीत्वा स शिष्यो गुरुगृहमगमत् । एवमवलोक्य वैदेहेन प्रशस्यमानो याज्ञवल्क्य आत्मविद्यां तस्मै दत्वा स्वाश्रमं जगाम ।—स एवमनुशास्तस्तु याज्ञवल्क्येन धीमता । प्रीतिमानभवद्राजा मिथिलाधिपतिस्तदा' ॥

९. एवमुपरि दर्शितक्रमेण जनकगृहे इतरेषामृषीणां तथा गार्ग्याश्च संवादोऽभूत् । तस्मिन्याज्ञवल्क्यः सर्वान्यथा जिगायेति बृहदारण्ये प्रदर्शितं तस्मात्सारवद्यत्किञ्चिदुद्धृत्यात्र प्रदर्श्यते । तद्यथा—चतुर्दशाध्याये मधुकाण्डे—'अथ हैनं भुज्युर्लाह्यायनिः पप्रच्छ—याज्ञवल्क्येति होवाच मद्रेषु चरकाः पर्य्यव्रजाम ते पतञ्चलस्य काप्यस्य गृहानैम तस्यासीद्दुहिता गन्धर्वगृहीता तमपृच्छाम कोऽसीति सोऽब्रवीत्सुधन्वाङ्गिरस इति तं यदा लोकानामन्तानपृच्छामाथैनमब्रूम क्व पारिक्षिता अभवन्निति क्व पारिक्षिता अभवन् स त्वा पृच्छामि याज्ञवल्क्य क्व पारिक्षिता अभवन्निति । १ ॥ स होवाचोवाच वै सोऽगच्छन्वै ते तद्यत्राश्वमेधयाजिनो गच्छन्तीति क्वन्वश्वमेधयाजिनो गच्छन्तीति द्वात्रिꣳशतं वै देवरथान्ह्यान्ययं लोकस्तꣳसमन्तं पृथिवी द्विस्तावत्पर्येति ताꣳसमन्तं पृथिवीं द्विस्तावत्समुद्रः पर्येति तद्यावती क्षुरस्य धारा यावद्वा मक्षिकायाः पत्रं तावानन्तरेणाकाशस्तानिन्द्रः सुपर्णो भूत्वा वायवे प्रायच्छत्तान्वायुरात्मनि धित्वा तत्रागमयद्यत्राश्वमेधयाजिनोऽभवन्नित्येवमिव वै स वायुमेव प्रशशꣳस तस्माद्वायुरेव व्यष्टिर्वायुः समष्टिरपपुनर्मृत्युं जयति य एवं वेद ततो ह

भुज्युर्लाह्यायनिरुपरराम' ॥ २ ॥ 'अथ हैनं गार्गी वाचक्नवी पप्रच्छ—याज्ञवल्क्येति होवाच यदिदꣳ सर्वमप्स्वोतश्च प्रोतश्च कस्मिन्नु खल्वाप ओताश्च प्रोताश्चेति। वायौ गार्गीति कस्मिन्नु खलु वायुरोतश्च प्रोतश्चेन्तरिक्षलोकेषु गार्गीति कस्मिन्नु खल्वन्तरिक्षलोका ओताश्च प्रोताश्चेति गन्धर्वलोकेषु गार्गीति कस्मिन्नु खलु गन्धर्वलोका ओताश्च प्रोताश्चेत्यादित्यलोकेषु गार्गीति कस्मिन्नु खल्वादित्यलोका ओताश्च प्रोताश्चेति चन्द्रलोकेषु गार्गीति कस्मिन्नु खलु चन्द्रलोका ओताश्च प्रोताश्चेति नक्षत्रलोका ओताश्च प्रोताश्चेति देवलोकेषु गार्गीति कस्मिन्नु खलु देवलोका ओताश्च प्रोताश्चेति इन्द्रलोकेषु गार्गीति कस्मिन्नु खल्विन्द्रलोका ओताश्च प्रोताश्चेति प्रजापतिलोकेषु गार्गीति कस्मिन्नु खलु प्रजापतिलोका ओताश्च प्रोताश्चेति ब्रह्मलोकेषु गार्गीति कस्मिन्नु खलु ब्रह्मलोका ओताश्च प्रोताश्चेति स होवाच गार्गी मातिप्राक्षीर्मा ते मूर्द्धा व्यपप्तदनतिप्रश्न्यन्ये वै देवतामतिपृच्छसि गार्गि मातिप्राक्षीरिति ततो ह गार्गी वाचक्नव्युपरराम' । १ ॥ षष्ठब्राह्मणम् ॥ ६ ॥

१०. एवं कहोड ऋगाश्वलायनशाखायाः प्रवक्ता शाकल्यो भरद्वाजो राजा जनकश्च इत्यादीनां प्रत्येकं योगीश्वरेण संवादः समभूत् तस्मिन्सर्वानपि जिग्ये तदद्भुतशक्तिविस्मिता गार्गी तं शरणीभूय तं स्तुवाना स्वालयमगात् तेन विमनाः शाकल्यो याज्ञवल्क्योपहासमकरोत् तव द्वेष्टुः शिरःपातो भवेदिति याज्ञवल्क्याय सूर्येण वरो दत्तस्तेन शाकल्यस्य शिरोऽपतत्। अनन्तरं जनकस्तस्मादनुग्रहं सम्पाद्य योगसिद्धौ राज्यविरक्तो वनं जगाम । अतो देहातीतात्मज्ञानलाभाद्वैदेह इत्यभिधामाप। एवं सर्वेषां जयेन धवलीकृतदिङ्मुखस्त्रैलोक्योद्दीपको यशोद्विजराज उदियाय तेनैव योगीश्वरो याज्ञवल्क्य इत्यनन्यलभ्यं पदमाससाद। तत्प्रतिपादितसिद्धान्त इत्थम्—ॐ पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते । पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॥ ॐ खं ब्रह्म खं पुराणं वायुरं खमिति हस्माह कौरव्यायणीपुत्रो वेदोऽयं ब्राह्मणा विदुर्वेदैनेन यद्वेदितव्यम्। ४ ॥

११. श्रीमता याज्ञवल्क्येन कृतं ग्रन्थचतुष्टयं मुख्यत्वेनेह जगत्युपलभ्यते। तत्रैका याज्ञवल्क्यशिक्षा—तत्र माध्यन्दिनवाजसनेयैः स्ववेदा-

ध्ययनाध्यापनादिकं कथं कर्तव्यमिति निर्णयो वर्तते ॥ द्वितीयम्—प्रतिज्ञासूत्रम्—तत्र केन प्रकारेण मन्त्राणां स्वरा वेदितव्या इति निरूपणम् ॥ तृतीया—याज्ञवल्क्यस्मृतिः—तत्र ब्राह्मणक्षत्रविट्शूद्रा वर्णास्त्वाद्यास्त्रयो द्विजाः। निषेकाद्याः श्मशानान्तास्तेषां वै मन्त्रतः क्रियाः ॥ व्यवहारान्नृपः पश्येद्विद्वद्भिर्ब्राह्मणैः सह । धर्मशास्त्रानुसारेण क्रोधलोभविवर्जितः ॥ श्रुताध्ययनसम्पन्ना धर्मज्ञाः सत्यवादिनः । राज्ञा सभासदाः कार्या रिपौ मित्रे च ये समाः ॥ अपश्यता कार्यवशाद्व्यवहारान्नृपेण तु । सभ्यैः सह नियोक्तव्यो ब्राह्मणः सर्वधर्मवित् ॥ इत्यादि प्रकारो वर्तते । अनयैव स्मृत्येदानींतनराजपरिषद्यपि दायविभागादिन्यायप्रकरणे सिद्धान्तनिर्णयो भवति ॥ चतुर्थं—शतपथब्राह्मणम्—तत्र पञ्चदशशाखाविभागो वर्तते ॥

१२. इदानीं 'स्वशाखावर्णनम्'—तत्त्वनिरूपणे—यजुर्वेदमहाकल्पतरोरेकोत्तरं शतम् । शाखास्तत्र शिखाकारा दशपञ्चाथ शुक्लगाः । तत्रापि मुख्या विज्ञेया शाखा माध्यन्दिनी यजुरिति ॥ पूर्वोत्तराङ्गसहितब्रह्मविद्यासुबोधकम् । बुद्धिनैर्मल्यहेतुर्यत्तद्यजुः शुक्लमीर्यते । श्रीस्वयम्भूवेदव्यासस्य चतुर्णां वेदानामध्येतारश्चत्वारः शिष्यास्तेषु 'साङ्गयजुषां' अध्येता वैशम्पायनस्तेन स्ववेदस्य षडशीति शाखाः कृत्वा प्रत्येकशिष्यमेकैकामध्यापयामास । मुक्तिकोपनिषदि तु—यजुषो नवाधिकशततमाः शाखाः प्रतिपादिताः ॥ चरणव्यूहमते—यजुर्वेदस्य षडशीति भेदा भवन्ति । तत्र वाजसनेयानां पञ्चदश भेदा भवन्ति । ते—जाबालाः, बौधेयाः—(बहुधेया), काण्वाः, माध्यन्दिनाः, शापेयाः—(शापीयाः), स्थापायनीयाः, कपोलाः—(कापालाः), पाण्डरवत्साः—(पौंड्रवत्साः), आवटिकाः परमावटिकाः, पाराशराः—(पाराशर्याः), वैणेयाः, वैधेयाः—(वैद्येयाः), वैनतेयाः—(वैन्धेयाः), वैजवाश्चेति ॥ मन्त्रब्राह्मणकल्पानामङ्गानां यजुषामृचाम् । षण्णां यः प्रतिभागज्ञः सोऽध्वर्युः कृत्स्न उच्यते । इति याज्ञवल्क्यमतेन । भारते शान्तिपर्वणि—'मुनिमध्यापयामास प्रथमः सविता स्वयम् । तेन प्रथमदत्तेन वाजे विप्रे नरो मनुः' ॥ केषाञ्चिन्मते वाजसनेयानां सप्तदश भेदा भवन्ति । यथा—जाबालाः, गौधेयाः—( औधयाः ) काण्वाः, माध्यन्दिनाः, श्यामाः,

रायणीयाः, कपोलाः, पिङ्गलाः, वत्साः, पौण्डरवत्साः, आवटिकाः, परमावटिकाः, पाराशर्याः, वैणेयाः, वैधेयाः, गालवाः, कात्यायनीयाश्चेति। इति सप्तदश॥ तथा च होलिभाष्ये—यथाह स्मृतिः—आदित्येनाधायित्वादादित्यान्युच्यन्ते। वाज इत्यन्नस्य नामधेयम् अन्नं वै वाज इति श्रुतेः। वाजस्य सनिर्दानं यस्य महर्षेरस्ति सोऽयं वाजसनिः। तस्य पुत्रो वाजसनेयस्तस्य याज्ञवल्क्येति नाम समधेयम्। तेन याज्ञवल्क्येन तानि यजूंषि महर्षिभ्यः पञ्चदश समर्पितानि एवमेतद्याज्ञवल्क्यस्य स्वशाखीयानां च 'शुक्लयजुर्वेदीयमाध्यन्दिनवाजसनेया' इति नामप्रवृत्तौ निदानम्। माध्यन्दिनेन महर्षिणा याज्ञवल्क्याल्लब्धः शाखाविशेषो 'माध्यन्दिनः'। वाजसनेयस्यर्षेः पुत्रस्य याज्ञवल्क्यस्य प्रवर्तकत्वात्सा शाखापि 'वाजसनेयी' एवं च तच्छाखाध्ययनकर्तारः 'शुक्लयजुर्वेदीयमाध्यन्दिनवाजसनेयाः' प्रसिद्धाः॥ तस्मात्—प्रत्यग्रवेदेन गिरां मलं यो विधूय योगेन च चित्तजातम्। ज्ञानेन तत्त्वं पदलक्ष्यमाप तं याज्ञवल्क्यं प्रणतोऽस्मि नित्यम्॥

इति श्रीयाज्ञवल्क्यचरितं शुभम्॥

## सूचना ग्रन्थार्पणं च।

१३. नाहं वैदिकमार्गज्ञो न शास्त्रज्ञो न कर्मठः। तथापि स्वीयशाखायाः कर्मज्ञाने समुत्सुकः। १॥ अभवं प्राक्ततो विद्वत्साहाय्येन पुरातनान्। ग्रन्थान्सङ्गृह्य तद्वाक्यान्येकीकृत्य क्रमादयम्। २॥ सङ्गृहीतो मयाचारः शुद्धो वाजसनेयिनाम्। अस्मिन्प्रोक्तानि कर्माणि भक्तियुक्तः समाचरन्। ३॥ पुमाँल्लब्ध्वेह धर्मार्थकामाख्यं तत्फलं महत्। चित्तशुद्ध्या ततो ज्ञानं मोक्षं चैवाधिगच्छतु। ४॥ याज्ञवल्क्यादिसूत्राणि प्रमाणानीह मुख्यतः। सन्त्यतः स्थापितं नाम सूत्रावलिरिति स्फुटम्। ५॥ श्रीगौतमीतटस्थं पुण्यस्तम्भाख्यमस्ति यत्क्षेत्रम्। तत्राभूद्गौतमकुलविख्यातो यः पुरन्दरोपाह्वः। ६॥ विट्ठल इति स च वैद्यककरणाद्वैद्योपनामतां प्राप्तः। तत्तनयो नारायणनामाहं रचितवानिमं ग्रन्थम्। ७॥ स्थूलाक्षरैर्वचनमन्त्रततिर्व्यलेखि कार्या स्वकण्ठभुवि सा त्वथ

मध्यवर्णैः । सा दर्शिता खलु यथावसरं विधेया सूक्ष्माक्षरैस्तु लि॰ मननोपयोगि । ८ ॥ आह्निकसूत्रावलिरियमसच्छाखीयविप्रवर्याणा॰ मङ्गलसूत्रावलितां यायात्सद्बुद्धिनववध्वाः । ९ ॥ अस्मच्छ्रमस्य साफल्यं नैवंकारं करिष्यथ । श्वःश्रेयसं कथंकारमन्यथाकारमाप्स्यथ । १० ॥ पठत विमलचित्ताः प्रत्यहं शान्तमेनां विमल–विशदमस्यां धार्यतार्थं निगूढम् । त्यजत झटिति धर्मा-भासकं कर्म-जालं भजत परमसौख्यं सत्यधर्माश्रयेण । ११ ॥ नयतु दुरितमेषा दूरदेशं जनानां रमयतु विबुधानां मानसं माननीया । हरतु तिमिरजालं प्रोद्यतो धर्मभानुरिव परमकृपालुं ॐ-तत्सतं प्रार्थयामः । १२ ॥ मुनींद्वष्टाब्जे ( १८१७ माघशुक्ले ११ दश्यां इन्दुवासरे वयो वर्षाणि ६० ) मन्मथशरदि शालीवहनके तपःशुक्लैकादश्य॰ मृतकरवारे मम जनेः । सहैके षष्टयब्देऽकनमथ तुरीयं पुनरिदमभूत्सूत्रावल्या भवतु विदुषां मानसमुदे । १३ ॥ यन्न्यूनमधिकं चात्र सङ्गृहीतं प्रमादतः । तत्समीकृत्य विद्वद्भिर्ग्राह्यं तत्त्वविवेचकैः । १४ ॥ अनेन प्रीयतां देवो भगवान् हरिरव्ययः । आचारं कुर्वतां चेमं भुक्तिं मुक्तिं च यच्छतु । १५ ॥ ॐ तत्सत् । ॐ नमो वेदपुरुषाय । ॐ नमो याज्ञवल्क्याय । तत्सद्ब्रह्मार्पणमस्तु । शिवम् ॥

शिरोनिर्दिष्टपद्धत्या पञ्चमी संस्कृतिस्त्वियम् ॥
पूर्णाभूदीशकृपयानयेशः शं विधास्यतु ॥ १ ॥

इति श्रीपुरन्दरोपाह्वविठ्ठलात्मजनारायणेन विरचितायां वाजसनेयाह्निकसूत्रावल्यां परिशिष्टप्रकरणं समाप्तम् ॥

॥ समाप्तोऽयं ग्रन्थः ॥

॥ शुभं भवतु ॥

॥ ॐ तत्सत् ॥

केरळकोकिळचे एडिटरकृत–

# सार्थ व सटीप ज्ञानेश्वरी.

## सुधारून वाढविलेली आवृत्ति २ री.

"सर्व ज्ञानाची केवळ जन्मभूमि; किंवा विचारतरुवरांचा अपूर्व बाग, सर्व सुखाचें आदिस्थान; तत्वार्थसिद्धांतांचें भांडार; अथवा नवरसांचा भरलेला समुद्रच ह्मटला तरी शोभेल. किंवा हें प्रत्यक्ष परमधाम; सर्व-विद्यांचें मूळपीठ; आणि हरएक शास्त्राचा आधार होय. किंवा सकल धर्मांचें माहेरघर; सज्जनांचा जीवप्राण; शारदेच्या लावण्यरत्नांचें भांडार; किंवा हें काव्य ह्मणजे सर्व काव्यांतील राजा; ग्रंथांतील श्रेष्ठ ग्रंथ; चातुर्य येथेंच शाहणें झालें; तत्वार्थाला येथेंच गोडी चढली; आणि सुखाचें सौभाग्य येथेंच वृद्धि पावलें. हिच्या रुचींत माधुर्य; श्रृंगारांत सुरेखपणा; आणि योग्यतेंत प्रौढी; हींच दिसून येतात. कलांना येथेंच कौशल्य प्राप्त झालें; हिंच्या पुण्याचा पराक्रम फार अपूर्व आहे." (ज्ञानेश्वरी अ० १ प्रस्तावना.)

प्रथम गीतेचा श्लोक; मूळ ज्ञानेश्वरीच्या ओव्या; त्यांत ठिकाणीं गीताश्लोकांचीं प्रत्याहिकें; प्रत्येक पृष्ठाखालीं कठिण शब्दांचे ...संन केलेले अर्थ; कोठें कोठें संक्षिप्त व विस्तृत टीपा; प्रसंगोपात्त आलेलीं लहान लहान कथानकें व इतर माहिती; ओव्यांखालीं मोठ्या जाड टाईपांनीं—

### सरळ गद्यात्मक सुलभ अर्थ.

ग्रंथारंभीं वेदांतपर मनोगत; ज्ञानेश्वरीच्या कालांतील अध्यायपूर्वक ऐतिहासिक माहिती, कलाकौशल्य व निवडक वर्णन व निवडक विषयांची अध्यायपूर्वक अनुक्रमणिका ह्यांचें टिप्पण. 'कुंडलिनी'ची ...र आकृति.

सुप्पररायल अष्टपत्री बुकसांचा. पृष्ठांत कालम २ छाप-निर्णयसागर.

साधे कागद कापडी बांधणी, किं. रु. ३। ट० ।≡ व्ही. पी. ६–
" " रेशमी बांधणी, किं. रु. ३॥ ट० ।≡ " " ६–
उत्तम कागद सोनेरी बांधणी, किं. रु. ५ ट० ॥ " " ६=
" " रेशमी बांधणी, किं. रु. ५ ट० ॥ " " ६=

**ऋग्वेदी ब्रह्मकर्म** । वि. ४१. शुद्ध, स्वरांसहित. **अक्षर फार मोठें,** कागद उत्तम जाड. किं. रु. १। ट. ⌐ रेशमी बांधणी किं. रु. १॥. ट. ।.

**ऋग्वेदीय नित्य ब्रह्मकर्म** । नित्य लागणारे सर्व विषय २४, पत्रें ४४, पोथी. शुद्ध स्वरांसहित. किंमत ।. दोन प्रतींना ट. ⌐

**ऋग्वेदी पवमान पंचसूक्त पोथी. अक्षर फार मोठें,** कागद जाड सुरेख. किं. ॥. ट. ⌐

**ऋग्वेदी श्रावणी** पोथी. अक्षर मोठें किं. ।⌐ ट. ⌐

रुद्र अक्षर फार मोठें—कागद जाड उत्तम. किं. ⌐ ट. ॥

**वेदांगचतुष्टयम्** । तत्र पाणिनीयशिक्षा, ज्योतिष, छंद, निघंट. पोथी. किं. ।= ट. ⌐

**सिद्धान्तकौमुदी स्वरवैदिकीसमेता** । पाणिनीय शिक्षा, सूत्रपाठ, गणपाठ, धातुपाठ, लिङ्गानुशासन, अकाराद्यनुक्रमेण सर्वसूत्राणां सूत्रांकपृष्ठांकसहिता सर्वसूत्र धातूनां पृष्ठांकसूचीसंयुता च । (आवृत्ति ५ वी.) ... ... किं. रु. २ ट. ।=

**याज्ञवल्क्यस्मृतिः** । मिताक्षराव्याख्यासंवलिता । किं. रु. ३. ट. ।=

श्रीमच्छंकराचार्यप्रणीता **उपदेशसाहस्री** रामतीर्थस्वामिकृतटीकासमेता । किं० रु० ३ ट. ।.

श्रीमच्छंकराचार्यप्रणीता **शतश्लोकी** आनंदगिरिकृतटीकासमेता महाराष्ट्रविवेसंयुता । किं० रु० १ ट. ⌐

## वैद्यक शार्ङ्गधरसंहिता—

### मराठी भाषांतरासहित.

सुधारलेली आवृत्ति. मूळग्रंथ शुद्ध करून, मराठी भाषांतर सुधारलें आहे. वाज विषयानुक्रमांक. विषयवार अनुक्रमणिका व रोगवार अनुक्रमणिका इत्यादि. काज जाड किं. रु. २॥. ट. ।⌐ जाड पुठ्याची किं. रु. ३. ट. ।=

## वैद्यविनोद.

मराठी भाषांतरसहित. प्रत्येक रोगाचें थोडक्यांत निदान सांगून त्यावर अनुभविक, [illegible], सुलभ अशीं औषधें सांगितलीं आहेत, तीं बहुतेक वनस्पतींचीं, कषाय, चूर्ण, गुटिका, अवलेह, तेलें इत्यादि. पुढें **पुरवणी** जोडून धातूंचें शोधनमारण, रसायनें, मात्रा, गुटिका, पाक, पदार्थगुणदोष, उपयुक्त पुस्तक आहे. किं. रु. २ ट. ख. ।=

## मनुस्मृति मराठी भाषान्तरसहित.

आवृत्ति २ री. सोनेरी बांधणी. किं. रु. ५ ट. ॥.

मूळश्लोक व त्यापुढें मेधातिथि, कुल्लूकभट्टादिआधारानें मराठी भाषान्तर. विषयानुक्रमणिका, शेवटीं वर्णानुक्रमानें श्लोकांची सूची आहे. कागद उत्तम जाड, छापणी [illegible], बांधणी मजबूत सोनेरी.

**सार्थ गणेशगीता.** गणेशपुराणांत श्रीवेदव्यासांनीं गणेश व वरेण्यराजा ह्यांच्या संवादरूपानें वर्णिली आहे. अ. ११. किं. ॥. ट. ⌐

**सार्थ लघुयोगवासिष्ठसार.** मूलश्लोक, संस्कृत टीका व मराठी भाषांतर. किं. ॥॥॰ ट. ८=

**सार्थशिवगीता.** लहान सांचा. रेशमी गुटिका. पृष्ठें ३८८. किं. १२ आणे. ट. ख. २ आणे.

**रंगवल्लिका. रांगोळी व लेणीं काढण्याचें पुस्तक.** मुलींस व स्त्रियांस काढण्यास सोप्या सुशोभित अशा आकृति ३० आहेत. किं. ।॰ ट. ८–

**विवाहविधिचंद्रिका.** ऋग्वेद–आश्वलायन–विवाह–प्रयोग, वेदमंत्र, सायन–मंत्रभाष्य व मंत्राचा अर्थ व भाष्याचा अर्थ अशा मराठी अर्थासह किं ॥॥॰ ट. ८–

**संस्कृत कविपंचक.** ह्मणजे कालिदास, भवभूति, बाण, सुबंधु व दंडी. प्रत्येक कवीचे ग्रंथ, त्यांतील वेंचक उतारे अलंकारादिक व सर्व तऱ्हेनें मराठींत माहिती लिहिली आहे. हें काम कै. **विष्णुशास्त्री चिपळूणकर** ह्यांनीं केलें. किं. रु. १।॰ ट. ख. ८=

**मुंबईचा वृत्तांत. (मुंबईशहराची हवी ती माहिती घरबसल्या पुस्तक वाचून मिळते.)**

व्यापाराचें मूळपीठ, सुंदर देखावा. सर्वप्रकारच्या राजकीय खात्यांचीं ठाणीं, पर इतिहासप्रसिद्ध, असें जें **मुंबईशहर** त्याचा इत्थंभूत वृत्तांत. १००० प पर्यंत व्यापाराच्या घडामोडी, रस्त्यांची माहिती, दर्शनीय स्थळें, इत्या५ किंमत रु. २ ट. ।॰ आणे.

**सीता.**

श्रीमती जनककन्या रामभार्या हिचें पवित्र चरित्र, तिच्या ल ती महाराज्ञीपदारूढ होईपर्यंत आहे. अवाढव्य रामायणाचें वांचल्यानें येतें. एकदां वाचावयास आरंभ केला कीं पूर्ण झा अशा प्रकारची मनोवेधक भाषारचना आहे. पृष्ठसंख्या ४

**हरि आणि त्रिंबक**–आवृत्ति २ री. हें पुस्त लिहिलें. ह्यांत उद्योगाची आवड, सत्य, परहित, णापासून मुलांच्या अंगीं बिंबावे ह्मणून—हरि आहे. मुख्यत्वें मुलांकरितां लिहिलेलें असें पुस्तक पाहण्यांत आलें. हें सुमारें शं हिलें. त्याची आंजपर्यंत सारखी पुस्तक लिहिलें आहे. किं.

**गद्यरत्नमाला**–नि

# श्रीशुक्लयजुर्वेदीयमाध्यन्दिनवाजसनेयिनां आह्निकसूत्रावलिः ।

एतत्पुस्तकं अस्मत्पुस्तकालये अधःस्थलेषु च मूल्येन मिलिष्यति ।

मूल्यम् रु. १॥.

१ निर्णयसागरपुस्तकालये.... .... .... .... मुंबई.
२ सेठ गंगाविष्णु श्रीकृष्णदासजी ल० व्यं० प्रेस—कल्याण—मुंबई.
३ सेठ खेमराज श्रीकृष्णदासजी. श्रीव्यंकटेश्वर स्टीम प्रेस. मुंबई.
४ मे. गोपाल नारायण कंपनी. .... .... .... मुंबई.
५ पं. हरिप्रसाद भगीरथ पुस्तकालये. .... .... मुंबई.
६ पं. ज्येष्ठाराम मुकुंदजीशर्म्मा पुस्तकालये. .... मुंबई.
७ पं. श्रीधर शिवलालजी ज्ञानसागर प्रेस..... .... मुंबई.
८ विद्याभूषण कंपनी भारतमार्तंड पुस्तकालये. .... मुंबई.
९ पं. नारायण मूळजी बुकसेलर. .... .... .... मुंबई.
...कसेलर जव्हेरभाई उमेदभाई रिचीरोड—अमदावाद.
...रायण चिंतामण आठवले बुकसेलर. .... .... बडोदें.
...यणराव माधवराव तिलवणकर. कचोरीगली—बनारस.
...राम चोबे माणिकचौक पुस्तकालये. ... मथुरा.
...लक्ष्मीचंद बंबई बुकसेलर. .... .... अयोध्या
...बुकसेलर कचोरीगली. .... .... बनारस.
...पण पाठक पुस्तकालये. .... .... मुंबई.
...बुकसेलर माधवबाग. .... .... मुंबई.
...डबोले बुधवारपेठ. .... .... पुणें.
...बुकसेलर. ...... .... बेळगांव.
...गोकुळदासजी (रणछरपुस्तकशाळा) डाकोर.

## मनुस्मृति मराठी...

आवृत्ति २ री. सोनेरी बांधणी. किं. रु. ५ ...

मूळश्लोक व त्यापुढें मेधातिथि, कुल्लूकभट्टादि... मराठी भाषान्तर. विषयानु... ...णिका; शेवटीं वर्णानुक्रमानें श्लोकांची सूची आहे. कागद उत्तम जाड, छापणी ..., बांधणी मजबूत सोनेरी.

**सार्थ गणेशगीता.** गणेशपुराणांत श्रीवेदव्यासांनीं गणेश व वरेण्यराजा ह्यांच्या संवादरूपानें वर्णिली आहे. अ. ११. किं. ॥. ट. ८

(Fragments of an underlying page visible at torn edges: ...रेख. / ट. ८ / ठ, गण- / ता सर्व / ट. ।≈ / समेता । / ...विवे- / वाज / का- / बुधी... / विषयानुक्रम... / जाड किं. रु. ... / मराठी भाषांतर... / भाषक, पाठ..., सुलभ... / कषाय, चूर्ण, गुटिका, अवले... / मारण, रसायनें, मात्रा, गुटिका, / रु. २ ट. ख. ।≈ / वर अनु- / ...स्पतींचीं, / शोधन- / किं.)

